## ‘ श्रुतिकल्पलता ’



▣ ▣ ▣

[ ‘कोरेगांव’स्थिते श्रीनारायणमंदिरे श्रीमता पंडितवामनेन प्रतिष्ठापिता श्रीशेषशायिनो मूर्तिर्यस्याः पुरत उपविश्य सुप्रसिद्धां ‘यथार्थदीपिका’मिमां ‘श्रुतिकल्पलता’मन्यांश्चापि कांश्चित्प्रबंधान् विरचितवान् पंडिताग्रणीः । ]

▣ ▣ ▣

'श्रुतिकल्पलता'



▣ ▣ ▣

[ 'कोरेगांव' स्थिते श्रीनारायणमंदिरे श्रीमता पंडितवामनेन प्रतिष्ठापिता श्रीशेषशायिनो मूर्तिर्यस्याः पुरत उपविश्य सुप्रसिद्धां 'यथार्थदीपिका' मिमां 'श्रुतिकल्पलता' मन्यांश्चापि कांश्चित्प्रबंधान् विरचितवान् पंडिताग्रणीः । ]

▣ ▣ ▣

॥ श्रीः ॥

# प्रस्तावना



श्रीमद्भागवतस्य दशमस्कन्धगते सप्ताशीतितमेऽध्याये 'वेदस्तुति'नामधेयमतीवहृद्यं प्रकरणं विद्यते यत्र श्रुतिभिः परब्रह्मणोऽतर्क्यप्रभावशालि स्वरूपं वर्णितम् । समग्रस्याध्यायस्य पञ्चाशच्छ्लोकाः सन्ति येषु चतुर्दशादारभ्यैकचत्वारिंशत्तमान्ता अष्टाविंशतिश्लोका एव साक्षाच्छ्रुतिवचनात्मका 'नर्दटक'-च्छन्दसा प्रकल्पिता दृश्यन्ते । सेयं 'वेदस्तुति'र्वेदान्तजिज्ञासूनामतीवोपकरिष्यतीति बहुभिर्वेदान्तदर्शिभिर्व्याख्याभाष्यटीकाभिः समलंकृता । तत्रेयं महाराष्ट्रपण्डितवरेण वामनेन विरचिता 'श्रुतिकल्पलता' सूक्ष्मार्थप्रकाशनसामर्थ्येन विस्तृततया चापि सर्वासां टीकानां मूर्ध्नि वर्तमाना प्रकटीक्रियते ।

'श्रुतिकल्पलता'भिधानेयं 'वेदस्तुति'व्याख्या गद्यात्मका पंचत्रिंशत्स्वध्यायेषु विभक्ता वरीवर्ति । पंचभिरध्यायैर्मूलानुरोधेनाद्यत्रयोदशश्लोकान्तर्गतं विषयमादौ प्रस्तावरूपेण विवृत्यान्तिमेन पञ्चत्रिंशत्तमेनान्तःस्थितश्लोकनवकस्य व्याख्यया समुपसंहृता 'श्रुतिकल्पलता'ग्रंथकृता । ग्रंथादौ चतुश्चत्वारिंशच्छ्लोकात्मकं मंगलाचरणं विधाय तत्रैव ग्रंथरचनाहेतुरपि निर्दिष्टः । तत उपरिकथितक्रमेण विषयं प्रस्तूय पश्चात् साक्षाच्छ्रुतिवाक्यात्मका अष्टाविंशतिश्लोका आषष्ठचतुस्त्रिंशत्तमान्तैरेकोनत्रिंशदध्यायैर्विशदीकृताः । जिज्ञासूनां प्रमाणप्रत्ययार्थं श्रुतिस्मृतिपुराणादिभ्यो विपुलानि समुच्चितानि वचनानि समाहृत्य विवेचनस्यान्तर्भागे तत्र तत्र ग्रथितानि तैश्च समग्रमपि स्वप्रतिपादनं सुदृढं सुप्रतिष्ठितं च कृतं व्याख्याकृता ।

एतस्याः 'श्रुतिकल्पलता'या विरचयिता श्रीमान् वामनो गीर्वाणवाण्यां कृतबहुश्रमः पंढरपुरवास्तव्यो महाराष्ट्रकविमंडलाग्रवर्ती चेति सुप्रसिद्धमेव । पंडितवामनस्य प्रागस्मिन् 'वेदस्तुति'विषये 'श्रीधरी-चित्सुखी-शांकरी-शुकहृदया-प्रहर्षिणी-विजयध्वजा'प्रभृतयोऽनेका व्याख्याग्रंथाः प्रभूता लोकेष्वपि सम्यग्विख्याता अवर्तन्त । परं तेष्वखिलेषु सत्स्वपि पंडितवामनेन किमर्थमियमतिविस्तृता स्वतंत्रा 'श्रुतिकल्पलता' विनिर्मितेति प्रश्नः सहजतया मनस्युत्तिष्ठति । अस्य प्रश्नस्य तु स्वयं ग्रंथकृद्भिर्यदुत्तरं तद्धेतुतया मंगलाचरण एव निगदितं तदेवात्र समुद्धृतं

॥ श्रीः ॥

# प्रस्तावना



श्रीमद्भागवतस्य दशमस्कन्धगते सप्ताशीतितमेऽध्याये 'वेदस्तुति'नामधेयमतीवहृद्यं प्रकरणं विद्यते यत्र श्रुतिभिः परब्रह्मणोऽतर्क्यप्रभावशालि स्वरूपं वर्णितम् । समग्रस्याध्यायस्य पञ्चाशच्छ्लोकाः सन्ति येषु चतुर्दशादारभ्यैकचत्वारिंशत्तमान्ता अष्टाविंशतिश्लोका एव साक्षाच्छ्रुतिवचनात्मका 'नर्दटक'-च्छन्दसा प्रकल्पिता दृश्यन्ते । सेयं 'वेदस्तुति'र्वेदान्तजिज्ञासूनामतीवोपकरिष्यतीति बहुभिर्वेदान्तदर्शिभिर्व्याख्याभाष्यटीकाभिः समलंकृता । तत्रेयं महाराष्ट्रपण्डितवरेण वामनेन विरचिता 'श्रुतिकल्पलता' सूक्ष्मार्थप्रकाशनसामर्थ्येन विस्तृततया चापि सर्वासां टीकानां मूर्ध्नि वर्तमाना प्रकटीक्रियते ।

'श्रुतिकल्पलता'भिधानेयं 'वेदस्तुति'व्याख्या गद्यात्मका पंचत्रिंशत्स्वध्यायेषु विभक्ता वरीवर्ति । पंचभिरध्यायैर्मूलानुरोधेनाद्यत्रयोदशश्लोकान्तर्गतं विषयमादौ प्रस्तावरूपेण विवृत्यान्तिमेन पञ्चत्रिंशत्तमेनान्तःस्थितश्लोकनवकस्य व्याख्यया समुपसंहृता 'श्रुतिकल्पलता'ग्रंथकृता । ग्रंथादौ चतुश्चत्वारिंशच्छ्लोकात्मकं मंगलाचरणं विधाय तत्रैव ग्रंथरचनाहेतुरपि निर्दिष्टः । तत उपरिकथितक्रमेण विषयं प्रस्तूय पश्चात् साक्षाच्छ्रुतिवाक्यात्मका अष्टाविंशतिश्लोका आषष्ठचतुस्त्रिंशत्तमान्तैरेकोनत्रिंशदध्यायैर्विशदीकृताः । जिज्ञासूनां प्रमाणप्रत्ययार्थं श्रुतिस्मृतिपुराणादिभ्यो विपुलानि समुच्चितानि वचनानि समाहृत्य विवेचनस्यान्तर्भागे तत्र तत्र ग्रथितानि तैश्च समग्रमपि स्वप्रतिपादनं सुदृढं सुप्रतिष्ठितं च कृतं व्याख्याकृता ।

एतस्याः 'श्रुतिकल्पलता'या विरचयिता श्रीमान् वामनो गीर्वाणवाण्यां कृतबहुश्रमः पंडावदग्रिमो महाराष्ट्रकविमंडलाग्रवर्ती चेति सुप्रसिद्धमेव । पंडितवामनस्य प्रागस्मिन् 'वेदस्तुति'विषये 'श्रीधरी-चित्सुखी-शांकरी-शुकहृदया-प्रहर्षिणी-विजयध्वजा'प्रभृतयोऽनेका व्याख्याग्रंथाः प्रभूता लोकेष्वपि सम्यग्विख्याता अवर्तन्त । परं तेष्वखिलेषु सत्स्वपि पंडितवामनेन किमर्थमियमतिविस्तृता स्वतंत्रा 'श्रुतिकल्पलता' विनिर्मितेति प्रश्नः सहजतया मनस्युत्तिष्ठति । अस्य प्रश्नस्य तु स्वयं ग्रंथकृद्भिर्यदुत्तरं तद्धेतुतया मंगलाचरण एव निगदितं तदेवात्र समुद्धृतं

शंकां निरस्येत्। उक्तं हि तैः—

"यतो वाचो निवर्तन्ते तत्रस्थं मां बलादिव।
श्रुतिस्तुतिव्याकरणे नियोजयति नौमि तम्॥ २९॥
योऽहं मुक्तिमनादृत्य भक्तिं याचेऽखिलात्मनि।
अहो भाग्यमहो भाग्यं नियुक्तस्य तथाविधौ॥ ३०॥
यतिभिः प्रांशुभिर्नाप्तं श्रुतिस्तुतितरोः फलम्।
त्रिविक्रमात्मना जातं सुलभं वामनस्य तत्॥ ३१॥
श्रीमद्भागवतं शास्त्रं व्याकृतं श्रीधरादिभिः।
प्रकाशयति गूढार्थान्भगवान्वामनात्मना॥ ३२॥
ब्रह्मानुभवसंपन्नाः शास्त्रज्ञाश्चानसूयवः।
तात्पर्यरससारज्ञास्त एवात्राधिकारिणः॥ ३३॥
चित्सुखश्रीधरमुखाः शास्त्रतत्त्वविदोऽपि तैः।
व्याख्येयांशः क्वचित्त्यक्तस्तच्चाप्यत्र प्रकाश्यते॥ ३४॥
ये सर्वं खल्विदं ब्रह्मेत्यनिशं समुपासते।
निर्विशेषरसाभिज्ञास्तेषां तु रस ईप्सितः॥ ३५॥
चित्सुखो वा श्रीधरो वा वामनो वाऽन्य एव वा।
बुद्बुदा इव सर्वेऽपि सच्चिदानंदसागरे॥ ३६॥
अतो नातिक्रमाय स्यात्सतां व्याख्या श्रुतिस्तुतेः।
याति विस्तृततामग्रे संप्रदायसुधासरित्॥ ३७॥"

'निर्गुणस्य ज्ञानं सगुणस्य च भक्ति'रिति पंडितवराणां तत्त्वप्रणाल्या यत्सारं तेषामन्यग्रंथेष्वालोक्यते तदेवात्र 'श्रुतिकल्पलता'यां तैस्तथैव प्रतिपादितमित्यलं तस्या अंतरंगप्रकटीकरणेन पर्याप्तावसराभावात्। अस्याः 'श्रुतिकल्पलता'याः प्रतिपादनेऽगाधं बुद्धिमत्त्वं प्रगाढा विद्वत्ता महान् ग्रंथपरिचयोऽतुलं तर्कपाटवमित्येतादयः सर्वेऽपि सत्तमग्रंथप्रणेतृगुणाः सुतरां प्रभवन्तो दरीदृश्यन्ते मुद्रापयन्ति च सहृदयपाठकहृत्पटलेष्वात्मनः सुस्पष्टं बिम्बम्। तस्मात्साभियोगं विज्ञापयामो यदिममनुपमं ग्रंथमवश्यं पठेयुः सर्वे गीर्वाणज्ञा विद्यानंदानुभवाय। ये तु किल वेदान्ततत्त्वभोक्तारस्तेषां के वयं कथयितारः स्वयमेव त एनं परमादरेणात्मसात्करिष्यन्ति।

अथैतादृशस्यापूर्वग्रंथस्य प्रणेतुश्चरितविषयका जिज्ञासा रसिकवराणां चेतसि सहजतयैव प्राबल्येन प्रादुर्भवति। परं तस्याः परिपूर्णतया तृप्तिर्भवेदिति नाद्यावधि समयः संप्राप्तः। पण्डितप्रवरवामनस्य नाम यशश्च महाराष्ट्रे यदि प्रथिततरे तथाप्यमुष्य चरितविषयोऽन्धःकारमय्यां गुहायां निहित इवाधुनाप्यज्ञात एव वर्तते।

यदेतद्विषयकं वृत्तं प्रचलितं लोकेऽखिलमपि तत्केवलमाख्यायिकारूपं विसंवादिकथामयं सर्वथा भ्रमावहं च । सद्गुरुसाक्षात्कारप्रसंगमेकं वर्जयित्वा स्वयं ग्रंथकृता नैव कुत्रापि काऽप्यन्याऽऽत्मकथा समुपदिष्टा । सद्गुरुसाक्षात्कारं तु बहुमन्यमानो ग्रंथकृन्नितान्तमसौ संस्मरणीय इति कृत्वा सप्ताष्टसु स्वरचितेषु ग्रंथेषु संपुटितवान् विशेषतस्तु विस्तारतः 'निगमसार'नामके महाराष्ट्रप्रबंधे । तत्र 'निगमसार' एव ग्रंथप्रणयनकालो निर्दिष्टो नान्यत्र कस्मिन्नपि । पंचग्रहबाणभूमिते ( १५९५ ) शाकाब्दे 'निगमसार'प्रबंधो विरचितः पंडितप्रवरैः । तथैकस्मिन्नेव स्वविरचितप्रकरणे निर्दिष्टं 'गिरा' इति स्वदारनामान्यतरस्मिन्नेवोल्लिखितं 'देवराय' इत्यात्मजाभिधानं च परित्यज्य न क्वापि निजचरितमधिकृत्य किमपि वचनं स्पष्टार्थकं तैः परिक्षिप्तं वर्तते । अन्यान्यपि कानिचिदल्पान्येव स्वसंबंधकानि वचनानि तैः परिक्षिप्तानि दृश्यन्ते तानि तु सर्वथा श्लेषात्मकानि सुदूरान्वितानि च । तथा वामनस्य समकालीने तदुत्तरकालीने चास्मत्पूर्वतरे महाराष्ट्रसारस्वते श्रीमद्रामदासीयसांप्रदायिकानामेव केषुचिद्ग्रंथेषु यद्यप्यानुषंगिकाः परस्परविसंवादिनश्च तर्हि तच्चरितविषयकाः केचित्कथोल्लेखाः संदृश्यन्ते परं तैर्विना नान्येन केनापि ग्रंथकारेण तद्विषयो ग्रथितः समुपलभ्यते । अर्वाचीनेऽपि काल इतिहासाचार्यौ राजवाडे 'महाराष्ट्र-सारस्वत'कृच्च भावे इत्येतयोरेव वामनचरितोपलब्धिविषयकाः परिश्रमा यद्यप्यल्पमात्रास्तर्हि सुप्रतिष्ठितत्वात्तदभ्यासकांस्तावदुपकुर्वन्ति । ये तु संशोधकब्रुवैश्चिकित्सकंमन्यैश्च कैश्चिदितरैरस्मिन्विषये केचिदायासाः कृतास्ते बहुधा विपरीता विकृतफलवन्तश्च केवलं तदभ्यर्थिनां चेतांसि संशयांदोलमारोप्यातीवान्दोलयन्त्येव ।

एवं सति पंडितवराणां चरितसाधने यः प्रभूतः प्रयासोऽद्यावध्येकादशवर्षमिते काले स्वतंत्रेणैतिहासिकसंशोधनमार्गेणास्माभिः कृतस्तस्यात्र संकोचवृत्तितोऽनुल्लेखः कथं समीचीनो भवेत् । वामनचरितविषये यद्यदन्यैर्लेखकैरद्यावधि लिखितं तत्तत्सर्वं सम्यक् परिशीलितमस्माभिस्तदर्थं, वामनसंबंधिन्यो या या आख्यायिकाः प्रचलितास्ताः सर्वाः सम्यक् चिकित्सिताः, वामनचरणपूतान्यनेकानि स्थलानि प्रत्यक्षीकृत्य तत्रोपलब्धं तद्वृत्तं समुपार्जितं, स्वयं वामनस्य तत्कालीनानां चान्येषामपि सकलानां ज्ञातानां ग्रंथप्रणेतॄणां प्रबंधान्समीक्ष्य तेभ्योऽधिगतानि तच्चरितसूत्राणि संगृहीतानि च । एतेन सकलेन साहित्येन 'श्रुतिकल्पलता'कारस्य पंडितवामनस्य समग्रचरितात्मकं विस्तृतं प्रबंधं प्रणेतुकामा वयं संप्रति तत्कार्यं साक्षादंगीकृतवन्तो यथावसरं च स विद्वज्जनपरिचर्यासुखमनुभविष्यति । किंतु तत्प्राक् तैरस्मत्परिश्रमैरधिगतं वृत्तं संकलय्यास्याः 'श्रुतिकल्पलता'याः प्रणेतुरतिसंक्षिप्तमात्रो जीवनवृत्तान्तो वर्ण्यतेऽत्र प्रासंगिकत्वात् ।

श्रीशालिवाहनशकस्य षोडशशतकोत्तरार्धसप्तदशप्रथमपादयोरन्तरालस्थितो हिंदुवंशावतंसेन प्रौढप्रतापवर्तिना श्रीमच्छिवछत्रपतिना निर्मितो महाराष्ट्रमहोत्कर्षकाल एवास्यापि पंडितकुलमंडनस्य वामनस्य जीवनावधिः। स पंडितवर ऋग्वेदीयः पाराशरगोत्रभृति 'शेष'इत्युपाभिधे ब्राह्मणकुले लब्धजन्मा देशस्थजातिभाक्। 'विजापुरा'ख्ये नगर आत्तजनुरसौ तत्रैव बाल्यं क्षपितवान्। यवनाधिष्ठिते तस्मिन्नगरे समुपजातधर्मत्याजनभयौ तस्य पितरौ परित्यज्य तत्स्थानं तदनुबंधिनीं च सर्वां संपदं वाराणसीनिवासं स्वीचक्रतुः। अथ वाराणस्यामन्यदपि 'शेष'कुलं विद्वत्तया सुप्रथितकीर्त्यासीत्। प्राय उभयोरपि 'शेष'कुलयोराप्तस्वकीयात्मकः संबंधो भवेदित्यनुमीयतेऽस्माभिः। तथा च वाराणसीं प्राप्यानंतरमचिरेणैव कालेन प्रवासेऽपि वा वामनस्य पितरौ वार्धक्याक्रान्तौ नानाविधशारीरिकमानसिकक्लेशानसहमानाविहलोकं त्यक्तवन्तौ स्यातामित्यप्यस्मदीयमनुमानम्। पितृस्वर्वासानंतरं वामनस्य सर्वमपि विद्याध्ययनं वाराणस्यामेव संजातं प्रकृष्टप्रज्ञागुणेन च सोऽनेकशास्त्राणां परं पारमगच्छत्। ततो दक्षिणापथमभिप्रतस्थो मार्गे बहून् पंडितान्पराभूय तेभ्योऽजितपत्रकाणि गृहीत्वा स्वबुद्धिप्रभावं सर्वत्र समदर्शयत्। एतद्विषयकास्वाख्यायिकासु वामनोऽतीव विद्यामदाचित इति यच्छ्रूयते तत्तु भ्रमात्मकमेव। यतस्सत्यं 'श्रुतिकल्पलता'कारः सर्वथैव शालीनवृत्तिरैकान्तिकनिष्ठश्च भगवत्यासीत्।

अथ महाराष्ट्रभुवं प्रतिनिवृत्तेन पंडितवामनेन बहवः सत्पुरुषाः समासेविताः। तेषां सहवासेऽत्युत्कटात्मजिज्ञासा संजाता वामनस्य हृदि गुरोरेवात्मप्रत्यायकं सामर्थ्यमितिप्रतिपादकैश्च छांदोग्योपनिषद्गतैर्वचनैस्तस्या जिज्ञासायाः परिपूरणस्य साधनमपि तस्य दर्शितम्। अतस्तानि छांदोग्यवचनान्यनुसृत्यात्मसाक्षात्कृतिकारकस्य सद्गुरोरन्वेषणाय प्रयतमानः स बहु बभ्राम। अनवाप्तकामस्तु निरतिशयं विषण्णो भूत्वा गंगायमुनयोः संगमे कृतदेहत्यागनिश्चयः प्रयागं प्रातिष्ठत। मलयाचलं प्राप्तस्तु तत्रैकस्मिन्दिन आत्मानात्मविचारमग्न ओदनं पचन् कुतोऽप्यागतं हास्यध्वनिमशृणोत्। ततो नेत्र उन्मील्योपरि पश्यन् काषायांबरवृतं कंचिद्यतिवरमाकलितवान् द्राक् संनतश्च तस्य पादयोरपतत्। यतिवरेण तस्य 'भार्गवी वारुणी'विद्या मुहूर्तद्वयमात्रेणैवोपदिष्टा तत्कालेन च वामनः कृतात्मदर्शनः संजातः। वरुणेन पुत्राय स्वशिष्याय भृगवे प्रदत्तत्वात्सा ब्रह्मविद्या तयोः शिष्याचार्ययोर्नाम्ना विख्याता भूता तैत्तिरीयोपनिषदि वर्तते। तस्यामन्नप्राणमनोविज्ञानानंदेति पंचकोशाः समुपदिष्टाः सन्ति। 'सच्चिदानंदा'भिधः स यतिवरः शृंगेरीपीठस्थ आचार्य एवासीत्। अस्यां 'श्रुतिकल्पलता'यामपि तस्य स्वगुरोर्नामनिर्देशः पंडितेन कृतो दृश्यते। ( जिज्ञासवः पाठकाः १६–६४७०–८३तमेषु पृष्ठेषु तं पश्येयुः। )

एवं सद्गुरोः 'सच्चिदानंद'यतिवराल्लब्धप्रसादो वामनः पुनर्महाराष्ट्रानागत्या-त्रैवावसत् प्रणीय च महाराष्ट्रभाषायां बहून्प्रबंधानन्वगृह्णात्प्राकृताञ्जनानात्मनो विद्याविलासेनात्मज्ञानेन च । सुदीर्घस्तस्य कालः समर्थापरनाम्नां श्रीरामदास-स्वामिनां साक्षात्संनिकर्षे तेषां शिष्यवरैः सह समयादित्यनुमीयते । श्रीरामदासानां प्रथमं दर्शनं पंडितवामनस्यर्तुरसबाणभूमिते ( १५६६ ) शाकवर्षेऽभवदित्येक-स्मिन्नैतिह्य एव लेखे प्रतीयते । श्रीरामदासानां प्रेरणाया एव 'यथार्थदीपिका'-नाम्नी द्वाविंशतिसहस्रप्रसराऽतिविस्तीर्णा श्रीमद्भगवद्गीताटीका पंडितवामनेन विरचिता सुप्रसिद्धा विद्यते महाराष्ट्रवाण्याम् । अन्यटीकाकारैः प्रतिपादितानि नानाविधान्ययथार्थानि मतानि समूलं खंडितानि पंडितवरेण स्वनामसमनुसारि-ण्यामस्यां 'यथार्थदीपिका'यां केवलं च श्रीभगवद्वचनाभिप्रायः यथार्थं सुस्पष्टं च प्रकाशितः । 'कर्मतत्त्व' 'नामसुधा' 'चित्सुधा' 'ब्रह्मस्तुति' 'भगवद्गीतायाः समश्लोकी टीका' 'भर्तृहरिशतकत्रयस्य समश्लोकी टीका' इत्येतादयोऽन्येऽपि बहवः प्रबंधास्तेन रचिता बह्व्यश्च श्रीमद्भागवतान्तर्गताः कथा अपि महाराष्ट्रवचसालंकृत्य परिणमिताः । 'सुश्लोको वामनस्य' इति सुप्रसिद्धो न्यायो 'यमकपटुः' इति चोपपदं तस्य काव्यकलानैपुण्यं प्रकटयतः ।

यदि पंडितवामनस्याद्वितीयगीर्वाणविद्याप्रावीण्यं लोके प्रख्याततमं तर्हि गीर्वाणवचसा प्रणीतौ तस्य द्वावेव लघीयांसौ ग्रंथावद्यावधि साक्षादुपलब्धावा-स्ताम् 'अनुभूतिलेशः' 'सिद्धान्तविजय'श्च । 'श्रुतिसार'नामकोऽपरोऽपि ग्रंथः पंडितेन विरचित इति तदीयमहाराष्ट्रग्रंथान्तःकृतात्तन्निर्देशादवगम्यते न तु कस्यापि स प्रत्यक्षं हस्तं प्राप्त इति श्रूयते । अधुना खल्वस्याः 'श्रुतिकल्पलता'याः प्रापणा-द्वामनो महान् गीर्वाणपंडित इति तत्कीर्तिर्न केवलं स्तुतिरूपा किंतु भूतार्थकथन-मेवेति निर्भ्रान्तं जातम् । इष्टार्थप्रबोधकत्वं सुगमत्वं चेति वामनस्य वाक्सरण्याः प्रमुखौ गुणौ । तौ चास्यां 'श्रुतिकल्पलता'यामपि तस्याः प्रतिपाद्यविषये वेदान्त-तत्त्वज्ञानात्मके स्वभावतोऽतिगहने सत्यपि सम्यक् प्रतीयेते । वामनस्य कीर्ति-रखिलायां भुवि पुनः प्रकर्षेणोज्ज्वलिता भवेदनेन ग्रंथवरेणेत्येतस्मिन्नास्ति कोऽपि संदेहलेशः ।

पंडितो वामनः कृतगृह्याग्निपरिग्रह आसीत् । स बाल्य एव विजापुरस्थ ऊढभार्यो वाराणसीस्थो वा पश्चादिति न शक्यं निश्चेतुम् । गृहीताग्नेस्तस्य भार्या 'गिरा'ख्याऽऽसीदिति कथितं प्रागेव । तस्या एव कृते तेन 'प्रियसुधा'नामक-मात्मोपदेशपरं प्रकरणं 'बृहदारण्यका'न्तर्गतं 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' इत्यादिं मैत्रेयी-याज्ञवल्क्यसंवादमनुसृत्य विरचितम् । 'देवराजा'-भिधान एक एव पंडितस्य सूनुरभवदित्यपि कथितं पूर्वमेव । तस्यापि कृत 'उप-

देशमाला'नामकं प्रकरणं ग्रथितं पंडितेन यस्मिन्नेष संबंधः स्पष्टमेवोल्लिखितः। 'स्वामी'त्युपपदालंकृतं वामनस्य नाम क्वचित्संपश्यन्तः केचित्तेन परिणतवयसि चतुर्थाश्रमः परिगृहीत इति यन्मन्यन्ते तन्नूनं भ्रमजनितमेव। मोक्षस्य प्रसाधनार्थं चतुर्थाश्रमस्य महत्यावश्यकताऽस्त्येवेति नेति तेन सविस्तरं सप्रमाणं च प्रतिपादितं स्वेषु 'यथार्थदीपिका'दिष्वनेकेषु महाराष्ट्रग्रंथेषु तथा चास्यां 'श्रुतिकल्पलता'-यामपि। किंतु लोकसंग्रहस्य कारणार्थं गृह्याग्न्यादीनां कर्मपरसाधनानां परिग्रहमेव सुतरां समर्थितवान् सः। (जिज्ञासुभिः पाठकैः ५०तमादारभ्य ५७तमपर्यंतेषु पृष्ठेषु स विषयो द्रष्टव्यः।) अतः संन्यासाश्रमस्तेन नैव स्वीकृतः 'स्वामि'पदं च केवलं तस्य महान्तं पारमार्थिकमधिकारमेव व्यनक्तीति सुनिश्चितं नापेक्षते विस्तरम्।

भूषणभूतो महाराष्ट्राणामयं पंडिताग्रणीर्मुनिभूरसमहीमितेऽब्दे (१६१७) शाके 'वांई'ग्रामतः क्रोशद्वयं स्थिते 'गुन्हेघर'नाम्नि खेटके पांचभौतिकं कलेवरं विसृष्टवान्। किंतु 'गुन्हेघर'निकटवर्तिनि 'भोगांव'नाम्नि क्षुद्रखेटके कृष्णायाः पवित्रे तटे तदग्निसंस्कारमलभत। एतत्खेटकद्वयमध्ये कृष्णायाः प्रसन्नः प्रवाहः संनिहितात् 'धौम'नाम्नः पुराणक्षेत्रादागत्य 'वांई'क्षेत्रमभिप्रवृत्तो वर्तते। उभयो-रपि तयोः खेटकयोः समानैव स्मशानभूमिः 'भोगांव'स्थिता। तस्मात्तत्रैवानीय वह्निसंस्कृतः पंडितस्य शवः रचितं च दहनभूमेरुपरि तत्स्मारकं वृंदागृहम्।

अपरं च वृंदावनं वामनस्य कृते 'विश्वात्मक गोस्वामी'इत्यभिधेन तच्छिष्येण 'सातारा'मंडलस्य 'वाळवें'विभागान्तवर्तिनि 'कोरेगांव'ग्रामे समुत्थापितं वर्तते यस्मिन्वामनस्य पादुके श्रीमद्भागवतधारका च दारुपट्टिका स्थापिताः सन्ति। एतद्वृंदावनं 'कोरेगांव'स्थितस्य पुरातनस्य श्रीनारायणमंदिरस्य वाटायां मूर्ति-सन्मुखं तिष्ठति। श्रीनारायणस्य मूर्तेः सन्निधौ स्वयं वामनेन स्थापिता श्रीशेष-शायिनः कृष्णशीलोत्खाता रमणीया मूर्तिर्विद्यते। अस्य शेषशायिनोऽग्रतः समुप-विश्य पंडितवरेणोपरिनिर्दिष्टा 'यथार्थदीपिका'नामिका श्रीमद्भगवद्गीताटीका विलिखिता। इममपि 'श्रुतिकल्पलता'प्रबन्धं तस्मिन्नेव श्रीनारायणमंदिर उप-विश्य विराचितवान् पंडित इत्यस्मभ्यो निश्चितं प्रतिभाति। अस्य वृंदावनस्य परिचर्यायाः कृते श्रीशिवसूनुना छत्रपतिराजाराममहाराजेन 'चावर'मितं क्षेत्र-मग्रहारीकृतमस्ति तद्विषयकं च राजपत्रद्वयमप्युपलभ्यते।

वैशाखमासस्य शुक्ला षष्ठी वामनस्य पुण्यतिथिरिति परंपरया परिपाल्यते। किंत्वधुना पंडितस्य पुण्यतिथ्युत्सवो द्वयोरेव स्थानयोः संपद्यते 'भोगांव'ग्रामे 'जोगेश्वरी'ग्रामे च।

पंडितस्य वामनस्य शिष्यपरिवारो नातिविस्तृत इति प्रतिभाति । साम्राज्य-विश्वनाथ-हरि-बापु-नागेशात्मजविठ्ठलानां तच्छिष्याणां नामानि महाराष्ट्रप्रबंधेषूपलभ्यन्ते । तेषां साम्राज्येन वामनप्रणीतं 'अनुभूतिलेश'नाम गीर्वाणप्रकरणं महाराष्ट्रवाण्या पद्यमयं परिणमितं विद्यते । वामनस्य संप्रदायो वंशकराश्च सांप्रतं न क्वापि संदृश्यन्ते ।

अलोकसामान्यं विद्यावत्त्वं सुविख्यातं च यश इति सत्यपि स्वाधीननृपाश्रय-साधने यत्पंडितवामनेनाखिलं निजायुः प्राकृतजनबोधायैव प्रदत्तं तेन स्फुटं प्रतीयेते तस्य दृढा विरक्तिः साधुता च । धन्यः सुधन्यः खल्वस्माकमयं महाराष्ट्रदेशोऽस्य श्रीवाग्देवीकंठमणेः संभवेन ।

मुंबापुर्या अन्तिके 'जोगेश्वरी'ग्रामे 'सद्भक्ति-मंदिरे'ऽधुना वामनीया ग्रंथाः सायासमधीयन्ते विशेषतस्तत्रसंमिलद्भिः 'सद्भक्ति-प्रसारक-मंडल'स्य सभासदैः । वैकुंठनिवासभाक् रामचंद्राभिधो शंकरात्मजो 'टाकी'त्युपाह्वः श्रुतवान् परमार्थाधिकृतो महाशयोऽस्य 'सद्भक्ति-मंदिर'स्य प्रतिष्ठापकः पंडितस्य निष्ठावान् भक्त आसीत् । तेन हि त्रिचतुरष्टैकमिते ( १८४३ ) शाके वर्षे 'भोगांव'वर्ति वामन-समाधिस्थलं जीर्णं दृष्ट्वा समुद्धृतम् कृततन्नामकालाद्युल्लेखा शिलाऽपि तत्र संनिवेशिता च ।

श्रीटाकीमहाशयस्यैव कृपया तदाशीर्वचसा चेयं पंडितविरचिता ' श्रुतिकल्प-लता ' प्राकाश्यं नीयते । तेन हि 'श्रुतिकल्पलता'याः पुस्तकं कारवारनिवासिनो ' श्री० मंगेश रामकृष्ण तेलंग 'सकाशादुपलब्धम् । तच्च प्रथमं ' दत्तात्रेय मंजाप्पा नाडकर्णी 'इत्यनेन कारवारनिवासिना कस्माच्चित्पुराणपुस्तकादष्टादशशतोत्तरसप्त-दशमिते ( १८१७ ) शकसंवत्सरे लेखान्तरितम् । कालान्तरेण तत् 'तेलंग'-महाशयहस्तगतमभवत्तत्रैव चानल्पानि वर्षाण्यतिष्ठत् । 'तेलंग'महाशयेन तस्य प्रकाशनाय कृता बहवः प्रयत्नास्तदा व्यर्थीभूताः । किन्तु प्राग्वर्षत्रयात् 'सद्भक्ति-प्रसारक-मंडल'प्रेरिताः श्रीयुताः ' तुकाराम पुंडलिक शेट्ये 'इत्येते प्रसिद्धा ग्रंथ-विक्रय-प्रकाशनपराः 'श्रुतिकल्पलता'याः प्रकाशने बद्धपरिकराः संप्रति कृतार्थाश्च संभूतास्तत्प्रकाशनेन । पुस्तकस्य संशोधने 'निर्णयसागर'मुद्रालयस्थिता ' वासु-देव लक्ष्मण पणशीकर ' इत्याख्याः शास्त्रिणस्तथा मुंबापुरस्थ-'सेंट झेवियर'-नाम-महाविद्यालयस्य संस्कृताध्यापका विद्वद्वर्याः कैलासवासिनो भवानीशंकरशास्त्रिणः सुखठणकरोपाह्वाश्चातीव कृतश्रमा मुद्रणे च 'सद्भक्ति-प्रकाश'मुद्रणालयस्याधिकारिणः श्रीयुता ' मंगेश रामचंद्र टाकी 'महोदयाः सुतरां दत्तावधाना इत्येतन्निवेदयितुं

सुमहोत्साहा वयम्। भवानीशंकरमहोदयास्त्वेतं ग्रंथं सम्यक्तया प्राकाश्यमाप्तं द्रष्टुं नास्मिञ्जगति विद्यन्ते इति केषां कथं न शोचनीयं भवेत्। तेलंगाः पंडितमंगेशा एव मुद्रितमेनं ग्रंथं सूक्ष्मदृशा संशोध्य 'शुद्धिपत्रक'सनाथं कृतवन्तः। सर्वेऽप्येते नितरां धन्यवादार्हा महाभागाः।

पंडितवामनस्येमां 'श्रुतिकल्पलतां' महाराष्ट्रगिरा विनाटयितुकामा वयमधुना सप्रयत्नाः स्मः। अचिरादेव तदपि कार्यं समाप्येत प्राकाश्यं च नीयेतेत्याशास्महे। अस्याः प्रस्तावनाया लेखने श्रीमद्भिः 'केशव लक्ष्मण ओगले' इत्येतैः संमाननीयैरस्मत्सुहृद्भिः परमं साहाय्यं कृतमिति तेषामप्यत्र कृतज्ञतां दर्शयामः।

नौपाडा – ठाणें।
चैत्रशुक्लप्रतिपद्।
(ध्वजारोपणदिनम्)
शकाब्दः १८५८

रामचंद्र महादेव आठवले।
('मसूराश्रम'कार्यकर्तृवटकः।)



# SHRUTIKALPALATĀ.

## INTRODUCTION.

The 87th chapter of the tenth book of the Bhagavata Purana contains a charming discourse entitled 'The Veda-Stuti', wherein the Vedas incarnate are represented to have extolled the Almighty Brahman, and which is in a way an epitome of the Vedanta. The chapter consists of fifty verses, twenty-eight of which, viz., fourteenth to forty-first both inclusive, form the main discourse couched in the meter named Narthataka. This eulogy of Brahman by the Vedas, being of great value to the student of the Vedanta, has been commented upon by a number of Vedanta scholars. One of the commentaries, *Shrutikalpalata* by name, written by Waman, the well-known Marathi poet and profound scholar, is presented to the learned public in the following pages, being by far the best and the bulkiest of all.

The commentary, which is in prose, extends over thirty-five chapters. The first five chapters form the introduction and follow the first thirteen verses of the original discourse, the last chapter being the explanation of the concluding nine verses of the original. Waman, in his own introduction consisting of forty-four verses, first makes a benediction and explains the reason that prompted him to write the commentary. The remaining twenty-nine chapters give an exposition of the twenty-eight verses of the real discourse. The commentary bristles with quotations culled out of the Vedas, the Smritis and the Puranas, and suitably introduced so as to make the exposition accurate and authoritative.

Waman, the author of the commentary, was, as is well-known, a great Sanskrit Pandit and a Marathi Poet of no mean order. Before him there existed many a commentary on the Veda-Stuti such as Shridharee, Chitsukhee, Shankaree, Shuka-hridaya, Praharshinee, Vijayadhwaja, which were familiar to the scholars. The question then arises why Waman wrote the present extensive treatise. The author has himself given an answer to

this question in his introductory verses, viz., 29th to 37th (*vide* the Sanskrit Introduction). The main reason, according to him, is the prompting of the inner voice.

Space does not allow us to present a detailed summary of the treatise. Suffice it to say, that the formula 'the Knowledge of the Unqualified and Devotion to the Qualified,' which is the underlying principle of Waman's philosophy, as seen in his other works, is expounded in this also. The author displays profound scholarship, accurate understanding and deep study of Vedantic literature in this exposition, and is sure to leave an indelible impression on the mind of the appreciating reader. We, therefore, request the Sanskrit-knowing reader to read this excellent treatise even for the enjoyment of literary pleasure. It is needless for us to urge the Vedantists to do so, as they will, of their own accord, peruse it with high regard and make its contents their own.

The curious reader will naturally have a strong desire to know the life-history of the author of such a valuable work, but, unfortunately, the time for the full satisfaction of that desire has not yet come. Though the name of the renowned author is widely known in Maharashtra and his Marathi poems are read throughout the province, the story of his life is still almost hidden in the dark. What little is at present known about him consists mostly of legendary stories contradicting one another and so of a dubious nature at their best. Excepting the single incident of his sudden meeting with his Guru, Waman makes no reference to himself. But that incident is mentioned by him in about seven or eight of his works, especially in the *Nigamasara*, which is a treatise in Marathi, probably because he attached great value to it and considered it to be worth being commemorated. In the Nigamasara alone and in no other book does he give the date of the composition of the work which is Shaka year 1595 (1673 A. D.). In another book he makes a reference to his wife *Gira* by name, and in a third to his son named *Devaraya*. But for these, there is no reference to anything about his personal history in any of his known works. Other minor references, believed to belong to his personal history, are of a far-fetched character and mostly

based on paronomastic wording. In the works of the followers of the School of Ramdas, written between Waman's time and the present one, there are a few references to his personal history, but they are merely incidental and often contradict one another. And if we omit these, no author appears to have touched the life-story of Waman. In recent times, the late Mr. V. K. Rajwade, the great promoter of historical research, as well as Mr. Vinayak Bhave, the author of Maharashtra Saraswat or a history of Ancient Marathi Literature, laboured hard to find out some material for Waman's life-story and the result of their work is likely to be of use to students of the subject. But the findings of many of the so-called research workers are mere baseless surmises, doubtful at their best, and make confusion worse confounded.

In these circumstances, it would be false modesty not to make a mention of the vast amount of my own labour in the field of independent historical research for the last eleven years. I have, during these years, ransacked all that has been written about the life of Waman, have scrutinized all the stories that are current about him, have personally visited various places associated with Waman's name and collected whatever information could be gathered on the spot, and have gone through all the known works of contemporary or later writers and brought together all possible references to Waman's life found in them. With the help of all the material thus collected, I have undertaken to write a complete story of the life of Waman and hope that, in due time, it will be offered for the service of the learned. For the present, however, I give here a succinct summary of the whole research work done by me in the field of the life-story of the author of *Shrutikalpalata.*

The period of the life of our learned Pandit synchronizes with the epoch marked with the rise of glory in Maharashtra brought about by Shivaji, the mighty champion of the Hindu race and civilization between the latter half of the 16th century and the first quarter of the 17th of the Shaka era. Waman came of a Brahmin family of the Deshastha section, of the surname Shesha,

bearing Parashar Gotra. Having been born in Bijapur he passed his childhood in that town. The place being, however, the capital of a Mahomedan king, was abandoned by Waman's parents, for fear of being obliged to give up their own faith, along with whatever property they owned there, and they set off for Benares. Another Shesha family had been already residing then at Benares and was well-known for its learning. We believe that both these families were probably related to each other and that Waman's parents must have died, if not on the way, soon after reaching Benares. After their demise, Waman completed his course of study at Benares and, being a young man of keen intellect, attained proficiency in various subjects. Thereupon, he started back for the Deccan, and on the way vanquished many a learned man in argument, wresting confessions of defeat from them. The stories about the vanquishing of the Pandits all suggest that Waman had been puffed up with the pride of learning, but it has no foundation in fact. If the author of *Shrutikalpalata* was anything at all, he was of a cultured modest nature, and entirely devoted to God.

On his return to Maharashtra, Waman served at the feet of a number of saintly persons. In their company a keen curiosity was produced in him for the knowledge of the Self; and his mind was thoroughly imbibed with the idea that a Guru alone has the power of giving direct knowledge of the Self, when he found in the Chhandogya Upanishad statements to that effect. With a view, therefore, to secure a Guru that would give him the realization of the Self as suggested in the Upanishad, Waman travelled a good deal, but not having secured him, he became extremely disappointed, and, making up his mind for that reason to throw himself into the confluence of the Ganges and the Jamna at Prayag, started in that direction. At *Mount Malaya*, as he was one day cooking rice, his mind all absorbed in the contemplation of Self and not-Self, he happened to hear a laughing voice. He opened his eyes and, looking up, saw before him a certain ascetic clad in purple. At once he bowed down and fell at the ascetic's feet. The latter then taught him

the well-known '*Bhargavi-Varuni-Vidya*' within a short time and Waman came at once into the realization of the Self. This knowledge is said to have been given by Varuna to his son and pupil Bhrigu and came, therefore, to be known after the names of both. It forms a part of the Taitireeya Upanishad, and teaches of the five *Corpora*, viz., the physical, the ærial, the mental, the intellectual and the delectable. The name of the ascetic was Sacchidananda and he is said to have been an incumbent of the Shringeri Math (*vide* pages 16, 64, 70, 83 of the treatise wherein his name is mentioned by our author). Having thus secured the favour of Sacchidananda, Waman returned to Maharashtra and stayed there permanently. For the edification of the people he wrote many books in Marathi and obliged them with the help of his vast learning and the knowledge of Self. It seems he passed a good deal of his time in the company of Saint Ramdas, otherwise known as Samartha, as well as of his pupils. A historical record shows the Shaka year 1566 to be the time of his first meeting with Ramdas. It was at the latter's instance that Waman wrote his well-known commentary on the Bhagavad-Gita, in Marathi, entitled *Yatharthadipika*. In this extensive commentary, which is significantly so called, the Pandit has refuted the various arguments of other expounders which he deemed to be far from the truth and clearly put forth the real import of the author of the Gita. He also wrote many other books in Marathi, viz., Karmatattva, Namasudha, Chitsudha, Brahmastuti, another commentary on the Gita in corresponding meter, and translated in verse many charming stories from the Bhagavata Purana.

Though Waman has been known as a great Sanskrit Pandit, only two small tracts, *Anubhutilesha* and *Siddhanta Vijaya*, are so far known as his works in Sanskrit. It seems he wrote another book in Sanskrit, viz., *Shrutisara*, for he mentions its name in certain of his Marathi books, but it has not come to the hand of any searcher as yet. Now that his *Shrutikalpalata* has been discovered and published, his fame as a profound Sanskrit scholar has been proved to be founded on fact and not a mere verbal eulogy. Accuracy and perspi-

cuity, the two great merits of Waman's writings, are clearly visible in this book also, though its subject-matter is philosophic and abstruse. Waman's renown will once again shed its brilliant light on account of this publication.

Waman had assumed the household sacred fire or Agnihotra. It is not possible to say definitely whether he was married while at Bijapur or later on at Benares. His wife was *Gira* by name as has already been mentioned. It was for her sake that he wrote *Priyasudha*, a short discourse on the importance of the knowledge of the Self, based on the dialogue between Maitreyee and Yajnavalkya in the Brihadaranyaka Upanishad. He wrote another discourse named *Upadeshamala* for his son *Devaraya.* The title Swami, which is at times attached to his name, is considered by some to indicate that he took Sannyasa in his old age. But it is not a fact. In his works he has discussed at great length the necessity of resorting to Sannyasa for the attainment of Moksha, but for the sake of helping the common people he strongly advocates the assumption of sacred fire (*vide* pages 50-57). It is clear that he did not take Sannyasa and that the title Swami only indicates his high spiritual attainments.

Waman died in Shaka year 1617 at *Gurheghar*, a hamlet about four miles from Wai, but his body was cremated at *Bhogaon,* a small place on the bank of the Krishna. The river coming from Dhaum and going towards Wai flows between these hamlets, which have a common cremation ground at Bhogaon. A structure stands on the site of his cremation.

There is another *Vrindavan* built to commemorate his name by Vishvatmaka Goswami, a pupil of Waman, at Koregaon in Walwa Taluka of the Satara District. It contains his slippers and the wooden board on which Waman used to hold the book of the Bhagavata Purana. It stands facing the idol of Narayana in the old temple dedicated to him. Beside this idol of Narayana, Waman himself put up a beautiful black stone image of *Sheshashayi,* and sitting in front of this image, Waman is said to have written

the *Yatharthadipika.* We believe that the present treatise also was written by him in the same place. Rajaram, son of Shivaji, donated a piece of agricultural land for the maintenance of this *Vrindavan*, as can be seen from a record to that effect. The day of his death anniversary, as traditionally observed, is the 6th of the bright half of Vaishakha. It is observed, for the present, at two places only—at *Bhogaon* and *Jogeshwari.*

Waman does not appear to have had many pupils. The names of his pupils—Samrajya, Vishwanath Hari, Bapu and Vithal, son of Nagesha—are found in Marathi works. Samrajya, among them, translated his Sanskrit *Anubhutilesha* into Marathi. The followers of Waman's school or his descendents are now nowhere to be seen. In spite of his extraordinary profundity of learning as well as wide renown which could have easily procured for him royal patronage, Waman dedicated all his life to the service of the common people, and this fact clearly speaks for his perfect disinterestedness and saintly character. Blessed indeed is Maharashtra that gave birth to a son that turned out to be such a brilliant literary gem.

Waman's works are now being carefully studied at Jogeshwari near Bombay in the *Sadbhakti-Mandir*, especially by the members of the *Sadbhakti Prasarak Mandali.* The founder of the Mandir, the late revered Ramachandra Shankar Taki, was a devoted votary of Waman and repaired his sepulchre at Bhogaon in 1843 Shaka.

This edition of *Shrutikalpalata* is being published under the blessings of the late Taki Maharaj. He obtained its manuscript from Mr. M. R. Telang of Karwar. It was a copy made by one Mr. D. M. Nadkarni of Karwar from an old manuscript in the Shaka year 1817. In course of time it came into the possession of Mr. Telang and remained with him for many years.

His efforts to publish it proved futile. However, about three years ago, Mr. Tukaram P. Shetye, a bookseller and publisher of Bombay, undertook the task of publishing the same at the request of the Sadbhakti Prasarak Mandali and has succeeded

in carrying it to the end. Vasudeo Shastri Panshikar, Shastri of the Nirnaya Sagar Press, as well as the late Bhawani Shankar Shastri Sukhtankar of St. Xavier's College took great pains in seeing it through the press, while Mr. M. R. Taki carefully supervised its printing. We very much regret to find that Bhawani Shankar Shastri is not now amongst us to see the book coming out of the press. Mr. Telang read the printed forms of the book very carefully and made up the errata attached to it. All these kind gentlemen deserve our sincere thanks.

I have a mind to put up this treatise in the Marathi garb and have commenced working at it. I hope I shall be able to finish the work soon and to offer it to the public. I must express here my sincere gratitude to my friend Mr. K. L. Ogale, who has rendered invaluable help to me in writing this introduction.

NAUPADA, THANA.
*April 24, 1936.*

R. M. ATHAVLE
*(of the Council of Masurashram.)*

# व्याख्यातपद्यानुक्रमणिका.


| | श्लोकः | | अध्यायाङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|
| १ | ब्रह्मन्ब्रह्मण्यनिर्देश्ये | ... | १ | ३ |
| २ | बुद्धीन्द्रियमनःप्राणान् | ... | २ | ६ |
| ३ | सैषा ह्युपनिषद्ब्राह्मी | ... | ५ | १८ |
| ४ | अत्र ते वर्णयिष्यामि | ... | ५ | १९ |
| ५ | एकदा नारदो लोकान् | ... | ५ | २० |
| ६ | यो वै भारतवर्षेऽस्मिन् | ... | ५ | २० |
| ७ | तत्रोपविष्टमृषिभिः | ... | ५ | २० |
| ८ | तस्मै ह्यवोचद्भगवान् | ... | ५ | २० |
| ९ | स्वायंभुवब्रह्मसत्रं | ... | ५ | २१ |
| १० | श्वेतद्वीपं गतवति | ... | ५ | २१ |
| ११ | तुल्यश्रुततपःशीलाः | ... | ५ | २२ |
| १२ | स्वसृष्टमिदमापीय | ... | ५ | २३ |
| १३ | यथा शयानं सम्राजं | ... | ५ | २४ |
| १४ | जय जय जह्यजामजित | ... | ६ | २५ |
| १५ | बृहदुपलब्धमेतद् (पूर्वार्धम्) | ... | ७ | ३१ |
| | ,, (उत्तरार्धम्) | | ,, | ३६ |
| १६ | इति तव सूरयस्त्र्यधिपते | ... | ८ | ४० |
| | ,, (उत्तरार्धम्) | | ,, | ५८ |
| १७ | दृतय इव श्वसंति | ... | ९ | ६१ |
| १८ | उदरमुपासते य ऋषिवर्त्मसु | ... | ११ | १११ |
| १९ | स्वकृतविचित्रयोनिषु | ... | १२ | १२८ |
| २० | स्वकृतपुरेष्वमीषु (पूर्वार्धम्) | ... | १३ | १४४ |
| | ,, (उत्तरार्धम्) | | ,, | १४६ |
| २१ | दुरवगमात्मतत्त्वनिगमाय | ... | १४ | १४९ |
| २२ | त्वदनुपथं कुलायमिदं (पूर्वार्धम्) | ... | १५ | १५२ |
| | ,, (उत्तरार्धम्) | ... | ,, | १५३ |
| २३ | निभृतमरुन्मनोक्षदृढ— (पू.) | ... | १६ | १५५ |
| | ,, (उ.) | | ,, | १५६ |

| | | | | |
|---|---|---|---|---|
| २४ | क इह नु वेद ... | ... | १७ | १५८ |
| | ,, | | ,, | १६३ |
| २५ | जनिमसतः सतो मृतिं (पू.) | ... | १८ | १७१ |
| | ,, (उ.) | | ,, | १७६ |
| २६ | सदिव मनस्त्रिवृत्त्वयि | ... | १९ | १७९ |
| २७ | तव परि ये चरन्ति | ... | २० | १९१ |
| २८ | त्वमकरणः स्वराड् | ... | २१ | १९३ |
| २९ | स्थिरचरजातयः | ... | २२ | १९५ |
| ३० | अपरिमिता ध्रुवाः | ... | २३ | १९७ |
| ३१ | न घटत उद्भवः (पू.) | ... | २४ | २०१ |
| | ,, (उ.) | | ,, | २०७ |
| ३२ | नृषु तव मायया (पू.) | ... | २५ | २१२ |
| | ,, (उ.) | | ,, | २१३ |
| ३३ | विजितहृषीकवायुभिः | ... | २६ | २१४ |
| ३४ | स्वजनसुतात्मदार— | ... | २७ | २१६ |
| ३५ | भुवि पुरुपुण्यतीर्थ— | ... | २८ | २१७ |
| ३६ | सत इदमुत्थितं | ... | २९ | २१९ |
| ३७ | न यदिदमग्र आसन | ... | ३० | २२४ |
| ३८ | स यदजया त्वजाम् | ... | ३१ | २२९ |
| ३९ | यदि न समुद्धरन्ति | ... | ३२ | २३२ |
| ४० | त्वदवगमी न वेत्ति | ... | ३३ | २४८ |
| ४१ | द्युपतय एव ते न ययुः | ... | ३४ | २५७ |
| ४२ | इत्येतद्ब्रह्मणः पुत्रा | ... | ३५ | २६३ |
| ४३ | इत्यशेषसमाम्नाय— | ... | ,, | ,, |
| ४४ | त्वं चैतद्ब्रह्मदायाद | ... | ,, | २६४ |
| ४५ | एवं स ऋषिणाऽऽदिष्टं | ... | ,, | ,, |
| ४६ | नमस्तस्मै भगवते | ... | ,, | ,, |
| ४७ | इत्याद्यमृषिमानम्य | ... | ,, | २६५ |
| ४८ | सभाजितो भगवता | ... | ,, | ,, |
| ४९ | इत्येतद्वर्णितं राजन् | ... | ,, | ,, |
| ५० | योऽस्योत्प्रेक्षक | ... | ,, | ,, |

# शुद्धिपत्रकम् ।

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १० | २९ | ज्ञातृज्ञापकात्वात् | ज्ञातज्ञापकत्वात् |
| ११ | ९ | रपगत्य | रवगम्य |
| १६ | २५ | शास्त्राप्रवर्तकाः | शास्त्रप्रवर्तकाः |
| २८ | ६ | सिद्धस्यान्याय्यत्वात् | सिद्धस्य न्याय्यत्वात् |
| २९ | २१ | मान्सैहव | मान्सहैव |
| ३२ | ३० | ब्रह्मजगतः | ब्रह्मजगतोः |
| ४१ | ४ | प्रवृत्ताऽधिगत | प्रवृत्त्याऽधिगत |
| ४६ | १६ | तात्सविता | त्तात्सविता |
| ४९ | ३० | करत्वं | करत्वम् । |
| ५१ | ९ | निषेध | निषेधः । |
| ५३ | १५ | प्रव्रजेत् | प्रव्रजेत्, |
| ,, | १८ | सत्वाश्रम | स त्वाश्रम |
| ५५ | १३ | तदस्ति[3] | तदस्ति[2] |
| ,, | २८ | यज्ञौ[4] | यज्ञौ[3] |
| ,, | ३१ | ३ भ. गी. ९।१३ | ३ भ. गी. ९।२३ |
| ५७ | १३ | कर्माणां | कर्मणां |
| ५८ | ११ | नैक्यं | त्रैक्यं |
| ,, | १४ | तत्पदं किं, | तत्पदं, किं |
| ६१ | २ | परम विनिर्धु | परम निर्धु |
| ६५ | १९ | तस्मिन्जीवति | तस्मिञ्जीवति |
| ६६ | २६ | वन्मयोमय | वन्मनोमय |
| ६८ | १५ | ब्रह्मजानता | ब्रह्मं जानता |
| ७० | ८ | शिरःपक्षौ | शिरः पक्षौ |
| ,, | २० | लभते । | लभते, |
| ७१ | १३ | विनापक्षौ | विना पक्षौ |
| ,, | १४ | रानुभाव | रानुभव |
| ७४ | १५ | त्रिपुटि | त्रिपुटी |
| ,, | २९ | नुभवंविना | नुभवं विना |

| | | | |
|---|---|---|---|
| ७५ | १५ | विदान्न | विद्वान्न |
| ७६ | ६ | प्रतिष्ठा | प्रतिष्ठा, |
| ,, | ११ | ति स्था | ति, स्था |
| ,, | २६ | जानाति | जानाति, |
| ७८ | ११ | च तेषु | च, तेषु |
| ७९ | १० | मृतिके | मृत्तिके |
| ,, | ११ | प्रपञ्चस्य | प्रपञ्चस्य, |
| ,, | १८ | न घटस्या | न घटः, घटस्या |
| ,, | २६ | कालद्वैतं | कालाद्वैतं |
| ८० | २५ | दृश्यते | दृश्यते, |
| ८४ | ९ | लयसहित्या | लयराहित्या |
| ८६ | २८ | घटस्तथा न | घटस्तथा, न |
| ८७ | ३ | बत्वात्सर्वं | घत्वात्सर्वं |
| ८८ | १४ | भिधीयते | भिधीयते, |
| ,, | १७ | पुच्छं | पुच्छं, |
| ९३ | १७ | स्यैवार्धस्य | स्यैवार्थस्य |
| ९६ | २४ | दूष्य | दूषयित्वा |
| ९८ | २१ | ततो सिद्ध | ततः सिद्ध |
| १०० | २७ | इमामि | इमानि |
| १०१ | १९ | ब्राह्य | बाह्य |
| १०४ | १५ | नुभव भूमै | नुभवो भूमै |
| १०६ | ८ | तदाग्रेऽपि | तदग्रेऽपि |
| ,, | १४ | प्राग्रेव | प्रागेव |
| १०९ | ६ | वोलब्धव्यं | वोपलब्धव्यं |
| ११२ | १० | उपासतेऽपि | उपासतामपि |
| ११३ | १ | सुषुम्ना | सुषुम्णा |
| ११४ | २८ | नत्वात्म | न त्वात्म |
| ११८ | २० | प्रतिजानिते | प्रतिजानीते |
| ११९ | १ | धिकारण- | धिकारिण- |
| १२० | ९ | किंत्वन्येनैव | किंत्वनन्येनैव |
| १२१ | २४ | दुपासे | दुपासते |
| १२३ | १६ | कारणं | करणं |

| | | | |
|---|---|---|---|
| १२५ | १७ | रसाःस्वादन | रसास्वादन |
| १२८ | १५ | एकरस्तं | एकरसस्तं |
| १३० | ११ | रसः । रस ९ | सः । रस ९ |
| १३५ | २५ | सिद्धत्वे विद्याया | सिद्धत्वेऽविद्याया |
| १३८ | २५ | मानया तत्र न द्वैतशङ्का ? | मानया ? तत्र न द्वैतशङ्का । |
| १३९ | १५ | मेतदमहदा | मेतत् महदा |
| १४१ | २३ | प्रसज्येत तथा | प्रसज्येत, तथा |
| १४७ | २४ | तेनैवानन्ये न | तेनैवानन्येन |
| १५६ | १० | स्यापिशब्देन | स्यपिशब्देन |
| ,, | ,, | स्तेषांमेवै | स्तेषामेवै |
| ,, | १५ | सद्धान्त | राद्धान्त |
| ,, | २८ | द्रष्टारो | द्रष्टार |
| १५७ | ४ | संनिकर्ष | संनिकर्षेण |
| १५८ | ४ | का इह | क इह |
| १५९ | १ | वेदे सूच्यते | वेदेति सूच्यते |
| १५९ | ८ | ब्राह्मणं | ब्रह्माणं |
| १६३ | १७ | सतोऽसत्तो | सतोऽसतो |
| १६४ | २० | स्थितिकाला वा सत | स्थितिकालावासात |
| १६५ | १९ | नतोऽन्यत्पुराणा | ततोऽन्यत् । पुराणा |
| ,, | ,, | मुनिभिः । ल- | मुनिभिर्ल- |
| १६६ | ४ | पाधरंतेःपाति | पाधेरंतःपाति |
| १६८ | २८ | प्रत्ययात्वा | प्रत्ययत्वा |
| १७५ | ४ | यथात्वमिति | यथा त्वमिति |
| ,, | ३० | न्वयाप्रतीति | न्वयप्रतीति |
| ,, | ३१ | अपि विदु | अपि न विदु |
| १८७ | २० | शौभनो | शोभनो |
| १९१ | २१ | निम्नमा | निमग्ना |
| १९८ | १६ | काशवेदकः | काशवदेकः |
| २०३ | ७ | मद्दष्टया | मद्दृष्टया |
| २०७ | १६ | रीत्यातु | रीत्या तु |
| २२३ | ११ | इत्यवं | इत्येवं |
| २४४ | १५ | सचेतनासती | सचेतना सती |
| २४६ | १२ | घटत | घटते |
| २६६ | १६ | रभेदेसति | रभेदे सति |
| ,, | ३० | यागे | त्यागे |
| २६८ | ५ | स्ततोध्याये- | स्ततो ध्याये- |
| ,, | १३ | अस्य लेखन- | अस्यादर्शपुस्तकस्य लेखन |

# व्याख्यातश्लोकसूचिः ।


| श्लोकः | श्लोकाङ्कः |
|---|---|
| अत्र ते वर्णयिष्यामि ... | ४ |
| अपरिमिता ध्रुवास्तनुभृतः | ३० |
| इति तव सूरयस्त्र्यधिपते | १६ |
| इत्यशेषसमाम्नाय ... | ४३ |
| इत्याद्यमृषिमानम्य ... | ४७ |
| इत्येद्ब्रह्मणः पुत्रा ... | ४२ |
| इत्येतद्वर्णितं राजन् ... | ४९ |
| उदरमुपासते य ऋषिवर्त्मसु | १८ |
| एकदा नारदो लोकान् ... | ५ |
| एवं स ऋषिणादिष्टं ... | ४५ |
| क इह नु वेद बतावर ... | २४ |
| जनिमसतः सतो मृतिं ... | २५ |
| जय जय जह्यजामजित... | १४ |
| तत्रोपविष्टमृषिभिः ... | ७ |
| तव परि ये चरन्त्यखिल- | २७ |
| तस्मै ह्यवोचद्भगवान् ... | ८ |
| तुल्यश्रुततपःशीलाः ... | ११ |
| त्वदनुपथं कुलायमिदं ... | २२ |
| त्वदवगमी न वेत्ति ... | ४० |
| त्वमकरणः स्वराडखिल- | २८ |
| त्वं चैतद्ब्रह्मदायाद ... | ४४ |
| दुरवगमात्मतत्त्वनिगमाय | २१ |
| दृतय इव श्वसन्त्यसुभृतः | १७ |
| द्युपतय एव ते न ययुः | ४१ |
| न घटत उद्भवः प्रकृतिपूरुषयोः | ३१ |

| श्लोकः | श्लोकाङ्कः |
|---|---|
| नमस्तस्मै भगवते ... | ४६ |
| न यदिदमग्र आस ... | ३७ |
| निभृतमरुन्मनोऽक्ष ... | २३ |
| नृषु तव मायया भ्रमममीषु | ३२ |
| बुद्धीन्द्रियमनःप्राणान् ... | २ |
| बृहदुपलब्धमेतदवयन्त्यव- | १५ |
| ब्रह्मन् ब्रह्मण्यनिर्देश्ये ... | १ |
| भुवि पुरुपुण्यतीर्थसदनानि | ३५ |
| यथा शयानं सम्राजं ... | १३ |
| यदि न समुद्धरन्ति यतयः | ३९ |
| यो वै भारतवर्षेऽस्मिन् ... | ६ |
| योऽस्योत्प्रेक्षक आदिमध्य- | ५० |
| विजितहृषीकवायुभिः ... | ३३ |
| श्वेतद्वीपं गतवति ... | १० |
| सत इदमुत्थितं सदिति | ३६ |
| सदिव मनस्त्रिवृत्त्वयि ... | २६ |
| सभाजितो भगवता ... | ४८ |
| स यदजया त्वजाम् ... | ३८ |
| सैषा ह्युपनिषद्ब्राह्मी ... | ३ |
| स्थिरचरजातयः स्युः ... | २९ |
| स्वकृतपुरेष्वमीषु ... | २० |
| स्वकृतविचित्रयोनिषु ... | १९ |
| स्वजनसुतात्मदारधन-... | ३४ |
| स्वसृष्टमिदमापीय ... | १२ |
| स्वायंभुवब्रह्मसत्रं ... | ९ |



[ ‘भोगांव’स्थितं पंडितप्रवरस्य वामनस्य समाधिस्थलम् । अत्रोपविष्टः श्रीटाकीमहाराजो येन १८४३ मिते शाकाब्देऽस्य समाधिस्थलस्य जीर्णोद्धारः कृतः । ]



[ 'भोगांव'स्थितं पंडितप्रवरस्य वामनस्य समाधिस्थलम् । अत्रोपविष्टः श्रीटाकीमहाराजो येन १८४३ मिते शाकाब्देऽस्य समाधिस्थलस्य जीर्णोद्धारः कृतः । ]



# श्रुतिकल्पलता ।



## श्रीवामनपंडितकृतश्रुतिस्तुतिव्याख्या ।

### मंगलमुपोद्घातश्च ।

श्रीमत्सद्गुरुभ्योनमः ।

सत्त्वे लीने परे तत्त्वे यज्ञो यो भगवत्तमः । तं वंदे परमानंदमिंदिरामंदिरं हरिम् ॥ १ ॥ चित्तं चिदनले हुत्वा यजमानो रमापतिः । ददाति दक्षिणां भूरि व्याकुर्वन् वै श्रुतिस्तुतिम् ॥ २ ॥ दक्षिणा ज्ञानसंदेशो यज्ञोऽहं भगवत्तमः । वक्ष्यत्येकादशस्कंधे भगवानेवमेव हि ॥ ३ ॥ दक्षिणा कर्मयज्ञस्य ज्ञानयज्ञस्य वै तथा । ब्रह्मसंदेश इत्यस्माच्छास्त्रमेतद्वितन्यते ॥ ४ ॥ जुहोति योगिनां चित्तं चिदग्नौ यः श्रियः पतिः । वितनोति स एव श्रीश्रुतिकल्पलतामिमाम् ॥ ५ ॥ साधारणतया सर्वं ब्रह्मेत्यपि विशेषतः । ज्ञानिनस्तनवः साक्षाद्धरेः सत्त्वतनोः स्मृताः ॥ ६ ॥ हेमकारः स्वतः शुद्धाच्छोधितं नेक्षते पृथक् । स्वर्णं सत्त्वं किंकराणां स्वसत्त्वा-द्भगवानपि ॥ ७ ॥ तस्माद्ग्रंथस्य कर्तास्य धियो यो नः प्रचोदयात् । इत्यशेषमतीनां यः सर्वात्मा प्रेरको हरिः ॥ ८ ॥ वरेण्यं सवितुर्भर्गः सार्कविश्वप्रकाशकम् । घटं मृदिव चिन्मात्रं यस्तद्वेद स एव सः ॥ ९ ॥ न दृश्यते मृदमृते घटो न सविता तथा । यं विना तन्मया बुद्धिः किंकराणामहो हरेः ॥ १० ॥ प्रविष्टे सलिले भानौ प्रतिबिंबं न दृश्यते । अतः करोत्यहो ग्रंथं बिंबात्मा भगवान् स्वयम् ॥ ११ ॥ ध्येयः सदा सवितृमंडलमध्यवर्ती देवस्य तस्य सवितुर्हृदि संस्थितस्य । लक्षांशमात्रमुदितं हि वरेण्यभर्गः सूर्याद्युपाधिनिकरप्रतिबिंबबिंबम् ॥ १२ ॥ प्रचोदयाद्धियो यो न इति

भेदोऽत्र दर्शितः। स बिंबप्रतिबिंबानामुपाधिरचितो मिथः॥ १३॥ **यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमिति श्रुतिश्च**॥ १४॥ यश्चादित्यगतो यश्च पुरुषोपाधिसंस्थितः। विधत्ते च तयोरैक्यं **स यश्चायमिति** श्रुतिः॥ १५॥ वरेण्यं निर्गुणं भर्गो देवस्य सगुणस्य तत्। जगदंबरतंतुत्वात्तत्पदेन तदीर्यते॥ १६॥ निर्गुणं सगुणं तच्च विश्वरूपमिति त्रिधा। गायत्र्या वर्ण्यते ब्रह्म श्रीमद्भागवते तथा॥ १७॥ अतः समग्रग्रंथार्थ आद्यपद्येन वर्ण्यते। द्वैपायनेन रूपेण **जन्माद्यस्येति** विष्णुना॥ १८॥ त्रिपदायां त्रिधा ध्येयं सर्वं वेदोदितं यथा। चक्षुर्गम्यं जगद्रूपं तयोः सूर्यः प्रकाशकः॥ १९॥ विष्णोस्तन्मंडलस्थस्य भर्गः सर्वप्रकाशकम्। पटस्य तंतुमात्रत्वाद्यथा तंतुप्रकाश्यता॥ २०॥ चित्प्रकाशं चिदात्मत्वात् सवित्राद्यखिलं तथा। एतत्तदिति सावित्र्याः पदेनाद्येन सूच्यते॥ २१॥ इदंकारास्पदं तत्त्वं तत्पदेनापि शब्द्यते। **ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः**॥ २२॥ इति गीताकृताप्युक्तस्तच्छब्दस्तत्त्ववाचकः। विवर्ते यः प्रयुक्तोऽपि स्यादधिष्ठानवाचकः॥ २३॥ रजतं तदिति प्रोक्ते दृष्टिः शुक्तिं स्पृशत्यहो। अतस्तद्धीमहीत्यस्माच्चराचरमशेषतः॥ २४॥ बुद्धिः पश्यति यं स्पृष्ट्वा गुणं दृष्ट्वा फणिं यथा। भर्गस्ततो वरेण्यं तद्यच्च विश्वप्रकाशकम्॥ २५॥ मायाशबलितं तच्च देवशब्देन शब्द्यते। ततो देवस्य तद्भर्गः सवितुर्मध्यगस्य वै॥ २६॥ धीमहीत्युच्यते देवो बिंबात्मा भगवान् हरिः। यत्रोद्गिरंति श्रुतयो हृत्सारं सरघा इव। श्रुतिस्तुतिं व्याकरोति विश्वात्मा वामनात्मना॥ २७॥ प्रकृतमनुसरामः शास्त्रमेतत्प्रकुर्मो मुहुरथ वयमत्र ब्रूम इत्यादिभिः किम्। तत इह हरिरेव व्याकरोतीति वाचं विधिहरमतिसंस्थो वर्तयत्यब्जनाभः॥ २८॥ यतो वाचो निवर्तंते तत्रस्थं मां बलादिव। श्रुतिस्तुतिव्याकरणे नियोजयति नौमि तम्॥ २९॥ योऽहं मुक्तिमनादृत्य भक्तिं याचेऽखिलात्मनि। अहो भाग्यमहो भाग्यं नियुक्तस्य तथा विधौ॥ ३०॥ यतिभिः प्रांशुभिर्नीतं श्रुतिस्तुतितरोः फलम्। त्रिविक्रमात्मना जातं सुलभं वामनस्य तत्॥ ३१॥ श्रीमद्भागवतं शास्त्रं व्याकृतं श्रीधरादिभिः। प्रकाशयति गूढार्थान् भगवान् वामनात्मना॥ ३२॥ ब्रह्मानुभवसंपन्नाः शास्त्रज्ञाश्चाऽनसूयवः। तात्पर्यरससारज्ञास्त एवात्राधिकारिणः॥ ३३॥ चित्सुखश्रीधरमुखाः शास्त्रतत्त्वविदोऽपि तैः। व्याख्येयांशः क्वचित्त्यक्तस्तच्चाप्यत्र प्रकाश्यते॥ ३४॥ ये सर्वं खल्विदं ब्रह्मेत्यनिशं समुपासते। निर्विशेषरसाभिज्ञास्तेषां तु रस ईप्सितः॥ ३५॥ चित्सुखो वा श्रीधरो वा वामनो वाऽन्य एव वा। बुद्बुदा

---

१ यजु. तै. ब्र. ८।१। २ स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः तैत्ति. २।८।१। ३ जन्माद्यस्य यतः ब्र. सू. १।१।२। ४ भ. गी. १७।२३।

इव सर्वेऽपि सच्चिदानंदसागरे ॥ ३६ ॥ अतो नातिक्रमाय स्यात् सतां व्याख्या श्रुतिस्तुतेः । याति विस्तृततामग्रे संप्रदायसुधासरित् ॥ ३७ ॥ जयत्यशेषविश्वात्मा निर्व्याजसततप्रियः । यत्प्रसादात् करिष्यामि श्रुतिकल्पलतामिमाम् ॥ ३८ ॥ श्रीमद्भागवतं शास्त्रं वेदामरतरोः फलम् । कात्स्न्र्येन दृश्यते तच्च वेदैर्यत्र स्तुतो हरिः ॥ ३९ ॥ वामनस्तत्परं ब्रह्म प्रसादाच्छेषशायिनः । चतुर्विधं व्याकरोति व्याकुर्वन्निगमस्तुतिम् ॥ ४० ॥ निर्गुणं सगुणं जीवसंज्ञितं जगदात्मकम् । वेदैश्च वेदमात्रा च गीतं तद्ब्रह्म धीमहि ॥ ४१ ॥ एतच्चतुर्विधं ब्रह्म श्रीमद्भागवते स्फुटम् । मुनिना चरितं यस्य नांदीपद्येन मंगलम् ॥ ४२ ॥ इतिहासपुराणेषु वेदतत्त्वविदापि यत् । वेदव्यासेन मुनिना गीतं तद्ब्रह्म धीमहि ॥ ४३ ॥ निर्गुणं सगुणं तच्च मायया तदविद्यया । प्रतिबिंबेन जीवाख्यं जगद्रूपं विवर्ततः ॥ ४४ ॥

---

# प्रथमोऽध्यायः ।

आद्यस्कंधमुखे वेदव्यासेन '[1]निगमकल्पतरोर्गलितं फलमि'ति श्रुत्यर्थविजृंभितैः गद्यपद्यैश्च तत्र तत्र श्रीमद्भागवतं निगमामरतरुफलत्वेन स्फुटीकृतम् । अथ तामेव कथाव्याजेन व्याहृतां श्रौतीं भारतीं निखिलनिगमसारसंग्रहतया श्रुतिस्तुतिप्रसंगेन वक्तुमारभते । यत्रानेकश्रुतयः सरघा इव हृत्सारमेकत्रोद्गिरंति तां च श्रुतिस्तुतिं निजात्मजः शुको व्याकरिष्यत्यतीतानागतज्ञः सर्वज्ञस्तं प्रति परीक्षित् श्रुतीनां निर्गुणे ब्रह्मणि प्रवृत्तिमघटमानां मन्वानः स्वप्रश्नमनुवर्णयति—

## परीक्षिदुवाच।

**ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ।**
**कथं चरंति श्रुतयः साक्षात्सदसतः परे ॥ १ ॥**

ब्रह्मन्, श्रुतयो ब्रह्मणि कथं चरंति । '[2]सत्यं ज्ञानमनंतं ब्रह्म' । '[3]तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनामि'त्याद्यनेका निर्गुणपरास्तद्यदि वर्णयंति तर्हि तत्र चरंति । चर गतिभक्षणयोः । गच्छंति प्राप्नुवंतीत्यर्थः । यथा घटशब्दो घटे वर्तते तद्वदत्र न संभवतीति प्रश्नः कथमिति ॥ ननु श्रुतय ईश्वरे मायाशबलिते ब्रह्मणि चरंति न निर्गुणे इतिचेत्तत्राह—साक्षादिति । गुणव्यवधानरहित इत्यर्थः । '[4]सत्यं ज्ञानमनंतं ब्रह्म।' '[5]यो वेदे'ति ज्ञेयत्वेन सत्यादिलक्षणानामुपपादितत्वात् । ज्ञेयस्य

---

१ भा. स्कं. १।१।३। २ य. तै. ब्र. २।१। ३ महानारायणोपनिषत्, खंड १।६। ४ य. तै. ब्र. १। ५ महानारायण० खं० १।६।

गुणव्यवहितत्वे निर्गुणसाक्षात्कारो न स्यात् । यद्युपपादिते सगुणे शाखायां चंद्र इव तदुपाधौ निर्गुणमधिगंतव्यमिति चेदधिगतं निर्गुणं वा सत्यं ज्ञानमनंतमेव, तावता तदेव वर्णयंतीति सिद्धम् । तथा च **'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनामि'**ति कविभिः साक्षात्कृतं तत्कवीनां ब्रह्म सगुणं वक्तुं न शक्यते । ततः साक्षात् ब्रह्मणि कथं चरंतीत्यभिप्रायः ॥ ननु ब्रह्मणोऽनिर्देश्यत्वान्मायाशबलितस्यैवोपपादनाच्छाखाचंद्रन्यायेन ब्रह्माधिगंतव्यमिति चेत्तत्राह—अनिर्देश्य इति । इदमित्थमिति निर्देशार्हं न भवतीत्यनिर्देश्यं तस्मिन्नपि चरंतीत्यर्थः। **'निर्विकल्पमनंतं च हेतुदृष्टांतवर्जितम् ।' 'न तत्र चक्षुर्गच्छति।' 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगंधवच्च यत् ।' 'यतो वाचो निवर्तंते अप्राप्य मनसा सहे'** त्याद्याः श्रुतय एव यद्यनिर्देश्यत्वमनिर्वाच्यत्वमुपपादयंति, तावता त्वनिर्देश्येऽनिर्वाच्ये चरंतीति सिद्धं, न चरंतीतिचेत् कथमुपपादयंति । **'यतो वाचो निवर्तंत'** इति तत्र चरंत्य एवोपपादयंति तत्कथमिति प्रश्नः । नैतावन्मात्रं किंतु यदा श्रुतीनामत्यंतोपरमस्तं प्रलयकालमपि कथं वर्णयंतीति पृच्छति सदसतः पर इति । सतश्चासतश्च लयात् परः कालः । सदसतः परे काले **'नासदासीन्नो सदासीत्तदानीमि'**त्यादिश्रुतयस्तस्मिंल्लयशेषेऽपि कथं चरंतीत्यर्थः । आस्तां प्रलयवार्ता यतस्त्वधुनापि श्रुतीनां ब्रह्मणि प्रवृत्तिर्न घटते, तथापि कथं चरंतीति पृच्छति निर्गुणे गुणवृत्तय इति । निःशब्दे शब्दवृत्तय इत्यर्थः । विरुद्धधर्मत्वादग्नौ तृणवदित्यभिप्रायः ॥ १ ॥

॥ इति प्रथमोऽध्यायः ॥

---

# द्वितीयोऽध्यायः ।

सूक्ष्मेण सत्त्वरूपेण निर्गुणे गुणवृत्तिताम् । त्यक्त्वा चरंति श्रुतय इत्याह शुक उत्तरम् ॥ १ ॥ भावगर्भः शुकश्लोको यस्यामवतरत्यहो । बह्वभिप्रायरूपां यां तां भुवं दर्शयामहे ॥ २ ॥

निर्गुणे गुणवृत्तयः कथं चरंतीति प्रश्नः । शब्दस्य सूक्ष्मत्वज्ञानाभावात् । तथा च श्रुतिः **'चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेंगयंति तुरीयं वाचो मनुष्या वदंती'**ति । वाचः परिमितानि गणितानि शास्त्रे निर्णीतानीत्यर्थः । पदानि स्थानानि चत्वारि परा पश्यंती मध्यमा वैखरीति । एतावता त्वतिसूक्ष्मत्वमिति सिद्धम् । यतश्चत्वार्येतानि

---

१ महानारा. १।६। २ ब्रह्मबिंदु ८। ३ सा. के. १।३। ४ य. का. ३।१५। ५ य. तै. ब्र ४। ६ ऋग्वे. सं. ८।७।१७। ७ ऋग्वे. सं. २।३।२२।

वाचः स्थानान्येव । न स्वयं वाक् । तानि तान्यपि विदुर्ब्राह्मणाः ब्रह्मनिष्ठा मनीषिणो बुद्धिमंतः । ज्ञानिनः शास्त्रज्ञा ब्रह्मनिष्ठैर्बोधिताश्च तेऽपि विदुरित्यर्थः । तत्र गुहा गुहासु मूलाधारादिषु त्रीणि परा–पश्यंती–मध्यमाख्यानि निहिता निहितानीत्यर्थः । छांदसत्वात्तथा । एवमेव परिमिता गुहेत्यत्रापि छांदसत्वं द्रष्टव्यम् । तानि त्रीणि नेंगयंति परादित्रीणि स्वस्वरूपं स्फुटं लोके न प्रकाशयंति । साधारणैर्न ज्ञायंत इत्यर्थः । वाचस्तुरीयं चतुर्थं पदं वैखर्याख्यं मनुष्याः साधारणा अपि वदंति यत्तदित्यर्थः । इति श्रुतेः संग्रहार्थः । तथाच वक्ष्यत्येकादशस्कंधे भगवानुद्धवाय **'स[1] एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः । मनोमयं सूक्ष्ममुपैति रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः'** इति । स एष आत्मत्वेन सर्वानुभूतः चित्प्रतिबिंबभूतः स्वयंवेद्यः जीवः जीवयत्युपाधिमिति जीवसंज्ञ इत्यर्थः । विवरेषु मूलाधारादिषु प्रसूतिरिव प्रसूतिर्यस्य स विवरप्रसूतिः । भ्रमरिकादृष्टया भूभ्रमणस्य प्रतीयमानत्वात् जीवस्य जीवोपाधिरूपस्य चित्तस्य शब्दरूपेण प्रसूतिः सास्यैव चित्प्रतिबिंबस्येति प्रतीयते । जपाकुसुमसन्निकर्षाद्यथा स्फटिकस्तद्गुणविशिष्टः प्रतीयते, तथा जीवोपाधेराविद्यकत्वादन्यथाज्ञानं सूचयति । तत एव प्राणेन घोषेण गुहां प्रविष्ट इति मूलाधारादिविवरमार्गेण गच्छता प्राणेन सहघोषेण नादमात्रपराख्यवाग्रूपेणेत्यर्थः । गुहां हृद्गुहां प्रविष्टः सन् मनोमयं सूक्ष्मं रूपमुपैति प्राप्नोति पश्यंतीरूपो भवति । कमपि नामरूपरूपं विषयं कल्पयित्वा मनसा पश्यतीत्यर्थः । तदेव मनोमयं रूपम् । तदुक्तं षष्ठस्कंधे **'यदो[2]परामो मनसो नामरूपरूपस्य दृष्टश्रुतसंप्रमोषादि'**ति । ततो मात्रा स्वरो वर्ण इति स्थविष्ठं रूपमुपैतीत्यनुषंगः । मध्यमा वैखरीरूपं प्राप्नोतीत्यर्थः । मात्रादिस्थूलं वाग्रूपं प्राप्य मध्य एव मुखमप्राप्य तिष्ठतीति मध्यमा मुखेनोच्चार्यमाणा वैखरीभेदः । एवं श्रुतिपुराणसिद्धं शुद्धं सत्त्वं शब्दस्य सूक्ष्मं रूपं तदेव पश्यंत्यादिरूपत्वे विक्षेपतया रजस्तमोमिश्रं भवति, किंत्वविद्यया चिज्जडविवेकज्ञानाभावात्तदित्थमिति न प्रकाशते । सूर्यप्रकाशमाश्लिष्य दृष्टिर्घटादिकं पश्यत्यपि लोकव्यापारव्यग्रदृष्टिरादौ प्रभामाश्लिष्य घटादिकं ततः पश्यतीति । नहि सर्वत्र स्फुरतीति न्यायेन बुद्धिश्चिदाश्लेषतया प्रथमं यत्किमपि वक्तुं निश्चित्य पश्यंत्यादिक्रमेण वैखर्या वदतीति नहि जनो वेद । ततस्तु **'ता[3]नि विदुर्ब्राह्मणा ये मनीषिणः'** इति श्रुतेर्ब्रह्मविद एव तत्सत्त्वं जानंति यल्लयविक्षेपरहितं चिदात्मनि केवले तदाकारं प्राप्नोति तदेव मन इति बुद्धिरिति श्रुतिभिरुपपाद्यते । **'धी[4]र्भीरित्येतत्सर्वं मन एवे'**ति श्रुतेः । एवं सति बुद्धिरूपेण श्रुतयो निर्गुणे चरंति च चिदाश्लिष्टे सत्त्वे सूक्ष्मरूपं भूत्वा वैखरीस्थूलरूपं प्राप्नुवंति । तदविद्यावतां न स्फुरतीत्यत्र संदेहः ।

---

१ भा. स्कं. ११।१२।१७। २ भा. स्कं. ६।४।२६। ३ ऋग्वे. सं. २।३।२२। ४ य. बृ. १।५।३।

किंतु शब्दोत्पत्तेश्चिदाश्लिष्टबुद्धिमूलत्वात्सैव बुद्धिः शब्दस्य मूलम् । स च शब्दो बुद्धींद्रियमनःप्राणयोगेन स्थूलत्वं प्राप्यानादितया लौकिकवैदिकरूपेण बुद्ध्यादियोगेनैव बंधं मोक्षं च करोति । ततः परमेश्वरस्तस्य रूपद्वयसिद्ध्यै च तत्कृतफलद्वयप्राप्त्यै च बुद्ध्यादीनेवासृजदिति वदन् श्रुतयः सूक्ष्मरूपेण ब्रह्मणि चरंतीति दर्शयितुं

श्रीशुक उवाच ।

**बुद्धींद्रियमनःप्राणान् जनानामसृजत्प्रभुः ।**
**मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥ २ ॥**

प्रभुः ईश्वरः जनानां जीवानां मात्रार्थं बुद्ध्यादीनसृजत् सृष्टवान् । मीयंत इति मात्रा विषयास्तदर्थं तद्ग्रहणार्थमित्यर्थः । अत्र चकारात् विषयमात्रस्य शब्दगोचरत्वाच्छब्दस्य बुद्धींद्रियमनःप्राणैरुच्चार्यमाणत्वादुच्चरितस्यार्थस्य तैरेव गृह्यमाणत्वात्तदर्थं च । सकलविषयवाचकलौकिकशब्दार्थं चेत्यर्थः । तदर्थं च तान्सृष्टवानित्यभिप्रायः । एतावता लौकिकशब्दार्थं तद्गोचरविषयार्थं चेति दर्शितम् । एवंभूतोऽप्यंतःपाती तथापि भवादिशब्दा विषयवाचका न भवंतीत्यतः पृथगभिधानमिति । अलौकिकशब्दगोचरविषयग्रहणस्य फलमाह भवार्थंचेति । भवो जन्म तदर्थं च तानसृजदिति। द्वितीयचकारेण भवकारकनिखिलविषयाभिधानशब्दग्रहणोच्चारणसाधनभूतानेव जन्मसाधनतया च सृष्टवानित्यभिप्रायः । नच वाच्यमाद्यचकारेणांतिकशब्दग्रहणसूत्ररूपेणेवानेकशब्दग्रहणमिति सिद्धे पुनरपि जीवन्मुक्तस्य च विषयस्योच्चार्यमाणत्वात्, किंचाज्ञस्य लौकिकशब्दस्य जन्म तदुपलक्षितो मृत्युश्चेत्येतावदेव फलं न स्वर्गो न चापवर्ग इति भावः॥ '**अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम्**'ति श्रुतेः । एष पुरुषः अधेन्वा मायया चरति वत्सक्षीररहिता धेनुत्वलक्षणहीनैव अधेनुर्वंध्या गौः तया मायया तत्सदृशी या जीवोपाधिर्माया तया बुद्ध्या चरति प्रवर्तते । कः । यः अफलां मोक्षफलहीनां अपुष्पां स्वर्गादिपुरुषार्थहीनां वाचं यः शृणोति स इत्यर्थः । एवं लौकिकशब्दस्यापि बुद्ध्यादिसंभवत्वात् बुद्धेश्चिदाश्लिष्टरूपत्वात् लौकिकशब्दोपि ब्रह्मणि चरत्येव किंत्वनाद्यविद्यया न तथा बुद्धिगोचरो भवतीत्यर्थः। अथ वैदिकशब्दार्थं तानेवाऽसृजदिति वदन् श्रुतयः सूक्ष्मरूपेण निर्गुणे ब्रह्मण्यपि चरंतीत्युत्तरं सूचयन्नाह आत्मने अकल्पनाय चेति । आत्मने आत्मनोऽर्थे । आत्मज्ञानायेत्यर्थः । '**योऽहमस्मि ब्रह्माहमस्मी**'ति श्रुतेः । अविद्यायां निवृत्तायां ब्रह्मप्रकाशितया बुद्ध्या वागिंद्रियेण मनसा प्राणेन च वेदाध्ययनतद्विहिताद्यनुष्ठानेन चित्तशुद्धिद्वारा वेदांतवाक्यैश्चिदचिद्विवेकश्रवणमननिदिध्यासनायेतियावत् । इत्यादेः बुद्धींद्रियमनःप्राणसाध्यत्वादेतानसृजदित्यभिप्रायः । अकल्पनाय चेत्यर्थः सूच्यते ।

१ ऋग्वे. सं, ८।२।२३। २ महानारा. ५।१०।

अयमर्थः—बुद्धौ चिदाकारपरिणतायां समाधावकल्पनत्वं यदा तदा बुद्धिः सत्त्वैकमात्रा रजस्तमोरहिता निःशब्दे ब्रह्मणि तदाकाराकारितया परिणता भवति । यदा तु बुद्धेर्जीवोपाधिरूपाया निःशब्दाकारपरिणामः स एव तस्या नाशः। किंतु प्रारब्ध-भोगाय पुनश्च दग्धबीजप्रायरजस्तमोमिश्रा भवति तदानीं चिदाश्लिष्टैव शब्दसूक्ष्म-रूपा सती परादिस्थानं प्राप्य मध्यमा वैखर्याख्यपदे स्थूलशब्दरूपा च भवति तत्र योऽहमस्मि ब्रह्माहमस्मीति बुद्ध्या वाचा च वदन्नास्तेतरां श्रुतिः सूक्ष्मरूपोपाधिर्ब्रह्म स्पृष्ट्वा स्थूलशब्दरूपा भवतीति तस्माद्बुद्धेश्चिदाश्लेपस्यानुभवसिद्धत्वात्सैव, यदा तु सूक्ष्मरूपा तदा चैतन्ये शब्दसूक्ष्मरूपेण चरतीति सिद्धम् । अनुभूयते ब्रह्मात्म-विद्भिः '**योऽहमस्मि ब्रह्माहमस्मी**'ति[1] श्रुतेः। ततः श्रुतयो ब्रह्मणि चरंतीत्यु-त्तरम् । यदा तु जीवानां लौकिकशब्दः सूक्ष्मबुद्धिरूपेण चैतन्ये चरति सा च निगमार्थसंस्कृता बुद्धिः सत्यादिब्रह्मणः स्फुरणशब्दरूपा चिदाश्लिष्टा निवृत्ताविद्या ब्रह्मणि चरतीति सिद्धम्। यया बुद्ध्या '**योऽहमस्मि ब्रह्माहमस्मी**'ति[1] श्रुतिसिद्धोऽनुभवः स्फुरति। यदात्वेवं तदात्वीश्वरचिच्छक्तिरूपेण निर्गुणे चिदेकमात्रे ब्रह्मणि सूक्ष्मश्रुतिरूपः शब्दश्चरतीति किं वक्तव्यमिति कैमुतिकन्यायेनोत्तरं सूच्यते । तस्माद्यत्र बुद्धिस्तत्र शब्दश्चरतीति सिद्धे बुद्धिस्तु निर्गुणचैतन्येनैव प्रकाशमाना निर्गुणे ब्रह्मणि एव चरति सा च विवर्ताश्रया। शुक्तौ रजतं यथा चरति तथा निर्गुणे गुणवृत्तयोऽपि चरंति, किंतु परोक्षश्रवणमात्रसंपन्नानां ब्रह्मणो निर्गुणत्वश्रवणाच्छब्दस्य गुणवृत्तिरूपत्वज्ञानाच्छब्द-श्रवणे तमस्तेज इव वैलक्षण्यात्कथं शब्दरूपा गुणवृत्तयो ब्रह्मणि निर्गुणे चरंतीति शंकास्थानं, न तु ब्रह्मविद्यावतां तत्र संदेहस्ते तु बाधितं रजतं यथा शुक्तौ तदभावेपि पश्यंति तथा वस्तुत्वबाधिता बुद्धिर्ब्रह्मणि चरतीति जानतो बुद्धिरेव शब्दस्य सूक्ष्मं रूपं तेन रूपेण श्रुतयोऽपि ब्रह्मणि चरंतीति तेषामनुभवः। ननु तर्हि घटशब्दो यथा घटे चरति तथा ब्रह्मप्रतिपाद्याः श्रुतयो ब्रह्मणि चरंतीति सिद्धे घटशब्देन घटापरोक्ष-त्ववद्ब्रह्मलक्षणैर्ब्रह्मापरोक्षत्वं न घटते इतिचेत्सत्यम्, बालेंदुलक्षणैर्बालेंदुरपरोक्षो न भवति, किंतु शाखान्यायेन दृश्यते। तथा शाखांतमेव शब्दगमनं न चंद्रपर्यंतं, किंतु यावच्चंद्रदर्शनं चंद्रदर्शनरहितस्य तथा भाति । दृष्टे चंद्रे तु यथा घटशब्दो घटे वर्तते तथा बालेंदुलक्षणवाचकः शब्दो बालेंदौ वर्तते, अयं घट इतिवदयं चंद्र इति दृष्ट-चंद्रस्य शब्द इंदौ चरतीत्येव दृश्यते । तथा निवृत्ताविद्यकानां सत्यादिलक्षणैर्ब्रह्मैव स्फुरतीत्यतो न विरुद्धम्। तर्हि '**यतो वाचो निवर्तंत**'[2] इति श्रुतिविरोध इति चेन्मैवम् । '**यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे**'ति[3] श्रुतेर्यतो वाचो निवर्तंते तत्रापि यदि श्रुतयश्चरंति तर्हि किल यत्र नान्यत्पश्यतीत्यादि वर्णयंति। अकल्पनायेति न विद्यते कल्पना मनोवृत्तिर्यस्मिन्निय-

---

१ महानारा. ५।१०। २ तै. २।९। ३ सा. छां. ७।२४।१।

कल्पनः तस्मै वेदांतवाक्यश्रवणादिसिद्धापरोक्षसाक्षात्काराय च बुद्ध्यादीनसृजदित्यर्थः। स्वरूपाकाराकारितया बुद्ध्या प्रत्याहृतैरिंद्रियैर्निःसंकल्पितेन मनसा सुस्थिरैः प्राणैरपरोक्षसाक्षात्कारस्य श्रुतिस्मृतिसिद्धत्वात्। 'यदा पंचावतिष्ठंते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम्'॥ 'तां योगमिति मन्यंते स्थिरामिंद्रियधारणाम्। अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ' इति श्रुतेः पंच ज्ञानानि ज्ञानेंद्रियाणि अवतिष्ठंते शब्दादिवृत्तीर्न गृण्हंतीत्यर्थः। विषयग्रहणाभावात् इंद्रियाणां चाप्रतीतिरिति तात्पर्यम्। तत्कुतः? मनसा सह तस्य संकल्पशून्यत्वात्। तदपि कुतः? बुद्धिश्च न विचेष्टते स्वरूपाकारेण परिणता सती निश्चला भवति। बुद्ध्यधीनत्वान्मनसः मनोधीनमिंद्रियाणां नैश्चल्यम्। तथा च श्रुतिः 'आत्मानं रथिनं विद्धि शरीरं रथमेव च। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥ इंद्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्। आत्मेंद्रियमनोयुक्तो भोक्तेत्याहुर्मनीषिणः'। न च वाच्यं ब्रह्मसाक्षात्कारे बुद्धिमात्रेणापेक्षिता, किमत्र मनःप्राणेंद्रियैः कृत्यमिति। ईश्वरप्रसादे संसारहेतवोऽपि मुक्तिहेतवो भवंति। किंच प्रलयसुप्त्यादौ बुद्ध्याद्यशेषाणामभावकाले बुद्धेश्चाभावस्य दर्शनात् सर्गादौ मनःप्राणेंद्रियसद्भावकाले तस्याश्च सद्भावात् तैः सहैव बुद्धिः साक्षात्कारोपयोगिनी भवतीति भावो दर्शितः। तथाचोक्तं भगवता गीतासु 'सर्वाणींद्रियकर्माणि प्राणकर्माणि चापरे। आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते' इति। आत्मा बुद्धिस्तत्संयमः एकाग्रतास्वरूपाकारपरिणामः स एव योगः स एवाग्निः तस्मिन्निंद्रियप्राणकर्माणि अपरे योगिनो जुह्वति। प्रलये ब्रह्मणि लीनायां अव्यक्ताख्यायां प्रकृतौ यथा महदाद्यशेषतत्त्वानि लीयंते, तथा प्रारब्धशेषभोगायावशिष्टदेहस्य योगिनः स्वरूपाकारपरिणतायां बुद्धौ सर्वाणींद्रियप्राणकर्माणि लीयंते। सा च चिदाकारपरिणता न किमपि वेदेति स्मृतेश्चार्थः। इंद्रियकर्मणामभावात् विक्षेपराहित्येपि सुषुप्तिसाम्यशंका माभूदिति प्राणकर्मणां चाभावान्न सुषुप्तिः। सुषुप्तौ प्राणापानयोर्व्यापारबाहुल्यात् समाधौ तत्स्थैर्यादशेषबुद्ध्यादीनकल्पनायासृजदित्युक्तम्। अस्य श्लोकस्य वक्ष्यमाणश्लोकस्य सूत्रप्रायत्वात् वक्ष्यति च श्रुतिस्तुतिप्रसंगेन 'निभृतमरुन्मनोक्षदृढयोगयुजः' इति॥ इममेवार्थं स्तुतिप्रकरणमध्येऽपि वक्ष्यति च 'शास्त्रमवकृष्य शयीत यदे'ति। तथा च उपसंहारे 'श्रुतयस्त्वयि हि फलंत्यतन्निरसनेन भवन्निधनाः' इति। भवति निधनं शब्दरूपत्वत्यागात्स्वरूपेण सूक्ष्मत्वेन स्वरूपाकारपरिणामान्निधनमिव निधनं यासां ता भवन्निधना इत्यादि। तत्रैव वाक्यत्वेन स्फुटमिममर्थं व्याकरिष्यति भगवान्।

१ य. का. ६।१०। २ य. का. ६।११। ३ य. का. ३।३। ४ य. का. ३।४। ५ भ. गी. ४।२७।

एतावता साक्षान्निर्गुणेऽपि ब्रह्मणि वृत्तिशून्याश्चरंतीत्युक्तम्, किंतु स्थूलरूपेण न चरंतीत्येतावता 'यतो[१] वाचो निवर्तते' इत्यादिश्रुतिसिद्धं वाचामगोचरत्वं च यथा स्यात्तथा सिद्धम् । अनिर्देश्येऽनिर्वाच्ये कथं चरंतीत्यस्याप्युत्तरं सूक्ष्मरूपेण चरंतीत्यनेनैव सूचयति । इदमित्थमितिनिर्देशार्हं न भवतीत्यनिर्देश्यम् । तत्तु परबोधकत्वविषयं परस्यापरोक्षं यथा स्यात्तथा शब्दैरेव निर्देशासंभवात् बालचंद्रवत्, किंतु तत्र स्थूलशब्दस्य शाखांतमेव गमनं न चंद्रपर्यंतम् । इतरथा तु चंद्रं पश्यत इव कस्यचित्सर्वज्ञस्य बालेंदुरिति शब्दस्तत्र चरत्येव । तथा स्थूलशब्दरूपेण यथा चंद्रः स्वच्छः सूक्ष्मः शिशिर इत्यादि लक्षणैस्तन्निर्दिशति तथा 'सत्यं[२] ज्ञानमनंतं ब्रह्म'-त्यादिलक्षणैः सर्वज्ञ ईश्वरः स्ववेदरूपया वाचा ब्रह्म निर्दिशत्येव । 'यन्मनसा ध्यायति तद्वाचा वदती'ति श्रुतिसिद्धं च, किंत्वनुभवरूपेणैव ततस्ता एव । ततस्त्वनिर्देश्येपि श्रुतयश्चरंतीत्युत्तरम् । एतावतैव सदसतः परे प्रलयशेषेऽपि कथं श्रुतयश्चरंतीत्यस्योत्तरं सूचयति । यदा तु परमेश्वरचिच्छक्तिरूपाः श्रुतयो ब्रह्मणि चरंतीति सिद्धम् । चिच्छक्तिः सर्वज्ञतया 'नासदासीन्नो[३] सदासीत्तदानी'मित्यादि-लयशेषे तदितराभावत्वं च 'तदेकं तस्माद्धान्यन्न[४] परः किंचनास'ति । तदेकस्य सद्भावत्वं च परमेश्वरः स्थूलशब्दरूपाभिः श्रुतिभिर्वर्णयति । सुप्तोत्थितः प्राकृतोऽपि सुषुप्तिविश्लिष्टां बुद्धिमाश्लिष्य सुखमहमस्वाप्सं न किंचिदवेदिषमित्याह । सुषुप्त्यनुभवस्य तावन्मात्रत्वात्सुखं चान्यदवेदनं चेति । तथा सति किं वक्तव्यं सर्वज्ञ ईश्वरः प्रलयानुभवं वक्तीत्यत्र न चित्रमिति । यद्यपि प्रलये चिच्छक्तेरनुभवाभावस्तथापि सर्गादिप्रादुर्भूता संततानुभवरूपा स्वानुभूयमानमेव तदानीमासीन्नान्यत्कार्यकारणरूपं किमपीति जानती श्रुतिरूपा भगवन्मुखान्निःसरंतीति नात्र संशयः कोपि । ननु ब्रह्मणि श्रुतयः सूक्ष्मरूपेण चरंतीति साधयितुं बुद्धिर्ब्रह्मणि चरतीति शुकोक्तः श्लोको व्याकृतोऽपि नैवं श्रुतीनां स्थूलसूक्ष्मभेदेन रूपद्वयमिति श्रूयते इति चेद्वक्ष्यत्येकादशस्कंधे भगवानुद्धवं प्रति-'शब्दब्रह्म[५] सुदुर्बोधं प्राणेंद्रियमनोमयम् । अनंतपारं गंभीरं दुर्विगाह्यं समुद्रवत्' इत्यादि व्याख्यातं श्रीधरार्यैरेव । स्वरूपतोऽर्थतश्च दुर्विज्ञेयम् । ततश्च स्थूलं सूक्ष्मं चेति द्विविधम् । यतः सूक्ष्मं तावत्स्वरूपं ततो दुर्विज्ञेयमित्याह प्राणेंद्रियमनोमयम् । प्रथमं प्राणमयं पराख्यम् । ततो मनोमयं पश्यंत्याख्यम् । तत इंद्रियमयं मध्यमाख्यम् । तस्य वाग्व्यंजकत्वेन वागिंद्रियप्रधानत्वादित्यादि व्याकृत्य । तथा च 'चत्वारि[६] वाक्परिमिता पदानी'-त्यादि श्रुतिश्च लोकानुरूपा व्याकृता तथैवात्र भगवता श्रुतिकल्पलतायामियं

---

१ तै. २।४।१। २ तै. २।१। ३ ऋ. सं. ८।७।१७। ४ ऋ. सं. ८।७।१७। ५ भा. स्कं. ११।२१।३६। ६ ऋ. सं. २।३।२३।

श्रुतिर्व्याकृता। तस्माद्वेदानां स्थूलसूक्ष्मभेदेन रूपद्वयं श्रुतिपुराणसिद्धमिति। ननु शुकस्यात्र हृदयं नैवं स्यात्स्फुटमेवमनुक्तत्वादित्यपि न शंकनीयम्। एतत्प्रश्नोत्तरश्लोकार्थस्य श्रुतिस्तुतिप्रकरणनिरूपणेन वक्ष्यमाणत्वात् श्लोकस्य तत्सूत्रप्रायत्वात् 'सैषा ह्युपनिषद्ब्राह्मी'त्युत्तरपद्येनास्य श्लोकस्य बह्वर्थगर्भत्वस्य वक्ष्यमाणत्वात् स्फुटमेवं कुतो नोक्तमिति शंकापरिहारः स्पष्टं दृश्यते। शुकस्य हृदयं नैवमिति चेन्निखिलनिगमस्तुतेश्च तत्सूत्रप्रायस्य स्वगदितपद्यस्य निर्गलितार्थं उपसंहारे शुको वक्ष्यति— '**इत्येतद्वर्णितं राजन् यन्नः प्रश्नः कृतस्त्वया। यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि मनश्चरेत्**' इति। ब्रह्मण्यनिर्देश्ये निर्गुणे इति त्रिभिर्विशेषणैः परीक्षित्प्रश्नमनूद्योत्तरमाह 'ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः। कथं चरंति श्रुतयः साक्षात्सदसतः परे' इति यन्नः प्रश्नस्त्वया कृतः। नोऽस्माभिर्ब्रह्मण्यनिर्देश्ये निर्गुणे मनश्चरेदिति यथा स्यात्तथैतद्वर्णितम्। मनश्चरेन्नाम बुद्धिश्चरेत्। बुद्धिमनसोरंतःकरणवृत्तिरूपत्वान्न भेदः। '**दृश्यते त्वग्र्यया बुद्ध्या**' इति। '**मनसैवानुद्रष्टव्यम्**' इति च श्रुतेः। '**हृदा मनीषी मनसाऽभिक्लृप्तः**' इत्यादिषु क्वचिन्मनः क्वचिद्बुद्धिर्ब्रह्मणि चरतीत्युक्तत्वान्न शंकेति। तत्र तत्र निर्गुणेऽपीत्यपिशब्देन निर्गुणे गुणवृत्तयस्तेजसि तम इव कथं चरंति इति तव असंभवाशंका। तथा सत्यपि संशयो मास्तु। यस्मादकल्पनाय च बुद्धींद्रियमनःप्राणानेव प्रभुरसृजत्। बुद्ध्याद्यैरुच्चार्यमाणो गृह्यमाणः शब्दः सूक्ष्मसत्वरूपेण निर्गुणेऽपि नामरूपरूपं कल्पनारूपं पश्यंत्याख्यं विहाय परातीते मनआख्यं सत्वं तदाकारं सञ्चरेदित्युक्तत्वान्निर्गुणेऽपि यथा मनश्चरेदित्येवंप्रकारेणास्माभिरुत्तरमुक्तमिति भावः। न च वाच्यमस्माभिरित्येतत्तथा वर्णितं यथा श्रोतुर्मनो ब्रह्मणि निर्गुणेऽपि चरेदिति। कुतः? मनः कथं चरेदिति प्रश्नाभावात्। अपृष्टमाहेति चेद्यन्नः प्रश्नः कृतस्त्वयेत्युक्तत्वाद्ब्रह्मण्यनिर्देश्ये निर्गुणेऽपीत्यपिशब्दपुरःसरप्रश्नानुवादान्नायमर्थः। किंतु यदि कथं चरेदित्याशंकाशब्देनासंभावितत्वे मनश्चरेदित्यपिशब्दस्वारस्यं, श्लोकव्याख्यानं चैवं स्यात्। तदभावे तदभावः। ननु एवमर्थोऽस्तु कथं चरंतीति तव प्रश्नस्तत्रास्माभिर्मनश्चरेदित्येतद्वर्णितम्। यतः श्रुतयः सगुण एव चरंति न निर्गुणे इति शेषः। तस्मात् बुद्धींद्रियमनःप्राणानित्यादिप्रथमोक्तस्याप्येवमेवार्थो योजनीय इति न च वाच्यम्। निर्गुणे श्रुतयः कथं चरंतीति तव प्रथमः प्रश्नः। तन्नास्माभिर्मनश्चरेदित्युक्तं तव प्रश्नविलक्षणोत्तरत्वादित्येको दोषः। तथा ब्रह्मणि मनश्चरति न वेति संशयाभावात् ज्ञातृज्ञापकत्वात् द्वितीयः। सगुणे श्रुतयश्चरंतीत्यत्रासंभावना-

---

१ भा. स्कं. १०।८७।३। २ भा स्कं. १०।८७।४१। ३ का. ३।१२। ४ बृ. ४।४।१९। ५ का. ६।९।

राहित्यात्तत्र सगुण एव चरंतीति शेषे कल्पनाया अनवसरत्वात् तृतीयः। किंच अपिशब्दस्वारस्यभंगाभ्नायमर्थः। निर्गुणे गुणवृत्तिकं मनः कथं चरतीति प्रश्ने सत्यपि शब्दस्वारस्यभंगाभावादीदृगर्थकल्पनावसरः कुतः परकृतः स्यात्॥

॥ इति द्वितीयोऽध्यायः॥

---

# तृतीयोऽध्यायः।

तथा च–'सत्यादिलक्षणैर्ब्रह्म सगुणं वर्णयंत्यथ। तद्वाच्यांशापवादेन निर्गुणं ब्रह्म लक्ष्यते॥ १॥ इति चेत्तच्च वा सत्यं ज्ञानमंतविवर्जितम्। यल्लक्षणं वा तत्राद्ये श्रुतयो वर्णयंत्यहो॥ २॥ न च वाच्यं बृहत्सत्यं ज्ञानमंतविवर्जितम्। इति सिद्धे तु निगमैरपगह्यमहोऽत्र किम्॥ ३॥' किं ब्रह्मणोऽत्यंतमनिर्वाच्यत्वे सिद्धे सति अपिशब्दस्वारस्याभावेऽप्यपिशब्दे इतरव्यावृत्त्यर्थत्वेन व्याकृते सति स्यादप्ययमर्थः। तदभावे तदभावः। ननु श्रीधरार्यैः श्रुतयः सगुणमेवोपपादयंति न निर्गुणमिति व्याकृतत्वादेवमर्थः स्यादितिचेद् दुर्वारतया प्राप्तं श्रीधरार्यव्याख्याखंडनम्। भवतु नाम कोऽत्र दोषः। तदुक्तं भगवता—'**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वापि स इमाँलोकान्न हंति न निबध्यते**'[1] इति॥ विश्वरूपे भगवता कुरवो दर्शिता हताः। अर्जुनो हंति तानेवं वामनो व्याकरोत्यहो॥१॥ भगवद्यंत्रिते क्षांतिरर्जुने द्रोणभीष्मयोः। तथास्तु श्रीधरादीनां मयि व्याकर्तरीदृशे॥ २॥ श्रुतयः सगुणं ब्रह्म वर्णयंति न निर्गुणम्। इतिचेन्निर्गुणं न स्यात्सत्यज्ञानादिलक्षणम्॥ ३॥ '**सत्यं ज्ञानमनंतं**'[2] चेत्येवं यद्वर्णितं बृहत्। न निर्गुणं चेद्गुणं किमसज्जडमंतवत्॥ ४॥ नेतिचेत्तर्हि तत्सत्यं ज्ञानमंतविवर्जितम्। श्रुतयो वर्णयंत्येव नेति कस्मादुदीर्यते॥ ५॥ अनिर्देश्यमनिर्वाच्यं यन्निर्गुणमुदीर्यते। तत्सत्यं ज्ञानमिति च श्रुतिभिः खलु वर्ण्यते॥ ६॥ अनिर्देश्यमनिर्वाच्यं श्रुतिसिद्धमिति स्म चेत्। ब्रह्मणस्तादृशत्वं वा विज्ञातं श्रुतिभिः कथम्॥ ७॥ यदि ज्ञात्वा वदंत्येवमनिर्देश्ये चरंत्यहो। अज्ञात्वा यदि चेदाहुर्न प्रमाणं तदीरितम्॥ ८॥ श्रुतीनां शब्दरूपत्वाज्ज्ञातृज्ञानं स्वतो न चेत्। स्वतो जडत्वात्प्रामाण्यं न स्यादन्यद्विचिंत्यताम्॥ ९॥ तर्हीश्वरवचोरूपा इति चेत्स तु सर्ववित्। वर्णयत्यात्मनस्तत्त्वं सत्यज्ञानादिलक्षणम्॥ १०॥ '**नासदासीन्नो सदासीत्तदानीमि**'[3]ति च श्रुतिः। यदा न वेदा नोपाधिस्तच्छेषं वर्णयत्यपि॥ ११॥ अतल्लयमुदीर्यैवं तत्सद्भावं वदत्यपि। '**तस्माद्धान्यन्न च परः किंचनासे**'[4]ति च श्रुतेः॥ १२॥ लयशेषं तदेवेदं

---

१ भ. गी. १८।१७। २ तै. २।१। ३ ऋ. सं. ८।७।१७। ४ ऋ. सं. ८।७।१७।

श्रुतयश्च यतोऽधुना । ईशचिच्छक्तिरूपेण चरंत्यो निःसरंति च ॥ १३ ॥ निर्गुणं वर्णयंत्येव किंत्वशेषविलक्षणम् । ततोऽज्ञबोधविषये त्वनिर्देश्यं वदंत्यहो ॥ १४ ॥ वर्णितं चाप्यनिर्देश्यं वेदैः सत्यादिलक्षणम् । ब्रह्मणः सदृशाभावादशेषप्राकृतस्य च ॥ १५ ॥ शुक्तिसत्यत्वशब्देन शुक्तिकायाश्च सत्यता । कीदृशी ह्यनुमेया स्याद्रज-तत्वेन पश्यता ॥ १६ ॥ देहात्मज्ञेन वा पुंसा ज्ञानं ब्रह्मेति च श्रुतेः । निर्दिष्टं कीदृशं ज्ञानं ज्ञातव्यं वा परागृदशा ॥ १७ ॥ धर्मवर्जितचैतन्ये यावन्नोपरतं मनः । चैतन्यत्वेऽप्यतत्त्वज्ञः श्रुतात्मापि न वेत्त्यहो ॥ १८ ॥ भूमा सनत्कुमारेण निर्दिष्टो नारदाय च । छांदोग्ये तत्र नैवान्यदर्शनश्रवणादिकम् ॥ १९ ॥ अनंतत्वानुभावस्य 'यत्र[1] नान्यदि'ति श्रुतेः । तेनात्मानं न च विदुर्वेदांतज्ञानमानिनः ॥ २० ॥ 'निर्विकल्प[2]मनंतं च हेतुदृष्टांतवर्जितम्' । इति श्रुतेः परंब्रह्म दृष्टश्रुतविलक्षणम् ॥ २१ ॥ तदविद्यावतां तस्माद्ब्रह्म बोधयितुं क्षमः । शब्दो न भवतीत्यस्मादनिर्देश्यं तदीर्यते ॥ २२ ॥ बालचंद्रं यथा कश्चित्पश्यत्यपि वदत्यपि । अन्यं दर्शयितुं शब्दो न स्यात्तस्यापि च क्षमः ॥ २३ ॥ दर्शयंति ततश्चंद्रं शाखायामिव तद्विदः ॥ २४ ॥ एवं बृहदनिर्देश्यमनिर्वाच्यं न केवलम् । श्रुतयस्तु चरंत्येव सूक्ष्मरूपेण निर्गुणे ॥ २५॥ ततो बुद्धिस्ततः शब्दः शब्दा बुद्धिगता यतः । बालेंदौ बुद्धिरूपेण तज्ज्ञशब्दाश्चरं-त्यपि ॥ २६ ॥ वर्णयंत्यपि च स्थूला नान्यं दर्शयितुं क्षमाः । न दृष्टांते सर्वसाम्य-लक्षणानि निशापतेः ॥ २७ ॥ साधारणानि बृहतस्त्वदृष्टानि श्रुतानि वै । वर्णयंत्यपि तं साक्षान्नैव दर्शयितुं क्षमाः ॥ २८ ॥ शब्दा इत्येव दृष्टांतः 'सत्यं[3] ज्ञानमि'ति श्रुतेः । तस्मान्न सत्यं न ज्ञानं नानंतं स्याद्बृहद्यदि । न चरंतीति सिद्धं स्यान्निर्गुणे श्रुतयस्तदा ॥ २९ ॥ निर्गुणं यदि निर्देश्यं यदि सत्यादिलक्षणम् । तस्मिंश्चरंति श्रुतयः सत्यं ज्ञानमिति श्रुतेः ॥ ३० ॥ सत्यादिलक्षणं ब्रह्म सद्यो वेद विप-श्चितः । इति श्रुत्योपसंहारे सगुणं हेतुरीरितम् ॥ ३१ ॥ हेतुभूतेन यो वेद सर्वज्ञेन विपश्चिता । स सर्वानश्नुते कामान्ब्रह्म सत्यादिलक्षणम् ॥ ३२ ॥ एवं च निर्गुणं ज्ञेयं ज्ञानहेतुश्च सर्ववित् । इत्येवं श्रुतिसिद्धत्वान्न निर्गुणपराः कथम् ॥ ३३ ॥ श्रौतं पुरातनार्याणां मतमेव तदन्यथा । व्याख्यानं श्रीधरार्याणां न ततस्त्वत्र शोभते ॥ ३४ ॥ इति श्रीश्रुतिकल्पलतायां ब्रह्मणोऽसत्यतानित्यतानिर्वाच्यत्वखंडनं नाम तृतीयोऽध्यायः ॥ ३ ॥

॥ इति तृतीयोऽध्यायः ॥

---

१ छां. ७।२४। २ ब्रह्मबिंदु. ९। ३ तै. २।१।

# चतुर्थोऽध्यायः ।

व्याख्यातं च श्रीधरार्यैः । तदेवमुत्तरमाह—

**'बुद्धींद्रियमनःप्राणान् जनानामसृजत्प्रभुः ।**
**मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥ २ ॥'** [अ. २ पृ. ६]

बुद्ध्यादीनुपाधीन् जनानामनुशायिनां जीवानां मात्राद्यर्थं प्रभुरीश्वरोऽसृजत् । मीयंत इति मात्रा विषयास्तदर्थम् । भवार्थं भवो जन्मलक्षणं कर्म तत्प्रभृतिकर्मकरणार्थमित्यर्थः । आत्मने लोकांतरगामिने आत्मनस्तत्तल्लोकभोगार्थमित्यर्थः । अकल्पनाय कल्पनानिवृत्तये मुक्तये इत्यर्थः । अर्थ–धर्म–काम–मोक्षार्थमिति क्रमेण पदचतुष्टयस्यार्थः । जनानामिति वदन् जीवार्थमीश्वरस्य सृष्ट्यादिषु प्रवृत्तिरिति दर्शयति । प्रभुरितीश्वरस्य उपाधिवश्यताभावेन नित्यमुक्ततां दर्शयतीति श्रीधरार्यैर्व्याकृत्य श्रुतयो ब्रह्मणि कथं चरंतीति प्रश्नस्य अर्थ–धर्म–काम–मोक्षार्थं ईश्वरो बुद्ध्यादीनसृजदिति उत्तरं न स्यादित्याशंक्य प्रभुशब्देनात्राभिप्रायं कल्पयित्वा तदुत्तरत्वं संपादयंति–अयमभिप्राय इति । सगुणमेव गुणैरनभिभूतं सर्वज्ञं सर्वशक्तिं सर्वेश्वरं सर्वनियंतारं सर्वोपास्यं सर्वकर्मफलदातारं समस्तकल्याणगुणनिलयं सच्चिदानंदं भगवंतं श्रुतयः प्रतिपादयंतीत्यत्र प्रश्नानुरूपमुत्तरमनिष्पन्नमपि श्रीधरार्यैर्निगदितानि भगवतो विशेषणानि जगन्मंगलानि । अतः श्रवणमंगलव्याख्यानम्, किंतु पुरुषार्थचतुष्टयार्थमीश्वरो बुद्ध्यादीनसृजत् स प्रभुर्नित्यमुक्तस्तस्य जनानामिति जीवार्थं सृष्ट्यादिषु प्रवृत्तिरिति सगुणे श्रुतयश्चरंतीति वक्तुं शुकेन समप्रश्लोकेनैवं साधितत्वात् श्रुतयः सगुणमेव प्रतिपादयंति । तस्मान्न निर्गुणे चरंतीति साधितार्थस्य प्रश्नानुपयोगित्वान्नैवं सर्वज्ञस्य शुकस्योत्तरं भवितुमर्हति । सगुणे कुतश्चरंति कथं चरंतीति प्रश्ने सत्येवं श्लोकार्थस्यानिष्पन्नत्वेऽप्यभिप्रायकल्पनया नित्यमुक्तत्वाज्जीवार्थमीश्वरस्य सृष्ट्यादिषु प्रवृत्तत्वात् सगुणं प्रतिपादयंतीत्युत्तरमुचितं स्यात् । सगुणे श्रुतयश्चरंतीति प्रतिपादयंतीति न तत्र विरुद्धमिति व्यवसितत्वादेव निर्गुणे त्वेतदसंभावनया कृतस्य प्रश्नस्य सगुणे श्रुतयश्चरंतीत्यर्थस्य बलात्साधितत्वान्नायमर्थः । किंच भवो जन्म तल्लक्षणं कर्म तत्प्रभृति कर्मकरणार्थमिति । आत्मने लोकांतरगामिने आत्मनस्तत्तल्लोकभोगार्थमीश्वरो बुद्ध्यादीनसृजदिति पदानां पिष्टपेषणतया बालादिवश्यार्थमिव पुरुषार्थचतुष्टयार्थमिति बलात्साधितत्वादर्थधर्मादीनां बुद्ध्यादिसाध्यत्वस्य बहुधा निरूपितत्वात्तद्विषयसंशयराहित्यात्तादृशभावान्नायमर्थो घटते । अथ च प्रभोरुपाधिवश्यताभावेन नित्यमुक्ततां दर्शयति । ततः श्रुतयः सगुणमेवोपपादयंतीत्यभिप्रायपरंपराया अपि प्रश्नानुरूपत्वाभावात् प्रकरणस्य तत्सूत्रप्रायस्यास्य श्लोकस्योपसंहारे शुकोक्तफलितार्थविरुद्धत्वात् **'इत्येतद्वर्णितं राजन् यन्नः प्रश्नः कृतस्त्वया । यथा**

ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि मनश्चरे' इत्यर्थस्यानिष्पन्नत्वात् 'सैषा ह्युपनिषद्ब्राह्मी'त्युत्तरश्लोकेऽप्येतच्छ्लोकस्य ब्रह्मविद्यापरत्वस्योक्तत्वात्सृष्ट्यादिष्वीश्वरस्य प्रवृत्तिः तस्य च प्रभुत्वात्स्वाधीनोपाधिकत्वात् श्रुतयः सगुणमेवोपपादयंतीत्यर्थस्य ब्रह्मविद्यापरत्वासिद्धत्वान्नायमर्थो घटते। भेदवादिनोऽपि सृष्ट्यादिष्वीश्वरस्य प्रवृत्तिं च स्वाधीनाखिलशक्तित्वं चोपपादयंत्येव, न तावता ब्रह्मविद्यापरत्वं घटते। यच्चाहुः श्रीधरार्याः—ईश्वरस्य ईश्वरतां श्रुतयस्तत्त्वमसीत्यादिवाक्यैः संसारिणो जीवस्य तन्निवृत्तये बोधयंतीति जहदजहल्लक्षणया तत्त्वंपदयोर्विरुद्धांशत्यागेनानुगतचिदंशेनैकार्थेन सामानाधिकरण्येन श्रुतीनां निर्गुणे पर्यवसानं इत्येवं शब्दवृत्तिः कापि न संभवतीति। शब्दशास्त्ररीत्या व्याख्या भवत्यपि न हि शब्दसूक्ष्मस्वरूपं ब्रह्मानुभवं विना शब्दशास्त्रेणाधिगंतुं शक्यम्। 'चत्वारि वागि'[1]ति श्रुतेः। 'तानि विदुर्ब्राह्मणा ये मनीषिणः' इति निगदितत्वान्नात्र स्थूलशब्दप्रवृत्त्यवसरे श्रीधरार्याणां ब्रह्माद्वैतपराणामेवं शब्दशास्त्रमात्रानुसरणमुचितम्। न ह्यनुभवे शब्दवृत्तिविचारावसरो योग्यो भवति, तस्मान्नेदं व्याख्यानं सतां संमतं यन्न मूलानुसारम्, किंतु सगुणमेव श्रुतयः प्रतिपादयंति न निर्गुणम्, तथाचेत्तत्त्वमस्यादिवाक्यानां का गतिरिति चेदत्र संपादितवंतः। तत्र सगुणं श्रुतय उपपादयंतीत्याद्यर्थस्यालाभात्, प्रवृत्तिशब्देन यथाकथंचित्साधितमपि शुकोक्तफलितार्थविरुद्धम्। विरुद्धतममेवात्र यद्यपि शुकस्योत्तरं तथाप्ययमर्थो न विरुद्धः, यतोऽविद्यानिवृत्तिविषये परबोधकवाक्यानां शाखाचंद्रन्यायेन निर्गुणे पर्यवसानं न साक्षाद्बोधकत्वे संभवति, किंतु सर्वथा सगुणमेव प्रतिपादयंति न निर्गुणमित्ययमर्थो विरुद्धः। ब्रह्मणः सत्यादिलक्षणैर्वर्णितत्वात्। यस्मिन्वा निर्गुणे श्रुतीनां पर्यवसानमित्युक्तं तस्यापि सत्यज्ञानानंतादिलक्षणत्वान्नेति वक्तुमशक्यत्वान्न निर्गुणपराः श्रुतय इत्यसिद्धम्। ननु परीक्षित्प्रश्नश्लोके श्रीधरार्यैः शब्दस्य कापि वृत्तिर्ब्रह्मणि न संभवतीति व्याकृतत्वात्प्रश्नोत्तरयोरेकवाक्यत्वमितिचेत्, व्याकृतार्थैकवाक्यत्वेऽपि 'सत्यं[2] ज्ञानमनंतं ब्रह्म' इत्यादि सकलश्रुतिविरुद्धत्वान्नैवं वाक्यार्थः सतां संमतः स्यादित्यत्र परीक्षित्प्रश्नश्लोकव्याख्यायां भगवता श्रुतीनां ब्रह्मणि प्रवृत्तिर्घटत इति स्फुटीकृतमेव। यदि श्रुतीनां निर्गुणोपपादनं न घटेत तदा श्रुतिविषयत्वाभावे ब्रह्मवस्तु न स्यात्। नचैवं वाक्यार्थोऽपि समंजसतया निष्पन्नः, किंतु निर्गुणे कथं चरंतीति प्रश्नस्य यथाकथंचित्सगुणे चरंतीति साधितत्वात् क्लिष्टकल्पनया प्रश्नानुपयोगितया यथेष्टाभिप्रायस्यैव साधितत्वात्, तथापि कापि शब्दवृत्तिर्न संभवतीति कृत्वा कथंचिद्व्याकृतार्थ एव ग्राह्य इति चेत्, शब्दस्य सूक्ष्मरूपस्य श्रुतिन्यायानुभव-

१ ऋ. सं. २।३।२३। २ तै. २।१।

सिद्धत्वान्निर्गुणेऽपि श्रुतयः सूक्ष्मरूपेण चरंतीत्यर्थस्य सिद्धत्वात् स्थूलशब्दानामेव क्वापि वृत्तिर्न संभवतीत्यंगीकृत्यापि 'यतो वाचो निवर्तंत' इति श्रुत्युक्तानुभवे 'यत्र नान्यत्पश्यति' 'अशब्दं सूक्ष्मरूपं सत्त्व' मिति सिद्धत्वादुपसंहारे शुकोक्तफलितार्थैकवाक्यत्वात् श्लोकस्य समग्रस्य प्रश्नानुरूपेणार्थेन सामंजस्येनोत्तरस्य सिद्धत्वान्नेदं संमतं व्याख्यानम्। किंचैवमेतत्प्रश्नोत्तरश्लोकस्यार्थं स्फुटीकर्तुं श्रुतिस्तुतिप्रकरणस्य सगुणमात्रपरत्वं संपादयितुमत्राहुः श्रीधरार्याः। तथा चात्रैवोपक्रमे 'स्वसृष्टमिदमापीय शयानं सह शक्तिभि'रित्यादिना विशिष्टमालंबनमिति, तदपि न घटते, 'शयानं सह शक्तिभिः। तदंते बोधयांचक्रु'रित्यनेन श्रुतयः सगुणं स्तुवंतीत्येतावतैव यदि न निर्गुणपरा इतिचेन्मैवम्। शक्तिभिः शयानं तदानीं शक्तीनां निर्विशेषे लय इत्येव विवक्षितत्वात्। 'तर्हि न सन्न चासदुभयं न च कालजवः किमपि न शास्त्रमवकृष्य शयीत यदे'त्यत्र वक्ष्यमाणस्य प्रलयशेषस्यापि विशिष्टत्वापत्तेः 'सदेव सोम्येदमग्र आसी'दित्याद्यनेकश्रुतिविरोधात्। तथा च 'वियत इवापदस्य तव शून्यतुलां दधतः' इत्यादिना निर्धर्मकत्वस्य विवक्षितत्वात् प्रकरणस्य च सगुणागुणपरत्वेनैव सिद्धत्वात्। तथा च 'स्वसृष्टमिदमापीय शयानं सह शक्तिभि'रित्युपक्रमेऽपि शक्तिभिः शयानस्य स्वसृष्टमिदमापीयोपसंहृत्य लयशेषत्वेन स्थितस्योपपादकत्वात् 'तदेकं तस्माद्धान्यन्न परः किंचनासे'त्यादिश्रुतिसिद्धमेकं लयशेषं यत्र 'नासदासीन्नो सदासी'दित्यादिश्रुतिभिर्निराकृतो वाच्यांशस्तदपि यदि विशिष्टमेव चेत्—स्यात्प्रकरणं च विशिष्टपरमिति। यच्च 'श्रुतयस्त्वयि हि फलंत्यतन्निरसनेन भवन्निधना'इत्युपसंहरिष्यंति तावता विशिष्टमालंबनमित्युक्तम्। तच्चातन्निरसनं नाम तज्ज्ञात्वा तदितरस्य तन्निरसनीयस्य निरसनमुखेनेत्यस्मान्निर्गुणे चरंत्येव 'अव्यक्तात्पुरुषः परः। पुरुषान्न परं किंचित्सा काष्ठे'ति श्रुतेरव्यक्तात्परस्य यतः परं न किंचित्तस्याप्युपपादितत्वान्नायमर्थः। फलं नाम परबोधकत्वाविषये श्रुतीनां साक्षाद्बोधयितुमशक्यत्वादतन्निरसनेनैव सगुणे फलंति नाम जीवानुद्धरंति। 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा'इति श्रुतेरनाद्यादिगुरुत्वात्तत्त्वस्य गुर्वेकवेद्यत्वात्तत्रोपाधिनिरसनमात्रेण श्रुतीनां साफल्यमपि श्रुतीनां परबोधकत्वक्षमत्वाभावेऽपि निर्गुणं श्रुतयस्तूपपादयंत्येव 'पुरुषान्न परं किंचि' दिति श्रुतेः। निर्गुणमुपपादयंत्यपि बोधकत्वं त्वीश्वरस्यैव। उपक्रमे 'जय जय

---

१ तै. २।९। २ छां. ७।२४।१। ३ मुक्ति. २।७।२१। क. ३।१५। ४ छा. ६।२।१। ५ ऋ. सं. ८।७।१७। ६ य. का. ३।११। ७ श्वे. ६।१८। ८ का. १।३।११।

जह्यजा'मित्यविद्याहरणाय प्रार्थितत्वादुपसंहारेऽपि त्वमेवाविद्याविध्वंसको न वयं श्रुतयः स्वरूपेपवादेन तदितरनिषेधमात्रक्षमाः स्थूलरूपेण शाखांतगामिनः शब्दा इव न चंद्रपर्यंतगा इत्यर्थः। तथापि भवन्निधनाः भवति निर्गुणे निधनं सूक्ष्मबुद्ध्याख्यसत्त्वरूपेण चिदाकारपरिणामो यासां ताः। एतावता शुकोक्तप्रश्नोत्तरश्लोकानुरूपस्यार्थस्यैव सिद्धत्वात् श्रुतयः सूक्ष्मरूपेण ब्रह्मणि चरंति च परमेश्वरवचोरूपाः 'यन्मनसा ध्यायति यद्वाचा वदती'तिन्यायेन निर्गुणपराश्चेत्येव सिद्धं न निर्गुणपरा इत्यसिद्धत्वान्न श्रीधरार्यैर्व्याकृतोऽर्थः संमतः। क्लिष्टकल्पनया व्याकृतत्वात्। ननु संप्रदायभंगभीत्या ब्रह्मणोऽत्यंताऽनिर्वाच्यत्वमुपपादयितुमेवं व्याकृतत्वान्नात्र दोष इतिचेन्न ह्यन्याय्यो वेदांतसंप्रदायः। नच सच्छास्त्रकृतां मतमेवं, किंतु तैरुपपादितं परबोधविषयं पाक्षिकमनिर्वाच्यत्वं तदभिप्रायाऽनभिज्ञा व्याख्याकृतः केचिदात्यंतिकमनिर्वाच्यत्वमाहुः। तावता 'तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबंती'तिन्यायेनांधपरंपरया बहवोऽप्येवं बाध्यमाना अपि तदेवोपपादयंति। नचैतावता तेषां प्रागल्भ्यभंगः। अस्मिन्विषये नारदस्य सनकादीनां च संशयस्योत्पन्नत्वान्नारायणसनंदनाद्यैस्तत्रैवमुपपादितत्वात्। तदेव परीक्षितः प्रश्नमिषेण शुकेनारभ्यतेऽत्र श्रुतिस्तुतिप्रकरणम्, किंतु तत्सूत्रप्रायस्य गंभीरार्थगर्भस्य शुकोक्तश्लोकस्य दुरन्वयत्वादर्थावबोधाभावात्केवलानिर्वाच्यत्वपरमेव प्रकरणं च व्याकुर्वंति। तस्मान्न तथास्य पद्यस्य प्रकरणस्य चार्थः। किंतु श्रुतयो निर्गुणपरा एव सूक्ष्मरूपेण ब्रह्मणि चरंति च स्वरूपाविद्यावतां साक्षाद्बोधकत्वासंभवात् श्रुतय एव सूक्ष्मरूपेण निर्गुणे चरंत्यः स्थूलरूपेण तदनिर्देश्यत्वं अनिर्वाच्यत्वं चोपपादयंतीति गुरुचरणैः श्रीसच्चिदानंदभगवत्पादाचार्यैरेवमुपदिष्टत्वाद्व्याख्यत्वात् प्रमाणसिद्धत्वात् अनुभवगम्यत्वात् निखिलगुरुणा हरिणा बुद्धेरेवं प्रकाशितत्वाद्नेन प्रकारेण व्याक्रियते। ननु तत्त्वमस्यादिवाक्यानां जहदजहल्लक्षणया निर्गुणे पर्यवसानं न साक्षाद्बोधकत्वमिति श्रीधरार्यैरुपपादितत्वाद्ब्रह्मणोऽनिर्वाच्यत्वान्न ब्रह्मणि श्रुतयश्चरंतीति स्यादेवार्थ इतिचेन्मैवम्। बलात्कारेण नवीनवेदांतशास्त्रप्रवर्तकाः श्रुतीनां परबोधकत्वक्षमत्वराहित्यात् 'यतो वाचो निवर्तंत' इत्यादिश्रुतीनां परादिवाचां स्थूलत्वनिवर्तनत्वात् ब्रह्मात्यंतमनिर्वाच्यमित्याहुस्तन्न घटते। निर्गुणबोधकत्वविषये तु ब्रह्मानिर्देश्यमिति पूर्वाचार्यैर्व्यासादिभिरंगीक्रियत एव। तस्मिन्पक्षे ब्रह्मानिर्वाच्यमेव परबोधकत्वविषयत्वात्। तत्त्वमस्यादिबोधकवाक्यानां स्वतो बोधकत्वासंभवादेव 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छे'दित्येवकारेण तत्त्वस्य गुर्वेकवेद्यत्वं सूच्यते नात्यंतिकमनिर्वाच्यत्वमिति श्रुतयश्चरं-

१ नृ. पू. १।१। २ तै. २।४।१। ३ मु. १।१२।

तीति वक्तुं शक्यते । तद्विज्ञानार्थमिति कथितत्वात्तज्ज्ञानाभावे तद्विज्ञानार्थमिति वक्तुमशक्यत्वात् । तथाच वक्ष्यत्येकादशस्कंधेऽपि 'शब्दोऽपि[1] बोधकनिषेधतयात्ममूलमर्थोक्तमाह यहते न निषेधसिद्धि'रिति । शब्दो वेदो बोधकनिषेधतया 'गुरुमेवाभिगच्छे[2]'दित्यादिवाक्यैः स्वस्य बोधकत्वनिषेधतयाप्यात्ममूलमर्थोक्तं स्वस्याविर्भावस्थानं सूक्ष्मसत्त्वरूपेण ब्रह्मणो भूतत्वात् परादिस्थानं प्राप्य वैखर्यां शब्दत्वेन स्थूलरूपेण प्रकाश्यमानत्वादात्ममूलं ब्रह्म 'सत्यं[3] ज्ञानमनंतं ब्रह्मे'त्यादिलक्षणमर्थात्परबोधकत्वराहित्येऽपि स्वरूपोपपादनमात्रत्वेन यथोक्तं स्यात्तथार्थोक्तमाह । तदपि कुतोऽर्थादप्याहेतिचेत्तत्राह–'यहते[1] न निषेधसिद्धि'रिति । यहते यस्य ज्ञानं विना निषेधसिद्धिर्न संभवतीत्यर्थः । तस्य ज्ञानादतन्निरसनस्य संभावितत्वात्परबोधकत्वं यद्यपि न संभवति, तथापि ब्रह्म जानंति तत एव अर्थादुक्तं यथा स्यात्तथा श्रुतय आहुरित्यभिप्रायः । 'तद्विज्ञा[3]नार्थ'मित्युक्तत्वात् । 'यतो[3] वाचो निवर्तंत' इति तज्ज्ञानाभावात्ततो वाचो निवर्तंत इति वक्तुमशक्यत्वात् । तथाच 'यत्र[4] नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे'ति 'यतो[3] वाचो निवर्तंते[4]' तस्याप्यनुभवस्यानुभवस्तस्यापि स्वरूपस्य 'स[4] भूमे'त्युपपादितत्वात् । विषयानिर्देश्यत्वमनिर्वाच्यत्वमंगीक्रियत एव बालचंद्रवत् । शब्दैरुपपाद्यमानत्वेऽपि तद्विदं विना शब्दमात्रेण दर्शयितुमशक्यत्वात् । अन्यथा तत्त्वमस्यादिवाक्यानामपि तत्त्वमगोचरमितिचेत्तदज्ञात्वैव तत्त्वमसीत्याहुरिति सिद्धे प्रामाण्यभंगः । ज्ञात्वा यदि तत्त्वमसीत्युपदिशंतीति चेन्निर्गुणे चरंत्येवेति सिद्धम् । ननु तत्पदेनेश्वरस्त्वंपदेन जीवस्तयोर्विरुद्धांशत्यागेन चिदंशैक्येन परंपरया तयोरैक्यमुपदिशंतीति चेदस्तु नाम केनापि प्रकारेण यदैक्यमुपदिशंति तज्ज्ञात्वैवेति सिद्धे न तत्त्वमगोचरमिति सिद्धम् । तर्हि ब्रह्म निर्देश्यमिति चेन्मैवम् । परस्यैवमित्थमिति श्रुतिभिर्बोधयितुमशक्यत्वादिदमित्थमिति निर्देशार्हं न भवति । बालेंदुवत् शब्दा उपपादयंतोऽपि परस्य दर्शयितुं न समर्था भवंति । तस्मादनिर्वाच्यत्वेऽपि श्रुतयो ब्रह्मणि चरंतीति सिद्धम् । ननु वेदा ईश्वरवचोरूपास्तेषां स्वतो ज्ञानाज्ञानं न संभवतीति चेदीश्वरो ज्ञात्वा वदतीति सिद्धे तदेव त्विदानीं ज्ञानं 'यन्मनसा[5] ध्यायति तद्वाचा वदती'ति श्रुतिसिद्धं च । तत्र यदेव मनस्तदेव शब्दस्य सूक्ष्मं रूपम् । 'चत्वारि[6] वागि'ति श्रुतेः । तस्मात्केनापि प्रकारेण सूक्ष्मरूपेण श्रुतयो ब्रह्मणि चरंतीत्यंगीकर्तव्यमिति सिद्धम् । अलमतिविस्तरेण ॥ २ ॥

॥ इति श्रीश्रुतिकल्पलतायां श्रीमद्भागवते महापुराणे दशमस्कंधे श्रुतिस्तुतौ

---

१ भा. स्क. ११।३।३६। २ मु. १।१२। ३ तै. २।९। ४ छा. ७।२४।१। ५ नृ. पू. १।१। ६ ऋ. सं. २।३।२३।

प्रकरणसंग्रहार्थरूपप्रश्नोत्तरपदद्वयव्याख्यानोपक्रमप्रकरणे मूलविरुद्धव्याख्याखंडनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

॥ इति चतुर्थोऽध्यायः ॥

---

# पंचमोऽध्यायः।

प्रकृतमनुसृत्य भगवान् ग्रंथमुत्तरत्र व्याकर्तुमारभते—

तृतीय उक्तोत्तरस्य निगमस्तुतिरूपताम्। संपादयति तां वक्तुं सर्वज्ञो व्याससनंदनः ॥

उपनिषदर्थसंग्रहरूपमेतत्तत्र प्रश्नोत्तरं शिष्टपरंपरागतमपीत्याह—

**सैषा ह्युपनिषद्ब्राह्मी पूर्वेषां पूर्वजैर्धृता।**
**श्रद्धया धारयेद्यस्तां श्रेयो गच्छेदकिंचनः ॥ ३ ॥**

एषा हि उपनिषत् ब्राह्मी। सा या पूर्वेषां पूर्वजैर्धृतेत्यन्वयः। एषा पूर्वपद्येन मदुक्ता उपनिषत् ब्रह्मविद्येत्यर्थः। श्रुतयः सूक्ष्माः सत्यः सत्त्वेन रूपेण निर्गुणे चरंतीति वक्तुं आत्मने अकल्पनाय चेति श्रवणादिसाक्षात्कारपर्यंतं ब्रह्मविद्याया निरूपितत्वात्। सैषा ह्युपनिषद्ब्राह्मीत्युक्त्वा पूर्वेषां कश्यपादीनां पूर्वजाः नारदसनकादयस्तैर्धृता श्रुतिस्तुतिरूपेण मनसि धृतेत्यर्थः। त्वया नात्र संशयः कार्य इति भावः। एवमुक्तविद्यायाः परत्वमुक्त्वा सौलभ्यमाह। यस्तां विद्यां कोऽपि वा धारयेत् स श्रेयो गच्छेत् परं पदं प्राप्नुयान्नात्र वर्णाश्रमनियम इत्यर्थः। तर्हि किमिति सर्वेऽप्युपनिषदर्थविदः श्रेयो न गच्छंतीति चेत्तत्राह—श्रद्धयेति। यः श्रद्धया धारयेत् स एव, न त्वधीतवेदांतोऽपि विविधकुतर्कादिशास्त्रकल्मषचित्त इत्यर्थः। ननु वेदांतश्रद्धानाश्च बहवो व्यसनसमुद्र एव निमज्जंतो दृश्यंते इत्याशंक्याह—अकिंचन इति। न विद्यते किंचन यस्मादन्यदित्यकिंचनः उपाधिनिषेधशेषमधिगम्य पटवदिदं सर्वं न ततः पृथगित्यात्मनोऽन्यन्न किमप्यस्तीति ज्ञानवान् निरस्ताविद्य इत्यर्थः। उपनिषदर्थज्ञानमात्रेण न श्रेय इति भावः। '**तमेवं**[1]**विद्वानमृत इह भवती**'ति। '**आनंदं**[2] **ब्रह्मणो विद्वान्न बिभेति कुतश्चने**'ति च श्रुतेः। '**नैषा**[3] **तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठे**'ति श्रुतेस्तत्त्वस्य गुर्वेकवेद्यत्वात्। नहि पाकमात्रेण क्षुन्निवृत्तिरिति न्यायात् ॥ ३ ॥

---

१ नृ. पू. १।६। २ तै. २।९। ३ का. १।२।९।

पूर्वजैर्धृता त्वया कुतः प्राप्तेत्यपेक्षायामितिहासमवतारयति—

**अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम् ।**
**नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४ ॥**

अत्रास्मिन्विषये नारदस्य नारायणस्यर्षेश्च संवादं ते तुभ्यं वर्णयिष्यामि । तयोः संवादे या गाथा सनकादिसंवादरूपा तां च वर्णयिष्यामि । कथंभूताम् ? । नारायणान्विताम् । नरस्य जीवस्येमानि तत्त्वानि प्रकृत्यादीनि नाराणि तेषां अयनं आश्रयः मिथ्यासर्पस्य रज्जुवदधिष्ठानं प्रकाशकश्च योऽसौ नारायणस्तदेकप्रकाशकं वेद्यं तत्त्वमित्यर्थः । तेनान्वितां तस्यां श्रुतिस्तुतिरूपं तत्त्वनिरूपणं तत्सहितां वर्णयिष्यामीति भावः । अत्र व्याकृतं श्रीधरार्यैर्नारायणान्वितां नारायणः प्रवक्तृत्वेन अन्वितो यस्यां तां गाथामिति । तथा वास्तु । किंतु नारदस्य नारायणस्य च संवादं वर्णयिष्यामीत्येतावतैव गाथायाः प्रवक्तृनारायणान्वितत्वे सिद्धे पुनः प्रवक्तृत्वेनान्वितत्वस्य पुनरुक्तेरप्रौढोक्तित्वान्नैवं व्याक्रियते । न चाप्रसिद्धोऽयमर्थः । किंतु वक्ष्यमाणैकादशस्कंधे विदेहप्रश्नोऽप्येवम् । तथा च वक्ष्यति '[1]**नारायणाभिधानस्य ब्रह्मणः परमात्मनः । निष्ठामर्हथ नो वक्तुं यूयं हि ब्रह्मवित्तमाः**' इति । नारायण इत्यभिधानं यस्य ब्रह्मणस्तस्य निष्ठां वक्तुमर्हथेत्यनेन प्रकृत्यादितत्त्वानां जाग्रदाद्यवस्थासहितानां नाराणां नरस्य तत्त्वानामयनत्वेन ज्ञेयं यद्ब्रह्म तन्नारायणाभिधानं तस्य निष्ठां नितरां स्थितिं नाराणां प्रकृत्यादीनां नरतत्त्वानां यं विना प्रकाशाभावादवस्तुत्वात् सर्वं केवलो नारायण इत्यर्थे या स्थितिस्तामित्यर्थः । अस्योत्तरस्याप्येतदनुरूपत्वान्नात्रार्थांतरकल्पनावकाशः । उत्तरमत्र वक्ष्यति पिप्पलायनः '[2]**स्थित्युद्भवप्रलयहेतुरहेतुरस्य यः स्वप्नजागरसुषुप्तिषु सन्बहिश्च । देहेंद्रियासुहृदयानि चरंति येन संजीवितानि तदवेहि परं नरेंद्र**' इति । स्वप्नजाग्रदादिष्वन्वितोऽपि व्यतिरिक्तोऽथ येन देहेंद्रियासुहृदयानि चरंति स एव स्थित्यादिहेतुः स्वयमहेतुस्तदेव परं नारायणाभिधानं ब्रह्म तदवेहि आत्मत्वेन जानीहि । सर्वान्वयेऽपि व्यतिरिक्तत्वाद्रजतात् भिन्नाया मिथ्यारजतप्रकाशिकायाः शुक्तेरिव तस्य निष्ठां चावेहीत्यर्थः । अतोऽत्र **नारायणपदमेवं व्याकृतं रसज्ञैः साराभिज्ञैरमत्सरैः सम्यगवलोकनीयम्** । एकादशस्कंधे नारायणाभिधानपरस्य पद्यस्यापि श्रीधरार्यैर्व्याकृतं तदपि तत्र प्रष्टुरभिप्रायमविदित्वा यथाकथंचिदेव ब्रह्मैव तावन्नारायण इति भगवानिति परमात्मेति चोच्यत इति व्याख्याने मुख्ये सति गौणस्यान्याय्यत्वमिति न्यायान्नैवं वाक्यार्थः । ब्रह्मैव नारायणादिनाम-

---

१ भा. स्क. ११।३।३४। २ भा. स्क. ११।३।३५।

भिरुच्यते तदपि योगवृत्त्या नतु रूढिनाम ब्रह्मणः किमपि घटते । ततोऽत्र नारायणाभिधानस्येति प्रश्नात्तदेव हीति शुकोक्तिः ॥ ४ ॥

कदा नारदस्य नारायणसमागम आसीदित्यपेक्षायामाह—

**एकदा नारदो लोकान् पर्यटन्भगवत्प्रियः ।**
**सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥ ५ ॥**

लोकान् पर्यटन् भगवत्प्रियो नारद एकदा सनातनं नित्यं असाधारणमृषिमित्यर्थः । द्रष्टुं नारायणाश्रमं बदरीं ययौ ॥ ५ ॥

श्रीमन्नारायणावतारकृततपसो जगदुद्धारैकहेतुत्वं वर्णयति—

**यो वै भारतवर्षेऽस्मिन् क्षेमाय स्वस्तये नृणाम् ।**
**धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः ॥ ६ ॥**

योऽस्मिन् भारतखंडे कर्मभूमौ नृणां जीवानां स्वस्तये क्षेमाय स्वर्गापवर्गाय आकल्पात् कल्पमभिव्याप्य तप आस्थितः । तपसः स्वर्गापवर्गहेतुकत्वं दर्शयति–धर्मज्ञानशमोपेतमिति । धर्मेण स्वर्गः ज्ञानशमाभ्यां अपवर्गः नृणां अस्मिन् कर्मफलप्रदे वर्षे भूयादिति भावेन तपश्चरतीति भावः । एतावता स्वमायाबलस्याचिंत्यत्वाज्जीवानां धर्मादौ प्रवृत्तिरेव न स्यादतः परमकारुणिको भगवान् ऋषिरूपेणावतीर्य धर्मादियुक्तं तप आचरतीत्यभिप्रायः ॥ ६ ॥

प्रस्तुतमाह—

**तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ।**
**परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥ ७ ॥**

इदमेवापृच्छत् । स्वामिन्, '**ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः । कथं चरंति श्रुतयः साक्षात्सदसतः परे**' इति । हे कुरूद्वह, तव प्रश्न एव नारदप्रश्न इत्यर्थः । शेषं स्पष्टम् ॥ ७ ॥

एवं प्रश्ने कृते श्रुतिस्तुतिप्रकरणं वक्तुमुपचक्रम इत्याह—

**तस्मै ह्यवोचद्भगवानृषीणां शृण्वतामिदम् ।**
**यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥ ८ ॥**

तस्मै नारदाय शृण्वतां ऋषीणां मध्ये इदं वक्ष्यमाणमवोचत् । किं तत् ? पूर्वेषां जनलोकनिवासिनां सनकादीनां यो ब्रह्मवादः ॥ ८ ॥

एतदेव श्रीभगवानुवाच—

**स्वायंभुवब्रह्मसत्रं जनलोकेऽभवत्पुरा ।**
**तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥ ९ ॥**

पुरा पूर्वं जनलोके स्वायंभुवब्रह्मसत्रमभवत् । स्वयंभुवो ब्रह्मणः पुत्राः स्वायंभुवाः तेषां ब्रह्मसत्रं ब्रह्ममीमांसारूपो यज्ञ इत्यर्थः । तदुक्तं भगवता '[1]**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः**' इति ॥ ९ ॥

एतस्याश्रवणे कारणमाह—

**श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम् ।**
**ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ॥**
**तत्र हायमभूत्प्रश्नस्त्वं मां यमनुपृच्छसि ॥ १० ॥**

त्वयि श्वेतद्वीपं प्रति तदीश्वरं श्वेतद्वीपनिवासिनं मां द्रष्टुं गतवति तत्र तस्मिन्काले अयं प्रश्नः अभूत् । कः ? यं प्रश्नं त्वं मां अनुपृच्छसि । परीक्षिन्नारदयोः प्रश्न एवायं प्रश्नः । ततः किमत आह–ब्रह्मवादः सुसंवृत्तः सुतरां साकल्येन सम्यक्न्यायाम्नायसिद्धः वृत्तः प्रवृत्त इत्यर्थः । एतत्प्रश्नशंकापरिहाराय वक्ष्यमाणप्रकरणस्य फलितार्थमाह--**श्रुतयो यत्र शेरत** इति । यत्र यस्मिन्ब्रह्मवादे श्रुतयः शेरते स्वपंति । '**शास्त्रमवकृष्य शयीत यदे**'ति वक्ष्यमाणत्वात् । प्रलये श्रुतयः सूक्ष्मरूपाः परमेश्वरे चिच्छक्तिब्रह्मणि लीना भवंतीति निरूप्यमाणत्वात् स यदा शेते तदा श्रुतयश्च शेरत इति यत्र यस्मिन्ब्रह्मवादे स्फुटं भविष्यतीत्यर्थः । एतावता निर्गुणे गुणवृत्तयः श्रुतयः कथं चरंतीति तव प्रश्नोत्तरं तत्र स्फुटं भविष्यतीति भावः । चिच्छक्तिलये श्रुतीनां यदि लयस्तर्हि तस्याः प्रादुर्भावे तासां प्रादुर्भावः सा यतो ब्रह्मण्यखंडानुभवरूपा चरति, ततः सूक्ष्मरूपेण श्रुतयो निर्गुणेऽपि चरंति । ततो '**यन्मनसा ध्यायति तद्वाचा वदती**'तिन्यायेनेश्वरमुखाच्छब्दरूपा जगदुद्धारतया बहिर्निःसरंतीति त्वयाधिगंतव्यमित्यतिनिगूढाभिप्रायः । एतद्वाक्यं श्रीधरार्यैर्न व्याकृतं स्वकृतसिद्धांतविरोधात् । प्रकारांतरेण योजयितुमशक्यत्वात् । ततश्च शुकवदत्र सूत्रप्रायं तदनुरूपं वक्ष्यमाणप्रकरणानुसारं भगवताप्युत्तरं दत्तमित्यधिगंतव्यम् ॥ १० ॥

---

१ नृ. पू. १।१।

एवमेतत्प्रकरणप्रवर्तकत्वं सनकादिमुनिपर्यंतं पर्यवसितं न तत ऊर्ध्वं, किंतु तेषु त एव सनंदनं प्रवक्तृत्वेन वरयामासुरन्ये श्रोतारो बभूवुरित्याह—

**तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः।**
**अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे॥ ११॥**

तुल्यानि श्रुतादीनि येषां ते, तथा तुल्याः स्वीयादयो येषां ते तथा। एवं न्यूनाधिकत्वरहिता अपि एकं सनंदनं प्रवचनं चक्रुः। प्रकृष्टं संशयच्छेत्तृ वचनं यस्य स प्रवचनस्तं संप्रति प्राप्तस्य संशयस्य च्छेदकं चक्रुः। तमेनं संशयं छिंधीति प्रार्थयामासुरित्यर्थः। अपरे शुश्रूषवो बभूवुरिति शेषः। तत्र तुल्यश्रुततपःशीला इत्यनेन सनंदनस्य नान्यतः श्रवणमिति सूचितम्। श्रुतादेस्तुल्यत्वात्। तर्हि सर्वेषामन्यत एव कस्मादपि गुरुत एतत्प्रकरणश्रवणमनुमेयमिति चेत् शंकानिवृत्तिहेतुभूता शुश्रूषाविवक्षा न स्यात्, तर्हि सर्वे प्रवचनयोग्या अपि केनापि कौतुकेनैकं प्रवक्तारं कृत्वाऽन्ये पप्रच्छुरिति श्रीधरार्यैर्व्याकृतं तथा वास्तु इति चेत्, तदपि न घटते। '**तत्र ह्ययमभूत्प्रश्नस्त्वं मां यमनुपृच्छसी**'ति[1] भगवता नारदं प्रत्युक्तत्वान्निर्गुणे गुणवृत्तयः श्रुतयः कथं चरंतीति नारदेनापि यदि संशयं विना केनापि कौतुकेन प्रश्नः कृतः स्यात्। सनकादिष्वपि संशयाभावात् कौतुकेन शुश्रूषाविवक्षा संभवेत्। नहि नारदस्य निःसंशयः प्रश्नः '**प्रणतोऽपृच्छदिदमेव कुरूद्वहे**'ति[2] शुकेनोक्तत्वात्। यदि परीक्षितः प्रश्नो निःसंशयः स्यान्नारदसनकादिप्रश्नोऽपि निःसंशय इति स्यादेव इत्यतः शुकेनापि कौतुकेन सनंदनं प्रवक्तारं चक्रुरन्ये पप्रच्छुरिति प्रसिध्येत। तदभावे तदभावः। तर्हि तुल्यश्रुतादिष्वेक एव सनंदनः संशयनिरसने कथं क्षम इति चेदेतदत्र चिंत्यम्। यद्यपि ते सर्वे पूर्णा एव तथापि नारदवत्तेषामपि निर्गुणे गुणवृत्तयः कथं चरंतीति संशये समुत्पन्ने स्वयं ते त्रिकालज्ञा ऋषयस्तथापि नेश्वरवत्तेषां नित्यसर्वसाक्षित्वसार्वज्ञ्यं किंतु योगतपःप्रभावेणैव भूतं भविष्यं वा तेषां बुद्धिगोचरं स्यादतस्ते श्रुतादितुल्या अपि सनंदनमत्र प्रवचनं चक्रुस्त्वमेको योगतपःप्रभावेण विचिंत्य शुश्रूषतामस्माकं संशयं छिंधीति प्रार्थयामासुः। ततः सनंदनो योगतपःप्रभावेण सर्गादौ श्रुतिभिः स्तुतो भगवांस्तत्प्रकरणमुद्धृत्य वक्तुमारभत इत्यधिगंतव्यम्। तथाच वक्ष्यति भगवान्नारायणायोपसंहारे '**इत्यशेषसमाम्नायपुराणोपनिषद्रसः। समुद्धृतः पूर्वजातैर्व्योमयानैर्महात्मभि**'रिति। समुद्धृत इत्यनेन सनंदन इत्यनेन सनंदनं पुरस्कृत्य सर्गादौ प्रवृत्तं अप्रसिद्धं तैरुद्धृतमित्यर्थः सूचितः। व्योमयानैर्महात्मभिरित्यनेन तेषां योगतपोवीर्यं सूचितम्। तर्हि वेदादीनामिव नित्यमुक्तादीश्वरान्नास्य प्रकरणस्य प्रवृत्तिरितिचेत्स्वयं

१ भा. १०।८७।८। २ भा. १०।८७।७।

भगवानृषिरूपेणावतीर्ण एव तत्राह, इत्यशेषसमाम्नायपुराणोपनिषद्रस इति । तस्मात्सनकादय एवास्य प्रकरणस्य प्रवर्तका इति नारायणमुखात् सिद्धम् ॥ ११ ॥

तदेवं योगबलेनोद्धृतं प्रकरणं वक्तुं सनंदन उवाच—

**स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ।**
**तदंते बोधयांचक्रुस्तल्लिंगैः श्रुतयः परम् ॥ १२ ॥**

इदं स्वसृष्टं जगत् आपीय संहृत्य प्रकृत्यादिशक्तिभिः शयानं तदंते प्रलयकालमर्यादांते श्रुतयस्तल्लिंगैः सगुणनिर्गुणलक्षणैः परं परमात्मानं बोधयांचक्रुः । इदमापीयेत्यनेन इदानींतनस्य जगतो विद्यमानत्वादिदं शरीरं गतजन्मनि नष्टमिति वक्तुमयोग्यत्वादिदंशब्दाज्जगतो मिथ्यात्वं सूचयति । मुहुर्दृष्टेऽपि गुणे स एव फणिर्नान्य इति वक्तुं शक्यते मिथ्यात्वात् । नहि पतितकुड्यादिगृहस्येव पुनःपुनः सत्यत्वेनैतन्निर्माणमिति भावः । शक्तिभिरित्यत्र बहुवचनं महदाद्यभिप्रायं । यस्यां तेषां लयस्तया प्रकृत्या शयानं योगनिद्रया स्थितमिति भावः । तदंते नाम यथा त्वतिक्रांतमध्यान्हकाले किरणस्थजलाभासस्याभावः स प्रलयकालः प्रकृत्याद्यभावात्, तदंते पुनरपरेऽहनि सलिलाभासस्योदयकालस्तस्मिन्काले मृगांबुवत्प्रकृत्याद्युद्भवकाले इत्यर्थः । '**यतः प्रसूता जगतः प्रसूतिरि**'ति[१] श्रुतेः । शयानं बोधयांचक्रुरित्यत्र कालात्मनः प्रादुर्भावानंतरं भगवतः श्रीमूर्तेः प्रादुर्भावात्प्राक् सगुणरूपं सावयवं शयानमिव शयानमप्रादुर्भूतत्वात् तत्सगुणरूपमाविष्कुरु इति प्रार्थनाया एव बोधकत्वमित्यनेन प्रकारेण बोधयांचक्रुरित्यधिगंतव्यम् । कालस्यैव श्रीमूर्तितयाविर्भूतत्वात् । तृतीयस्कंधे '**गुणव्यतिकरः[२] कालो निर्विशेषोऽप्रतिष्ठितः । पुरुषस्तदुपादानमात्मानं लीलयासृजदि**'ति । गुणव्यतिकरो महदादिरूपो गुणक्षोभः स एव आकारो यस्य स तथा तावन्मात्ररूप इत्यर्थः । अतएव निर्विशेषः करचरणादिविशेषरहितः । '**अ[३]पाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः**' इति श्रुतेः । पाणिपादराहित्येऽपि सधर्मकत्वान्न निर्गुणो न च सावयवस्तत एवाप्रतिष्ठितः । प्रकर्षेण स्थितिः प्रतिष्ठा सा संजाता यस्य स प्रतिष्ठितः, न प्रतिष्ठितोऽप्रतिष्ठितः गोः सर्वांगस्थितक्षीरवदप्रतिष्ठितः अनुपलभ्यमानत्वात् न स्तनेष्विव क्षीरवत्प्रतिष्ठितः उपलभ्यमानत्वात् ततोऽप्रतिष्ठितः । अत्रानेन रूपेण तिष्ठतीति न निर्णीत इत्यप्रतिष्ठितस्तत एव निर्विशेषं गुणव्यतिकराकारं कालरूपं परमेश्वरस्य सावयवरूपस्योपादानं प्रतिमायाः कनकमिव तत एव पुरुष-

---

१ म. ना. १।४। २ भा. स्क. ३। ३ श्वे. ३।१९।

स्तदुपादानमात्मानं देहं श्रीमूर्तिं लीलयैवासृजन्न कर्मबद्धजीवानामिव देहं स्वीकृतवानिति श्लोकस्यार्थः। ततोऽत्र महदादिगुणक्षोभाकृति, कालरूपेणाविर्भूतत्वात् श्रुतीनां प्रबोधकत्वस्य संभावितत्वादेव नित्यम्। गुणक्षोभरूपकालाविर्भावात्प्राक् श्रुतीनामभावात्। 'तस्माद्धान्यन्न परः किंचनास'[1]ेति श्रुतेः। वक्ष्यति च 'शास्त्रमवकृष्य शयीत यदे'ति। व्याकृतमत्र श्रीधराचार्यैः सृष्टिसमये प्रथमनिःश्वासप्रसूताः श्रुतयः प्रबोधयामासुरिति। एतावता प्रबुद्धं नैव बोधयामासुरिति सिद्धम्। प्रलये निःश्वासाभावाद्यः प्रथमो निःश्वासः स एव प्रबोधस्ततो नायमर्थः। अतः प्रलयावशेषे श्रुतीनामभावात् प्रथमनिःश्वासरूपेण तासां प्रादुर्भावस्यैव प्रबोधरूपत्वाद् 'अपाणिपाद'[2] इतिश्रुतेररूपं निर्विशेषं 'पश्यत्यचक्षु'रितिश्रुतेः सधर्मकं गुणक्षोभाकृतिकालरूपं परमेश्वरं सगुणसावयवरूपेण भक्तवात्सल्यादिगुणानाविष्कुर्विति प्रार्थयंतीत्येव निगूढाभिप्रायः। 'जय जय जह्यजामजिते'[3]त्यादिजीवाविद्याहरणायैव स्तुतेर्वक्ष्यमाणत्वात्। यद्वा 'तदंते बोधयांचक्रु'रित्यत्र दिनप्रलयांते श्रुतयः सर्गादौ प्रबोधयंतीतिचेत् तदपि न संघटते। 'स्वसृष्टमिदमापीये'[4]त्युक्तत्वात्। तत्र त्रैलोक्यमात्रस्यैव लयो न स्वसृष्टस्य समग्रजगतः। इदं शब्देन श्रोतृसभादृग्गोचरमात्रस्यैव लयविवक्षया तु जनलोके सनंदनोक्तिरियं दैव्यप्रलये महर्लोकस्य न नाशस्तत ऊर्ध्वोऽयं जनलोकस्तस्मान्महाप्रलयांत एवेति सिद्धम्॥ १२॥

तत्र दृष्टांतमाह—

**यथा शयानं सम्राजं बंदिनस्तत्पराक्रमैः।**
**प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयंत्यनुजीविनः॥ १३॥**

यथा शयानं सम्राजं कृत्स्नक्षितिपतिमनुजीविनो बंदिनः प्रत्यूषे प्रत्यूषकाले अभ्येत्य सुश्लोकैः शोभनाभिः कीर्तिभिर्युक्तैस्तत्पराक्रमैर्बोधयंति तथा बोधयांचक्रुरिति पूर्वेणान्वयः। प्रत्यूष इत्यनेन प्रतिसर्गादिकालेऽप्येवमेव श्रुतयो जीवोद्धारार्थं भगवंतं प्रार्थयंति। ततः स सगुणसुंदरं रूपमाविष्करोति तदन्यथा सधर्मकत्वेऽपि भगवान्निरवयव एवेति सूचयति। सार्वभौमं बंदिन इव सर्वेश्वरकीर्तिप्रख्यापकाः श्रुतय इति च। अनुजीविन इत्यनेन जीवानामविद्याहरणमेव श्रुतीनां सफलजीवितम्। तत्र भगवान् सगुण एव कारणभूतो न केवलं वेदा इत्यभिप्रायः॥ १३॥

इति श्रीश्रुतिकल्पलतायां श्रुतिस्तुत्युपक्रमप्रकरणं नाम पंचमोऽध्यायः॥ ५॥

॥ इति पंचमोऽध्यायः॥

---

१ ऋ. सं. ८।७।१७। २ श्वे. ३।१९। ३ भा. १०।८७।१४। ४ भा. १०।८७।१२।

# षष्ठोऽध्यायः।

अथ स्तुतिप्रकरणं भगवानीश्वरो हरिः। व्याकरोत्यखिलात्मत्वाद्वामनात्मा श्रियः पतिः॥ १॥ अजित, त्वं जय जय जीवानां जह्यजामिति। सुश्लोकैः श्रुतिसारार्थैः श्रुतयः प्रार्थयंत्यथ॥ २॥ अविद्याहरणायादौ प्रार्थयंति जगद्गुरुम्। तं वंदे निखिलात्मानं स्वामिनं शेषशायिनम्॥ ३॥ 'सत्यं ज्ञानमनंतं ब्रह्म', '[1]यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता' इति श्रुतेः सत्यादिलक्षणं निर्गुणं ब्रह्म विपश्चिता सर्वज्ञेन सगुणेन हेतुभूतेन यो वेद स सर्वकामोपलक्षितमानंदं सहैकदैवाऽश्नुते नान्य इत्यविद्यानाशस्येश्वरप्रसादैकहेतुत्वात्। '[2]नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्' इति श्रुतेः। प्रवचनादीनां भगवत्प्रसादमंतरा निरर्थकत्वात्। यमेव पुरुषमुपासकमेष परमात्मा वृणुते अनुगृह्णाति तस्यैव स्वां तनुं ब्रह्मविद्यां ददातीत्यर्थस्य निखिलनिगमकदंबसिद्धत्वादित्यादिमूर्तिमत्यः—

श्रुतय ऊचुः।

जय जय जह्यजामजित दोषगृभीतगुणां
त्वमसि यदात्मना समवरुद्धसमस्तभगः।
अगजगदोकसामखिलशक्त्यवबोधक ते
क्वचिदजयाऽऽत्मना च चरतोऽनु चरेन्निगमः॥ १४॥(१)॥

भो अजित, केनापि त्वं न जितोऽसि दुरंतवीर्यत्वात्। अतो जय जय जगन्मंगलसगुणसुंदररूपेणाविर्भूयोत्कर्षमाविष्कुर्वित्यर्थः। आदरे वीप्सा। ननु जगज्जन्मादिरूपोत्कर्ष आविष्कृत एव को वाऽतः पर उत्कर्षस्तत्राहुः। जह्यजामिति। अजां जन्मशून्यामनाद्यविद्यां जहि नाशय स एव तवात्यंतिकोत्कर्षो न जगज्जन्मादिरूप इत्यर्थः। तस्या अनादिप्रवाहरूपत्वात् बीजात्तरुरिव त्वत्तः सर्गादिशक्तय आविर्भवंत्येव। तस्मादविद्याहरणं जीवानामनादिबंधविध्वंसनमेव तवोत्कर्ष इत्यभिप्रायः। केषामित्यपेक्षायां नानायोनिभ्रमणव्यसनसागरमग्नानामिति परमकारुणिकस्य करुणामुत्पादयंत्य आहुः। अगजगदोकसामिति। न गच्छंतीत्यगानि स्थावराणि, जगंति जंगमानि ओकांसि पथिकानामिव अहरहर्नवनिवासस्थानानि येषां तेषां जीवानामित्यर्थः। एवमनुकंप्यपक्षेऽनुकंपामुत्पाद्य वध्यपक्षस्य

१ तै. २।१। २ मुं. ३।२।३।

दोषानाविष्कुर्वंत्य आहुः। दोषगृभीतगुणामिति। दोषा आवरणविक्षेपरूपा गृभीता गृहीताः स्वीकृतास्तमआदिगुणैर्यस्यास्ताम्। यद्वा किमिति गुणवती हंतव्येत्यत आहुः। दोषगृभीतगुणामिति। दोषायानंदाद्यावरणाय गृहीता गुणा यया ताम्। 'हृग्रहोर्भश्छंदसी'ति भकारः। इयं स्वैरिणीव प्रतारणाय गुणान् गृह्णाति अतो हंतव्येति श्रीधरार्यैर्व्याकृतं तथावास्तु सामंजस्यात्। ननु जीवा मदंशा एव यथा मत्स्याद्या अवतारास्तथा चराचरदेहा ममैव तनवस्तथा सति कुतस्तेषां संसार इत्याशंक्याहुः। त्वमसि यदात्मना समवरुद्धसमस्तभग इति। यत् या अविद्या मामहं न जानामीत्यावरणरूपा सैवात्मा बुद्धिस्तेन यदात्मना विद्यारूपबुद्ध्युपाधिनेत्यर्थः। त्वं समवरुद्धसमस्तभगोऽसि। सम्यगनादितया अवरुद्धं समस्तं भगं समग्रैश्वर्यं धर्मयशःश्रीज्ञानवैराग्यं यस्य तादृशोऽसि। अविद्योपाधौ प्रतिबिंबितत्वात्केवलचिन्मात्रः त्वं न मत्स्यादिरूपेष्विव तव विद्योपाधिस्तत्रोज्जृंभत इत्यर्थः। यद्वा यत् यस्मात् त्वं आत्मना स्वरूपेणैव समवरुद्धसमस्तभगः संप्राप्तसमस्तैश्वर्योऽसि वशीकृतमायत्वादिति भाव इति व्याख्यातं श्रीधरार्यैस्तथा वा भवतु। किंतु घुणाक्षरन्यायेनानादितया यदृच्छयैव माया त्वद्वशवर्तिनी, तथा सति समवरुद्धसमस्तभग इत्यनेन बलाद्वशीकृतमाय इत्यर्थस्य निष्पन्नत्वादवरुद्धभगत्वं त्वत्प्रसादेन जीवानामपि संभवति, नारदादीनामवतारेषु गणितत्वात्। ततः स्वार्थस्य साधारणत्वपर्यवसायित्वादविद्यात्मना समवरुद्धसमस्तभगः प्रतिबिंबरूपेण त्वमसीत्यर्थः समंजसो दृश्यते। तत्रापि न तत्त्वार्थहानिर्यद्यवरुद्धपदं न स्यात्। अवरुद्धभगस्य परिमितत्वात्। राज्ञावरुद्धा भूरिति न्यायात्। एवमविद्यारूपोपाधिभेदेन त्वमेव जीवत्वं प्राप्तोऽसीति निगद्यते लोके। किमत्र प्रमाणमितिचेत् विद्याविद्योपाधिद्वयस्याप्यनात्मत्वादुभयत्र समस्य ब्रह्मणस्तव न भेद इत्यत्र प्रमाणज्ञापको वेद एवेत्याहुः। ते क्वचिदजयाऽऽत्मना च चरतोऽनु चरेन्निगम इति। आत्मना च अजया च क्वचिच्चरतस्ते तव निगमोऽनु चरति। आत्मना आत्मज्ञानेन अखंडानंदानुभवरूपया स्वविद्यया चरतः घटेन सहाकाशस्येव चरत इव चरतः। तत्पदलक्ष्यांशस्य चकारेण तव सर्वज्ञत्वोपाधेश्चेत्यर्थः। क्वचिदजया अविद्यया च चरतः स्वरूपज्ञानतिरोभावरूपोपाधिना वर्तमानस्य त्वंपदलक्ष्यांशस्येत्यर्थः। चकारेणोपाधिसमुच्चयार्थस्यानुषंगः। अत्र क्वचिच्छब्देन कूटस्थचिदाभासयोरेकत्वं सूचयंति। क्वचिज्जागरस्वप्नावस्थायामेव प्रतिबिंबस्योपाधितादात्म्येनाचरणस्य दृष्टत्वात्सुषुप्तौ तमसि विलीने सत्त्वे कूटस्थैक्येन स्थितत्वात्। पंकक्षुब्धे सलिले तथा प्रतिबिंबरवेरदर्शनाद्बिंबैक्यमिति न्यायात्। 'सति संपद्य न विदुः सति संपत्स्यामहे' इति श्रुतेः। तस्मात् क्वचिदेव कूट-

१ छा. ६।९।२।

स्यादन्यत्वेन प्रतीतस्य चिदाभासस्य न पृथक्त्वमिति दर्शितम् । एवं आत्मना अजया च चरतश्चिदेकरसस्य निगमः नितरां गमयति ज्ञापयतीति वेदः ते त्वां अनु चरेत् । त्वमेव जीवानां मुक्तिप्रदो बोधको गुरुश्चेति वर्णयेदित्यर्थः । उभयत्रोपाधिभेदेऽपि स्वरूपैक्यस्य नितरां गमकोऽपि न स्वतो बोधक्षम इति '**नायमात्मा प्रवचनेन लभ्य**' इत्यादि '**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्**'इति । त्वामेवानु चरेत् तव नियम्यः सन् जीवानां विधिनिषेधमुखेन नियामको भवेदित्यभिप्रायः । अतो जय जय जह्यजामिति त्वां प्रार्थयाम इति भावः । ननु अविद्यायामप्यधिष्ठाने विवर्तरूपत्वान्नहि शुक्त्या मिथ्यारजतस्य नाशः संभवतीति चेत्सत्यम् । शुक्त्यज्ञानकृतस्य रजतस्य शुक्तिज्ञानेनैव नाशस्तथात्र विद्ययैवाऽविद्याया नाशस्तथापि नहि विद्या स्वातंत्र्येण प्रभवतीति भावेन संबोधयंत्य आहुः । अखिलशक्त्यवबोधकेति । अखिलविद्याऽविद्याशक्तीनामवबोधकः सचेतनः कर्ता त्वं । अविद्यायाश्च विद्यायाश्च त्वमेव प्रकाशक इत्यर्थः । शक्तीनामनात्मत्वात् । अतस्त्वमेव जह्यजामिति भावः । एतावता न निगमो नच विद्या स्वातंत्र्येण जीवानामविद्याध्वंसहेतुरिति सिद्धांतं स्फुटीकृत्य श्रुतयो भगवंतं स्तोतुं प्रवृत्ता इत्यधिगंतव्यम् ॥

**जय जयाजित जह्यसतीमजामगजगन्निलयाध्वनि वर्तताम् ।**
**अखिलशक्त्यवबोधक बोधकः स निगमोऽपि पदानुचरस्तव ॥ १ ॥**

अत्रोपक्रमपद्येऽपि श्रुतयः सगुणमेवोपपादयंतीति स्वकृतसिद्धांत ऊरीकृतोऽपि बाधित एव दृश्यते क्लिष्टकल्पितत्वान्न्यायाम्नायविरुद्धत्वात् । ते क्वचिदजयाऽऽत्मना च चरतोऽनु चरेन्निगम इति मूलवाक्यं कदाचित्सृष्ट्यादिसमये अजया मायया चरतः क्रीडतः, नित्यं चालुप्तभगतया सत्यज्ञानानंतानंदैकरसेनात्मना चरतः वर्तमानस्य निगमः अनु चरेत् प्रतिपादयेत् । कर्मणिषष्ठ्यौ । '**यतो वा इमानि भूतानि जायंते**' इत्याद्यागमकदंबस्त्वामेवंभूतं प्रतिपादयतीत्यर्थ इति व्याकृतं श्रीधरार्यैः ॥ आर्यवाचः कलावत्य इत्याद्या अपि तास्वहो । नार्थप्रदा इमे श्लोका न्यायाम्नायसदध्वगाः ॥ १ ॥ यतस्तु यदि ते क्वचिदजयाऽऽत्मना च चरंतं निगमोऽनु चरेदेवंभूतं वाक्यं स्यात्तदाऽयमर्थो भवितुमर्हति न त्वत्र, क्वचिदजयाऽऽत्मना च चरत इति पदस्य षष्ठ्यंतत्वात् । समुच्चयवाचकचकारप्रयोगात् । अत्र विभक्तिं व्यत्ययस्य दोषपरिहाराय कर्मणिषष्ठ्यौ इत्युक्तम् तथापि नायं वाक्यार्थः । मुख्ये सति गौणस्यान्याय्यत्वमिति न्यायात् । अजयाऽऽत्मना च चरतः तत्त्वंपदयोर्वाच्यांशेन चरतः घटेन सहाकाशस्येव वर्तमानस्य

१ मुंड ३।२।३। २ तै. ३।१।१।

निगमो ज्ञापको यो वेदाख्यस्ते त्वां सगुणमनु चरेदिति यथामूलस्यार्थस्य सिद्धत्वात् अजयाऽऽत्मना चेति चकारप्रयोगसार्थक्यात् । अन्यथा त्वजया च आत्मना च चरत इत्यर्थस्य बाध्यत्वात् । मायात्मनोर्योगं विना कथं चरंतं निगमोऽनु चरेत्? तयोर्योगेनैव यदीश्वरत्वमाविर्भूतं तदेकमीश्वरत्वेन चरंतं निगमोऽनु चरेत् । तस्मिन्पक्षे माययैव क्वचिदात्मनैवेत्येवं यदि चरेत्तदा चकारस्य समुच्चयार्थः स्यात् । न तत्संभवति । देहेन जीवेन च चरत इत्येवमर्थस्य सिद्धत्वात् सिद्धस्यान्याय्यत्वात् । नन्वजया चात्मना च तयोर्योगेन चेत्येवंभावगर्भितोऽस्त्वर्थ इति चेदजयात्मना चरत इत्येवालं चकारस्याप्रयोजकत्वसिद्धेर्नैवमर्थः । ननु चकारस्यान्य एवार्थोऽस्त्वव्ययानामनेकार्थत्वादिति चेन्मुख्ये सति गौणस्यान्याय्यतया च निर्गुणे श्रुतयो न चरंतीति पक्षस्य दौर्बल्यादसिद्धत्वात् सगुणे चरंतीति साधयितुं विभक्तिव्यत्ययस्य चकारस्य गौणार्थश्चेति न सूरिसंमतोऽयमर्थः । एवमेव क्वचित्शब्दस्य कदाचित् सृष्ट्यादिसमये मायया चरतो निगमोऽनुचरेदेवमर्थो व्याकृतः । तावता सृष्ट्यादावेव सगुणत्वं तत्रैव निगमोऽनु चरेत्, तस्मान्न निर्गुण इति शुकोक्तश्लोकस्य स्वकृतव्याख्यानस्य चैकवाक्यत्वं संपादितमपि तेषां वाग्देव्याऽत्र निर्गुणे श्रुतयश्चरंतीति सिद्धांतं साधयितुं प्रापितोऽयं पूर्वपक्षः । प्रलयशेषस्य श्रुतिभिरुपपादितत्वात् **'नासदासीन्नो सदासीत्तदानीम्'**[1] इत्यादिना । ननु क्षरभागलय एवोपपाद्यते न लयशेषस्वरूपमिति चेत् **'स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास'**[2]इत्यंतश्रुतेः । नासदासीदित्यादिना लयं गतस्य क्षरभागस्य निषेधात् स्वधया तदेकं तस्मात् ह अन्यत् न परः किंचन आसेति लयशेषस्याक्षरस्य केवलस्य सद्भावोपपादनान्न यत्र वेदा न चेश्वरोपाधिवाच्यांशस्तदपि यदि श्रुतयो वर्णयंति वेदाविर्भूतिकाले सत्यादिलक्षणं ब्रह्म श्रुतय उपपादयंतीति सिद्ध एव सिद्धांतः । ततस्तदसिद्धम् । अथ **'यतो वा इमानि भूतानि जायंते'**[3] इत्याद्याः श्रुतयः सगुणमेव त्वामुपपादयंतीति भावेन श्रीधरायैर्यदुक्तं तदपि पूर्ववदेव **'यतो वा इमानि'** इति श्रुत्या निर्गुणमेव जगत्कारणमित्युपपादितत्वात् । **'यतो वा इमानि भूतानि जायंते । येन जातानि जीवंति । यत्प्रयंत्यभिसंविशंतीति । तद्विजिज्ञासस्व तद्ब्रह्म'** इति । यत इमानि भूतानि जायंते तत एव प्रलये लीनस्य सगुणोपाधेश्च जायमानत्वात् । प्रलये निर्गुणत्वेनैवावशिष्यमाणत्वाद्यस्य कारणांतरं तस्य मुख्यकारणत्वासंभवात् । अथ **'यत्प्रयंत्यभिसंविशंती'**[4]त्युपसंहाराच्च प्रवेशस्यापि निर्गुणे

---

१ ऋ. सं. ८।७।१७। २ तस्मादन्यन्न परं किंचनास्ति अथर्व ६। ३ तै. ३।१।१। ४ तै. ३।२।६।

ब्रह्मण्येव सिद्धत्वात् संहारकर्तुरुपाधेश्च योगनिद्रावसरे निर्गुण एव प्रतिष्ठितत्वात् । तस्माद्यतो भूतानि जायंते गुणात्फणिवत् । येनाधिष्ठानेन विवर्तरूपाणि जातानि जीवंति सचेतनानि भवंति अयस्कांतसन्निधानेनायसानीव । यत् यस्मिन् प्रकर्षेण यंति प्राप्नुवंति प्रलयादावभिसंविशंति च तद्विजिज्ञासस्व ज्ञातुमिच्छस्व तद्ब्रह्म पूर्णं ज्ञेयं । विजिज्ञासस्वेत्यनेन ज्ञेयस्य कारणत्वेनोपपादितत्वाच्च निर्गुणमेव न सगुणम् । निरस्तजीवेश्वरोपाधिवाच्यांशावशेषस्य लक्ष्यांशस्यैव ज्ञेयत्वात् । भृगवे वरुणेन कृतोऽयमुपदेशोऽत्र। ततो ज्ञेयस्य निर्गुणतत्वस्य विवक्षया कारणत्वमुपपाद्यते। न सृष्ट्यादिप्रकरणमत्र विवक्षितम् । तदन्यत्र '**सोऽकामयत**'[1] '**स** ऐक्षत'[2] इत्यादिकामेक्षादिसधर्मकत्वात्सगुणकारणेनेयं श्रुतिः सगुणपरेति सिद्धम् । ननु तदनिर्वाच्यमतः सगुणत्वेनात्र व्याक्रियत इति चेत्किं यद्वाच्यं न भवति तन्निर्गुणमिति चेन्मैवम् । अहं मूक इति न्यायान्निर्गुणमिति वाचा वदन्नपि तदनिर्वाच्यमित्युच्यते । ननु निर्गुणमिति गुणनिषेधत्वस्यैव वाच्यत्वं न तस्येति चेत्तस्येति तच्छब्दगोचरत्वात् पुनस्तद्वत् । ननु तदित्येवोच्यते न तल्लक्षणमितिचेत्तदप्यसिद्धम् । '**सत्यं**[3] **ज्ञानमनंतं ब्रह्म**' '**यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते**'त्यादिनिर्गुणलक्षणानां श्रुत्युपपादितत्वात् । ननु ब्रह्मणा विपश्चितेति श्रुत्युपसंहारे विपश्चिच्छब्देन सगुणपरेयं श्रुतिरिति चेत्सत्यादिलक्षणानि सर्वज्ञत्वादिलक्षणवत्सगुणस्य वाच्यांशसहितस्य वा निरस्तमायोपाधेर्लक्ष्यांशस्य वा ? आद्ये मायोपाधेः सत्यत्वाद्यसिद्धेः तदसिद्धम् । द्वितीये तु सत्यादिलक्षणं निरुपाधि निर्गुणं ब्रह्मेति सिद्धम् । विपश्चिच्छब्देन सगुण–सर्वज्ञ–सत्यादिलक्षणज्ञेयस्य ज्ञानहेतुत्वेनोपपाद्यते । विपश्चिता ब्रह्मणा हेतुभूतेन यो वेद स सर्वान्कामान्सैहव सर्वकामोपलक्षितमानंदमेकदैवाश्नुते इत्यर्थः । '**तमक्रतुं**[4] **पश्यति वीतशोको धातुः प्रसादान्महिमानमीशमि**'ति श्रुतेः । तस्मान्निर्गुणं अत्यंतानिर्वाच्यमित्यसिद्धम् । परस्य साक्षाद्बोधयितुं प्रवृत्तस्येदमित्थमिति वक्तुमशक्यत्वादेवानिर्वाच्यं तदंधपरंपरयात्यंतमित्याहुस्तन्न घटते । मूकोऽहमिति न्यायात्। ननु लक्ष्यांशमुद्दिश्य वाच्यांशशबलितं सगुणमेव श्रुतय उपपादयंतीत्याद्यनेकधा तत्साधयितुं प्रवृत्ता अपि तत्रेदमेवोत्तरम्, यदनिर्वाच्यमनुभवैकगम्यं किमपि तदसज्जडं सांतं वा सत्यं ज्ञानमनंतं वा ? आद्ये दृश्यमात्रे पर्यवसितत्वात् । द्वितीये तु वाच्यत्वसिद्धेरिति । ननु तदनुभवैकवेद्यमतः श्रुतयस्तन्नोपपादयंतीति चेदनिर्वाच्यमपि सत्यादिलक्षणस्वरूपमिति भवता वाचा यदि सिद्धं किमपराद्धं श्रुतिभिः ? किं वा भवद्भिराचरितं पुण्यम् ? । ननु '**यतो**[5] **वाचो निवर्तंते अप्राप्य मनसा**

१ तै. २।६। २ ऐ. १।१।१। ३ तै. २।१। ४ का. २।२०। ५ तै. २।९।

सहे'तिश्रुत्याऽनिर्वाच्यत्वं साधयाम इति चेत्सुषुप्तौ वा समाधौ वा ? उभयत्र मनोवाचां निवर्तनत्वात् । आद्ये तमसि विलीने सत्त्वे सूक्ष्मरूपेण वाचस्तमोलीनाः शब्दरूपास्तत्र न प्रकाशंत इत्यतो निवर्तंत इति वक्तव्यात्तदितरत्र शब्दरूपवाचामदर्शनात् । निर्गुणमदृश्यमत्र तिष्ठतीति वक्तुमशक्यत्वात् । द्वितीये ब्रह्मणि चिदाकारतया परिणते सत्त्वे सूक्ष्मेण सत्त्वरूपेण वाचोऽपि ब्रह्माकारतया परिणता एव तिष्ठंति याः शब्दवृत्तिरूपा मनसा सह निवर्तंत इति श्रुत्या प्रोच्यंते, तासां च संकल्परूपस्य मनसश्च ततोऽन्यत्रादर्शनात् । मनसा सह निवर्तंत इति यथाश्रुत एवार्थो यदि स्यात् सुषुप्ताविवानुभवो न स्यात् । 'मनसैवानुद्रष्टव्य'मिति श्रुतेः[1]। '**दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि**'रित्यादिश्रुतिसिद्धत्वान्मनस्तत्र[2] चरतीति वक्तव्यम् । तथाचेन्निवर्तंत इत्यनेन वृत्तिशून्यत्वमात्रं विवक्ष्यते, तद्यथा मनः सूक्ष्मरूपेण ब्रह्मणि चरति तदेव वाचां च सूक्ष्मरूपं '**चत्वारि वाक्परिमिता पदानी**'तिश्रुतेः[3]। तस्मान्निर्गुणे श्रुतयश्चरंतीति सिद्धम् । निवृत्तमनोवचसामन्यत्र दर्शनाद्यदि मनश्चरति वाचश्चरंत्येव तदेकरूपत्वात् । एवं सूक्ष्मरूपेण यथा तत्र चरंति तथा स्थूलरूपेण सत्यादिस्वरूपलक्षणानि वर्णयंति ततो नानिर्वाच्यम् । अत्रैवाजयाऽऽत्मना च चरत इत्यत्र श्रीधरार्यैश्च अजया मायया क्रीडतः नित्यं चालुप्तभगतया सत्यज्ञानानंतानंदैकरसेनात्मना च चरत इति वाच्यांशलक्ष्यांशयोरजात्मशब्दयोः पृथग्व्याकृतत्वात्सत्यादिलक्षणं निर्गुणं च तद्वाच्यं चेति स्वयमेव तेषां वाग्देवता प्रतिपादयत्यपि । ते तु निर्गुणमनिर्वाच्यमित्येव व्याकुर्वंति वेदार्थस्य दुर्बोधत्वात् तथाप्यार्या एव । तदुक्तं प्रथमस्कंधे प्रथमपद्ये '**मुह्यंति यत्सूरयः**' इति[4]। वक्ष्यत्येकादशे च '**वेदस्य चेश्वरात्मत्वात्तत्र मुह्यंति सूरयः**' इति[5]। तत एवं सूरयोऽपि मुह्यंति तदेव श्रुतयो ब्रह्मणि कथं चरंतीति परीक्षिन्नारद–सनकादि–महायोगिनामपि संशयच्छिदिदं प्रकरणं दुरन्वयं न केवलं पांडित्यगम्यम् । अत एव स्वयं शेषशायी भगवानेवमनादिसंप्रदायमनुसृत्य प्रकरणं व्याकरोति । अत्र श्रुतयो बह्व्यः स्तुवंति तथापि श्रीधरार्यास्तत्र तत्राहेत्येकवचनमाहुस्तत्सनंदनाभिप्रायेण यथा प्रस्तुतं वाक्यमवतारयंति । ननु एवंभूते मयि कथं श्रुतीनां प्रवृत्तिस्तत्राह क्वचिदितीति । एतावता मयि कथं चरंतीति स्तव्यस्येश्वरस्योक्तिरिति सिध्यति । तत्राहेति सनंदनोक्तिरिति चेत्क्वचिदजयाऽऽत्मना च चरतोऽनु चरेन्निगम इति कल्पादौ सनंदन एव स्तौतेति सिद्धं न श्रुतयस्ततोऽयमर्थो न स्यात् । यत उपक्रमे श्रुतय ऊचुरिति सनंदनोक्तिस्ततोऽष्टाविंशतिश्लोकपर्यंतं श्रुतीनामेवोक्तयो व्याख्येयाः । अत्राहेत्येक-

१ बृ. ४।४।१९। २ का. १।३।१२। ३ ऋ. सं. २।३।२२। ४ भा. १।१।१।
५ भा. ११।३।४३।

वचनं श्रुतिसमूहाभिप्रायमिति चेन्मैवम् । तदुत्तरत्रापि श्रुतय एवं वदंतीत्याहेति सर्वत्र सनंदनाभिप्रायस्यैकवचनस्य प्रत्युक्तत्वात् । अतोऽत्र श्रुतय आहुरित्येवमेव भगवता व्याक्रियते ॥

इति श्रुतिकल्पलतायां श्रुतिस्तुतिप्रकरणे प्रथमपद्यव्याख्यानं नाम षष्ठोऽध्यायः ॥

॥ इति षष्ठोऽध्यायः ॥

---

# सप्तमोऽध्यायः ।

ते क्वचिदजयाऽऽत्मना च चरतो नु चरेन्निगम इति अविद्याविद्योपाधिद्वयेन चरतो नितरां गमको निगमो वेदाख्यस्त्वां सगुणमेवानु चरेदित्युक्तं तत्र जीवेशयोश्चिदंशैक्येऽपि स्थूलसूक्ष्मोपाधिभेदेन चराचरस्य व्यष्टिसमष्टिरूपजडभेदस्य यथावद्विद्यमानत्वान्नात्यंतिकतयाऽद्वैतं सिद्धमित्याशंक्य निरस्तोपाधेश्चिदात्मनोऽधिगमे जडांशोऽपि ब्रह्मैवेति न्यायाम्नायानुभवसिद्धमद्वैतसिद्धांतं व्याकुर्वत्यो भगवंतं स्तुवंत्यः—

श्रुतय आहुः-बृहदित्यर्धेन ।

**बृहदुपलब्धमेतदवयंत्यवशेषतया**
**यत उदयास्तमयौ विकृतेर्मृदिवाऽविकृतात् ।**

एतदिदं सर्वं बृहत् ब्रह्मेत्यर्थः । 'सर्वं[1] खल्विदं ब्रह्मे'ति श्रुतेः । किंतु इत्यादिश्रुतीनामेवोक्तिरियम् । यतः खल्विदमिति श्रुतेरिदंपदस्यैतदिति प्रतिपदम् । एतावता श्रुतिर्न्यायत एवात्राद्वैतं साधयति । एतदयं फणिर्गुण इति न्यायात्, अधिष्ठानस्येदंकारास्पदत्वात् विवर्तस्यावस्तुत्वादधिष्ठानस्यैव विवर्तरूपत्वात्सर्वं बृहदिति भावः । अन्यथा देवदत्तो यज्ञदत्त इत्यर्थस्यान्याय्यत्वात्स्वतः-प्रमाणानामप्रामाण्यकारणार्थो न घटते । इममेवार्थं स्फुटयंति । उपलब्धमिति । ज्ञातमित्यर्थः । गुणज्ञाने सति फण्याकारोऽपि गुण एव पृथग्वस्त्वंतराभावात् । ततो बृहदेतदित्युपलब्धमिति भावः । केचिदत्र ब्रह्मणः सर्वगतत्वाज्जगतो ब्रह्मप्रचुरत्वात् श्रुतयः 'सर्वं[1] खल्विदं ब्रह्मे'त्याहुरित्याहुस्तदसिद्धत्व-मुपलब्धमितिपदेन सूत्रयंति । सर्वव्यापकत्वाद्व्याप्यस्य व्यापकनिर्देशो यदि स्यात्तर्हि सर्वं खल्विदमाकाश इत्यपि स्यात् सर्वगतत्वात्सर्वस्याकाशप्रचुरत्वात् । एतद्रूपस्य वाक्यस्याकाशापरोक्षज्ञानपर्यंतमेव प्रामाण्यं, ततस्तु सर्वगतोऽप्याकाशो न सर्वमिति ज्ञाने सत्यप्रामाण्यकारणत्वात् श्रुतीनां प्रामाण्यभंगान्नैवं 'सर्वं[1] खल्विदं ब्रह्म', 'पुरुष[2] एवेदं सर्व'मित्यादिश्रुतीनां तात्पर्यं, किंतु

---

१ छा. ३।१४।१। २ पुरुषसू. २।

सहे'तिश्रुत्याऽनिर्वाच्यत्वं साधयाम इति चेत्सुषुप्तौ वा समाधौ वा ? उभयत्र मनोवाचां निवर्तनत्वात् । आद्ये तमसि विलीने सत्त्वे सूक्ष्मरूपेण वाचस्तमोलीनाः शब्दरूपास्तत्र न प्रकाशंत इत्यतो निवर्तंत इति वक्तव्यात्तदितरत्र शब्दरूपवाचामदर्शनात् । निर्गुणमदृश्यमत्र तिष्ठतीति वक्तुमशक्यत्वात् । द्वितीये ब्रह्मणि चिदाकारतया परिणते सत्त्वे सूक्ष्मेण सत्त्वरूपेण वाचोऽपि ब्रह्माकारतया परिणता एव तिष्ठंति याः शब्दवृत्तिरूपा मनसा सह निवर्तंत इति श्रुत्या प्रोच्यंते, तासां च संकल्परूपस्य मनसश्च ततोऽन्यत्रादर्शनात् । मनसा सह निवर्तंत इति यथाश्रुत एवार्थो यदि स्यात् सुषुप्ताविवानुभवो न स्यात् । 'मनसैवानुद्रष्टव्य'मिति श्रुतेः । 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि'रित्यादिश्रुतिसिद्धत्वान्मनस्तत्र चरतीति वक्तव्यम् । तथाचेन्निवर्तंत इत्यनेन वृत्तिशून्यत्वमात्रं विवक्ष्यते, तद्यथा मनः सूक्ष्मरूपेण ब्रह्मणि चरति तदेव वाचां च सूक्ष्मरूपं 'चत्वारि वाक्परिमिता पदानी'तिश्रुतेः । तस्मान्निर्गुणे श्रुतयश्चरंतीति सिद्धम् । निवृत्तमनोवचसामन्यत्र दर्शनाद्यदि मनश्चरति वाचश्चरंत्येव तदेकरूपत्वात् । एवं सूक्ष्मरूपेण यथा तत्र चरंति तथा स्थूलरूपेण सत्यादिस्वरूपलक्षणानि वर्णयंति ततो नानिर्वाच्यम् । अत्रैवाजयाऽऽत्मना च चरत इत्यत्र श्रीधरार्यैश्च अजया मायया क्रीडतः नित्यं चालुप्तभगतया सत्यज्ञानानंतानंदैकरसेनात्मना च चरत इति वाच्यांशलक्ष्यांशयोरजात्मशब्दयोः पृथग्व्याकृतत्वात्सत्यादिलक्षणं निर्गुणं च तद्वाच्यं चेति स्वयमेव तेषां वाग्देवता प्रतिपादयत्यपि । ते तु निर्गुणमनिर्वाच्यमित्येव व्याकुर्वंति वेदार्थस्य दुर्बोधत्वात् तथाप्यार्या एव । तदुक्तं प्रथमस्कंधे प्रथमपद्ये 'मुह्यंति यत्सूरयः' इति । वक्ष्यत्येकादशे च 'वेदस्य चेश्वरात्मत्वात्तत्र मुह्यंति सूरयः' इति । तत एवं सूरयोऽपि मुह्यंति तदेव श्रुतयो ब्रह्मणि कथं चरंतीति परीक्षिन्नारद–सनकादि–महायोगिनामपि संशयच्छिदिदं प्रकरणं दुरन्वयं न केवलं पांडित्यगम्यम् । अत एव स्वयं शेषशायी भगवानेवमनादिसंप्रदायमनुसृत्य प्रकरणं व्याकरोति । अत्र श्रुतयो बह्व्यः स्तुवंति तथापि श्रीधरार्यास्तत्र तत्राहेत्येकवचनमाहुस्तत्सनंदनाभिप्रायेण यथा प्रस्तुतं वाक्यमवतारयंति । ननु एवंभूते मयि कथं श्रुतीनां प्रवृत्तिस्तत्राह क्वचिदितीति । एतावता मयि कथं चरंतीति स्तव्यस्येश्वरस्योक्तिरिति सिध्यति । तत्राहेति सनंदनोक्तिरिति चेत्क्वचिदजयाऽऽत्मना च चरतोऽनु चरेन्निगम इति कल्पादौ सनंदन एव स्तोतेति सिद्धं न श्रुतयस्ततोऽयमर्थो न स्यात् । यत उपक्रमे श्रुतय ऊचुरिति सनंदनोक्तिस्ततोऽष्टाविंशतिश्लोकपर्यंतं श्रुतीनामेवोक्तयो व्याख्येयाः । अत्राहेत्येक-

१ बृ. ४।४।१९।   २ का. १।३।१२।   ३ ऋ. सं. २।३।२२।   ४ भा. १।१।१।
५ भा. ११।३।४३।

वचनं श्रुतिसमूहाभिप्रायमिति चेन्मैवम् । तदुत्तरत्रापि श्रुतय एवं वदंतीत्याहेति सर्वत्र सनंदनाभिप्रायस्यैकवचनस्य प्रत्युक्तत्वात् । अतोऽत्र श्रुतय आहुरित्येवमेव भगवता व्याक्रियते ॥

इति श्रुतिकल्पलतायां श्रुतिस्तुतिप्रकरणे प्रथमपद्यव्याख्यानं नाम षष्ठोऽध्यायः ॥

॥ इति षष्ठोऽध्यायः ॥

## सप्तमोऽध्यायः ।

ते क्वचिदजयाऽऽत्मना च चरतो नु चरेन्निगम इति अविद्याविद्योपाधिद्वयेन चरतो नितरां गमको निगमो वेदाख्यस्त्वां सगुणमेवानु चरेदित्युक्तं तत्र जीवेशयोश्चिदंशैक्येऽपि स्थूलसूक्ष्मोपाधिभेदेन चराचरस्य व्यष्टिसमष्टिरूपजडभेदस्य यथावद्विद्यमानत्वान्नात्यंतिकतयाऽद्वैतं सिद्धमित्याशंक्य निरस्तोपाधेश्चिदात्मनोऽधिगमे जडांशोऽपि ब्रह्मैवेति न्यायाम्नायानुभवसिद्धमद्वैतसिद्धांतं व्याकुर्वत्यो भगवंतं स्तुवंत्यः—

श्रुतय आहुः—बृहदित्यर्धेन ।

बृहदुपलब्धमेतदवयंत्यवशेषतया
यत उदयास्तमयौ विकृतेर्मृदिवाऽविकृतात् ।

एतदिदं सर्वं बृहत् ब्रह्मेत्यर्थः । 'सर्वं खल्विदं ब्रह्मे'ति[1] श्रुतेः । किंतु इत्यादिश्रुतीनामेवोक्तिरियम् । यतः खल्विदमिति श्रुतेरिदंपदस्यैतदिति प्रतिपदम् । एतावता श्रुतिर्न्यायत एवात्राद्वैतं साधयति । एतदयं फणिर्गुण इति न्यायात्, अधिष्ठानस्येदंकारास्पदत्वात् विवर्तस्यावस्तुत्वादधिष्ठानस्यैव विवर्तरूपत्वात्सर्वं बृहदिति भावः । अन्यथा देवदत्तो यज्ञदत्त इत्यर्थस्यान्याय्यत्वात्स्वतः-प्रमाणानामप्रामाण्यकारणार्थो न घटते । इममेवार्थं स्फुटयंति । उपलब्धमिति । ज्ञातमित्यर्थः । गुणज्ञाने सति फण्याकारोऽपि गुण एव पृथग्वस्त्वंतराभावात् । ततो बृहदेतदित्युपलब्धमिति भावः । केचिदत्र ब्रह्मणः सर्वगतत्वाज्जगतो ब्रह्मप्रचुरत्वात् श्रुतयः 'सर्वं खल्विदं ब्रह्मे'त्याहुरित्याहुस्तदसिद्धत्व-मुपलब्धमितिपदेन सूत्रयंति । सर्वव्यापकत्वाद्व्याप्यस्य व्यापकनिर्देशो यदि स्यात्तर्हि सर्वं खल्विदमाकाश इत्यपि स्यात् सर्वगतत्वात्सर्वस्याकाशप्रचुरत्वात् । एतद्रूपस्य वाक्यस्याकाशापरोक्षज्ञानपर्यंतमेव प्रामाण्यं, ततस्तु सर्वगतोऽप्याकाशो न सर्वमिति ज्ञाने सत्यप्रामाण्यकारणत्वात् श्रुतीनां प्रामाण्यभंगान्नैवं 'सर्वं खल्विदं ब्रह्म', 'पुरुष एवेदं सर्वं'[2]मित्यादिश्रुतीनां तात्पर्यं, किंतु

१ छा. ३।१४।१। २ पुरुषसू. २।

विवर्ताधिष्ठानन्यायेनैवेति तत्त्वम् । अतः खल्विति पुरुष एवेदमित्यादिनिश्चयवाचकैः शब्दैर्नात्र संशय इत्युपपादयंति । ततस्तूपलब्धमित्याहुः । यथास्माभिर्विवर्तस्याधिष्ठानैक्यमुच्यते तथैवोपलब्धं नाकाशप्रपंचवद्व्यापकव्याप्यैक्यानिर्देशादप्रामाण्यकारणं बाधितमैक्यं वयमुपपादयाम इति स्वतःप्रमाणाः श्रुतयो न्यायतः स्वप्रामाण्यं स्फुटयंतीति निगूढाभिप्रायः । ननु भवतीभिरेव ब्रह्मदेतदित्युच्यते भवतीभिरेवोपलब्धं च तस्मादन्ये केचिदेवं न जानंति किमित्यपेक्षायां न्यायाम्नायसिद्धमर्थं सतामनुभवसिद्धत्वेन साधयंत्य '**आत्मन्येवात्मानं पश्यति**' '**सर्वमात्मानं पश्यति**' '**वेदाहमेतं पुरुषमि**'-त्याद्याः श्रुतयो बह्व्योऽप्येवमेव विदुरित्याहुः । अवयंत्यवशेषतयेति । अवयंति जानंति । सर्वं ब्रह्मदित्यधिगच्छंतीति भावः । कया रीत्येति चेदनयैवोक्तरीत्येत्याहुः । अवशेषतयेति । रजतनिषेधेनावशिष्टा शुक्तिरेवं देहाद्युपाधिनिरासेनावशिष्टश्चिदात्मा स एवावशेषस्तस्य भावस्तत्ता तयाऽवशेषतया सर्वं ब्रह्मदेतदुपलब्धमित्यन्वयः । अधिष्ठानज्ञाने सति विवर्तस्य तदेकप्रकाश्यत्वात् । दृष्टेरधिष्ठानदर्शने विवर्तस्यादर्शनादधिष्ठानस्यैव विवर्तत्वमेवं बुद्धेश्चिदेकप्रकाश्यायाश्चिदात्मना आश्लेषं विना वृत्तिप्रकाशासंभवाद्बुद्धींद्रियविषयाणां चिदात्मैकप्रकाशत्वान्निषिद्धस्योपाधेर्विवर्तत्वादधिष्ठानव्यतिरेकेण विवर्तस्यावस्तुत्वात्तस्मिन् प्रकाशमानत्वात्तदेव तदित्यवशेषतया बहवो विवेकज्ञाननिपुणा एवमवयंतीति भावः । '**वेदाहमेतं पुरुषं महांतमादित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते**' इत्यादिश्रुतीनामियमुक्तिः । तमसः पारे अविद्योपाधिनिषेधे यदा तु पुरुषमेतमहमित्यात्मतया वेद । यद्वा अहं तु तमसः पारे अविद्योपाधेरन्यतया नाहं तदित्यर्थ इति । यदा तु एतं पुरुषं वेदेति तुशब्दान्वयः । यत्तदोर्नित्यसंबंधात्, यदा एवं वेद तदा अवशेषतया चिदधिष्ठानतया विवर्तरूपाणि सर्वाणि अहमित्यादि चराचराणि नामानि कृत्वा अभि सर्वत्र वदन्नास्ते । ज्ञाते गुणे फणिर्नाममात्रमिति व्यवहारात् । न तु वस्तुत्वेन जानन्नास्ते इति वाक्यानुरूपोऽर्थः । आदित्यवर्णं नाम आदित्यवत्प्रकाशको विवर्तप्रकाशको वर्णः सत्ता यस्येति । नच वाच्यं जडप्रकाशवद्वर्णो यस्येति । '**न संदृशे तिष्ठति रूपमस्य**' । '**अशब्दमस्पर्शमरूपमि**'त्यादिश्रुतिविरोधादिति संग्रहतः श्रुत्यर्थः । ननु रज्ज्वादिवदधिष्ठानं ब्रह्मैव, सर्पादिविवर्तरूपं जगदिति चेन्न हि रज्जुज्ञानानंतरं मिथ्यासर्पो दृश्यते । प्रपंचस्त्वधिष्ठानसाक्षात्कारे जातेऽपि ज्ञानिनां दृग्गोचरो भवतीत्यतो नायमात्यंतिको न्यायस्ततो न श्रुतीनामयमर्थः । '**सर्वं खल्विदं ब्रह्मे**'त्यादिश्रुतिभिर्ब्रह्मजगतः सामान्यत्वे-

१ बृ. ४।४।२३। २ श्वे. ३।८। ३ का. ६।९। ४ का. २।३।१५। ५ छा. ३।१४।१।

नैक्यस्योपपादितत्वात् सत्यासत्यविशेषस्यानुक्तत्वाद्देवदत्तयज्ञदत्तयोरिवैक्यस्य विवक्षितत्वे तु व्याप्यस्य व्यापकप्राचुर्यादेतद्बृहदित्येवमर्थः समंजस इत्याद्याः शंकाः परिहरंत्यो जगतो मिथ्यात्वं, तथात्वेऽप्यधिष्ठाने ज्ञाते मिथ्याविकारस्य दृश्यत्वं च ब्रह्मणः सत्यत्वकारणं चोपपादयंत्यो **'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि'**त्याद्या न्यायोपबृंहिताः श्रुतय आहुः। यत उदयास्तमयौ विकृतेर्मृदिवाविकृतादिति। यतो यस्मादविकृतान्निर्विकाराद्विकृतेर्जगदाकृतेः कार्यकारणरूपप्रकृतेः उदयास्तमयौ उत्पत्तिविनाशौ तन्मृदिवेति यत्तदोर्नित्यसंबंधात्तच्छब्दग्रहणम्। सत्यं तत् मृदिवेति मृत्तिकेत्येवेति श्रुतेरर्थः। यत उदयास्तमयावित्यनेनाद्यंतयोर्विद्यमानत्वात्कारणत्वात्सत्यमिति पदस्यार्थः। इवशब्द इतिशब्दार्थः। श्रुतेरितिशब्द इवशब्दार्थवाचक इति श्रुतय एवं व्याकुर्वंति। दृष्टे मृत्सत्तया घटविकृतेर्ग्रहणं बुद्धेश्चित्सत्तया जगद्विकृतेर्ग्रहणं सादृश्यात्। यथा मृत्तिका घटादिषु सत्यत्वेन स्फुरति तथा जगत्प्रकाशकं चैतन्यं बृहज्जगति सर्वत्र प्रकाशमानं तत्सत्यम्। यतो मृदं विना न घटो दृश्यते ततो मृदेकमात्रो घटः। यतश्च मृदेकमात्रो घटोऽपि तत एव न मृदं विना प्रकाशते। ततो यथा घटो मिथ्या तथा जगन्मिथ्या। स्वप्रकाशत्वान्मृदः सत्यत्ववत् चिदेकरसं बृहदेव सत्यमित्यर्थः। ततस्तु यत उदयो यस्या घटादिरूपाया विकृतेः तत उदयास्तमयौ तस्या विकारो घटाद्याकारो नामधेयं कुंभघटादि वाचारम्भणमात्रमेतत्सर्वं, तथापि ज्ञातायां मृद्यपि घटादेः सलिलाहरणादिक्रियाकारित्वं घटत्वस्यासत्यत्वेऽप्यवस्तुत्वेऽपि ज्ञानिनां साक्षात्कारे जातेऽपि जगदिव दृश्यत्वं च संभवत्येव [ क्रियाकारित्वेऽपि मिथ्यात्वेऽपि मृदेकमात्रत्वमत एवं बृहदुपलब्धमेतदिति श्रुतिवाक्यतात्पर्यम्। फलितार्थस्त्वेवं—यथा मृदि घटादिरूपाया विकृतेरुत्पत्तिश्च तस्यामेव लयश्च मृत्सत्तयैव जलाहरणादिक्रियाकारित्वं ] क्रियाकारित्वं च तथापि मृदविकृतैव मृत्त्वान्यथानुपपत्तेः। अथ च विकृतिर्घटाद्याकाररूपा तस्या आद्यंतयोरविद्यमानत्वान्मध्येऽपि मृदेकमात्रत्वाज्जलाहरणादिक्रियाकारित्वेऽपि दृश्यत्वेऽपि तदवस्तुत्वान्मिथ्यैव। तथा बृहदेव सत्यं, कार्यकारणरूपं जगदसत्यं, तथापि क्रियाकारि, तच्चोदयादूर्ध्वमस्तभनात्प्राक् यद्यपि पृथग्वस्तुवदाभाति, तथापि बृहदेव। यतस्तु घटोऽपि मृदेवेत्यभिप्रायः। ननु घटाकारस्यापि जलाहरणादिधर्मत्वादवस्तुत्वं न घटते इतिचेद्गुणफणेश्च भयकंपादिजनकत्वादिधर्मैर्वस्तुत्वं स्यात्तदभावे तदभावः। यथा मृद्वस्तु तथा घटस्य वस्तुत्वे स्यात्सत्यत्वं नान्यथा, तत एव श्रुत्या **'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि'**त्युच्यते। ननु वाचारंभणं नाम खपुष्पादिकमदृश्यं, घटस्य प्रत्यक्षसिद्धत्वा-

१ छा. ६।१।४।

त्तन्न घटत इति चेत् घटस्य दृगिंद्रियगम्यत्वात्कुतो न सत्यत्वमंगीक्रियते ? दृग्गोचरत्वेऽपि मरीचितोयादिप्रत्यक्षसिद्धानामवस्तुत्वात्तोयाद्याकाराणामध्यस्तनाम्नां च वाचारंभणत्वादेव वाचारंभणं विकारो नामधेयमिति श्रुत्याऽभिधीयते। खपुष्पादीनां नाममात्रत्वेन वाचारंभणत्वं घटादिविकारस्यापि तत्तुल्यमेव खपुष्पस्य श्रवणगम्यस्यापि तथा वाचारंभणत्वं रज्जुसर्पादीनां च चक्षुरिंद्रियगम्यत्वेऽपि वाचारंभणत्वमवस्तुत्वात् बुद्धेरगोचरत्वसाम्यात्। ननु घटाकार एव मृदो विकार इति केचित्। तन्न घटते। श्रुत्या नामधेयविकारयोर्वाचारंभणत्वस्य विहितत्वान्मृत्तिकेत्येव सत्यमिति मृत्तिकाया विकारतन्नामधेयात् व्यावर्तितत्वान्नात्र प्रमाणसिद्धेऽर्थे क्लिष्टकल्पनावसरः। तथाच मृत्त्वान्यथात्वानुपपत्तेर्न्यायसिद्धत्वाच्च। ननु रूपांतरप्राप्तिरेवान्यथात्वं ब्रूम इति चेत् किं रूपं मृदः, घनीभूतं भूरूपं वा, खनितं यत्किंचिद्रूपं वा ? आद्येऽपि निम्नत्वमाहो उन्नतत्वम् ?। यदि निम्नत्वं रूपं तर्हि समुन्नतस्थलेषु मृदो रूपांतरप्राप्तिरिति सिद्धे निम्नानिम्नेतरस्थले तदपि मृद्रूपं न स्यात्। तथा सति अनवस्थापत्तेर्न निम्नत्वं भूरूपमिति सिद्धम्। एवमेवोन्नतस्थलानामेकस्मादेकस्योन्नतत्वे तदप्यसिद्धम्। तावता भूरूपत्वे तु न मृद्रूपत्वमिति सिद्धम्। भुवः नतोन्नतरूपत्वात्। यदा त्वेवं तदा खनितस्य सुतरां न संभवतीति सिद्धम्। मृत्त्वसंपादनाय सर्वाण्यपि मृद्रूपाण्येवेति चेन्नतोन्नतादिविविधरूपेषु मृदो रूपांतरत्वासिद्धौ किमपराद्धं घटादिभिर्यत्र मृदो रूपांतरत्वापत्तिरित्युच्यते ?। ननु जलसंयोगात् कुलालकरमर्दनाच्चक्रयोगादत्र रूपांतरमुत्पद्यत इति चेन्मेघादिजलसिक्ता कुलालाद्यशेषकरचरणसंमार्दिता क्रिमिविशेषैः पिंडीकृता रथशकटादिचक्रैर्विदारिता चांकिता च निम्नस्थलेषु घटवज्जलैरापूरितापि न रूपांतरं भजते, किमपराद्धमेतैर्जलकुलालचक्रैः ? तस्मान्न मृदो रूपांतरम्। ननु यावद्घटत्वं तावद्विकारित्वं घटनाशे पुनर्मृत्त्वमिति चेदयोग्यशंकेयम्। तथापि यदि रूपांतरमित्युच्यते, तत् किं दुग्धस्य दधिवत् उत कनकस्य कुंडलादिवत् ? आद्ये पुनर्मृत्त्वासिद्धेर्निम्नत्वादिरूपे मृत्त्वभंगः। द्वितीये कनकत्वभंगाभावात् पूर्ववत्। ननु ब्रह्मणो मृद्दृष्टांतो न घटते। कुतः ? खननचालनपिंडीकरणचक्रारोपणादिना तस्यां घटाकार उत्पद्यते तथा ब्रह्मणि जगदुद्भवस्याघटनादिति, त्वत्पुत्रसदृशो राजेति न्यायेन 'मृत्तिकेत्येव सत्यमि'[1]त्युच्यते। यथा त्वत्पुत्रसदृशो राजेत्यत्र रूपसादृश्यमात्रे दृष्टांतो घटते नतु सर्वसाम्ये तथा मृद्ब्रह्मणोरविकारित्वं सत्यत्वमात्रे दृष्टांतो घटते इत्यपि केचिदतिमंदाः। 'न स्यान्मृगेंद्रमध्येऽयं यदि पुच्छं न दृश्यते' इतिवदयं पूर्वपक्षः। 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवंती'[2]

१ छा. ६।१।४। २ मुं. १।१।७।

त्यादि 'तथाक्षरात्संभवतीह विश्वमि'त्यादिश्रुतिसिद्धदृष्टांतेषु क्व वा सर्वसाम्यं यदत्रैव न दृश्यते ? ऊर्णनाभेरंगुष्ठपर्वपरिमितकृमेरुदरान्मुखद्वारा ततः शतगुणो दीर्घतंतुरुत्पद्यते । नहि तंतुषु सर्वत्रोर्णनाभेर्व्यापकत्वं दृश्यते, यथैव पृथिवीं विदार्यौषधयः संभवंति तदुभयं ब्रह्मणि न घटते । तस्मान्न हि दृष्टांते सर्वसाम्यम् । नच ब्रह्मणोऽक्षरत्वाव्ययत्वाचलत्वादिविषयोऽत्र दृष्टांतः । मृत्तिकेत्येव सत्यमित्येव श्रुत्याभिधीयते । गजवद्गमनमित्यत्र चतुष्पादत्वादिवैलक्षण्येन यद्युपमा न स्यादत्रापि नांगीकरिष्यति । किंतु यथाकथंच सिद्धे घटे मृदो रूपांतरं विकाराभावत्वं च, विकाराणां तन्नामधेयानां यथा वाचारंभणत्वं मृदश्च सत्यत्वमेवं जगतो मिथ्यात्वं ब्रह्मणश्च सत्यत्वमित्येव विवक्षितत्वादयं दृष्टांतः । यथा गुडसदृशमाम्रफलं तत्र गुडे बहूनामिक्षुदंडानां रससमाहारादत्र फलस्यैकवृक्षरसमात्रत्वात् गुडस्य त्वग्बीजाद्यभावात् फलस्य तत्सद्भावाद्यदि दृष्टांतो न घटेत तर्हि मृद्ब्रह्मणोर्घटप्रपंचयोश्च न घटेत । यथा सिंहवद्राजेत्यत्र क्रौर्यशौर्यमात्रत्वे दृष्टांतो न तु पुच्छकेसरादिवैलक्षण्येन दृष्टांतो न घटत इति वक्तुं शक्यते । अत्र कारणसत्यत्वेऽपि कार्यमिथ्यात्वे साम्यम् । तत्र घटकारणभूताया मृदः खननादियोग्यत्वात्तेन प्रकारेण कार्यकारणत्वं ब्रह्मणस्तद्वैलक्षण्यान्मायामात्रस्य प्रपंचस्य कारणत्वमित्युच्यते । 'मायामात्रमि'ति श्रुतेः । प्रपंचवस्कार्यासत्यत्वेऽपि मृद्ब्रह्मणोः कारणयोः सत्यत्वमिति दृष्टांते परिच्छिन्नापरिच्छिन्नरूपयोः क्षराक्षरयोर्नित्यानित्ययोश्चलाचलयोर्दृश्यादृश्ययोरित्यादिलक्षणयोः साम्यं यत्र तत्रैव, परंतु यतो नान्यत्र ततो मृत्तिकेत्येव सत्यमिति सिद्धम् । ननु रज्जुसर्पादिदृष्टांते यथाध्यस्तापवादे तदभाव एव दृश्यते न तथात्र । मृन्मात्रे घटे ज्ञातेऽपि घटाकारस्य यथापूर्वं दृश्यमानत्वादिति चेत् ज्ञातेऽपि गुणे बाधितफणिर्दृश्यत एव । तथाच यथा ज्ञातेष्वपि किरणेषु जलाभासे दृश्यमानेऽपि न तत्र जलमस्ति, तथा ज्ञाते मृदेकमात्रत्वे घटाकारे दृश्यमानेऽपि मृदं विना वस्त्वंतराभावात् घटो नास्त्येव मरीच्यंबुवत् । ननु ज्ञाते गुणे भयजनकत्वादिफणिधर्माभावात् घटस्य वाचारंभणत्वे ज्ञातेऽपि जलाहरणादिधर्मत्वस्य विद्यमानत्वान्नैवमिति चेदवस्तुत्वे सिद्धेऽपि नहि दृष्टांते सर्वसाम्यं तथापि गुणफणेश्चक्षुरिंद्रियमात्रजन्यत्वात् चक्षुषा साक्षात्कृते गुणे फणेरभावात्तद्धर्मस्याप्यभावस्तथा पाणींद्रियकृतस्य घटाकारस्य चक्षुषा मृत्साक्षात्कारेऽपि घटत्वधर्मः पाणींद्रियकृतं ध्वंसं प्रतीक्षते तस्मान्न विरुद्धं, तथा ज्ञानोत्तरकालेऽपि कालकृतः प्रपंचः कालकृतं ध्वंसमपेक्षते तथापि वस्तुत्वासिद्धेर्घटो नास्त्येव, यतो यावद्बोधं घटस्ततो मृदेवेति सिद्धम् । अतो जगन्मिथ्यात्वं जगद्ब्रह्मैक्यज्ञानपर्यंतं ततो जगतो दृश्यत्वेऽपि ब्रह्मैवेति साधक

१ मु.१।१।७। २ नृसिं. उ. १।

आत्यंतिकः श्रुतिसिद्धोऽयं न्यायः । किंत्वनाद्यविद्याकृतभेदसंस्कारः स्थूलमतीनामाशुबोधाय शुक्तिरजतादिन्यायैः शास्त्रकारैः सिद्धांतोऽयमुपपाद्यते। तथाप्याम्नायसिद्धस्त्वयमेव न्यायः । 'यथा[1] खलु सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यादि'त्यादि द्रव्यभेदन्यायैरेवोपपादितत्वात् । तथाच वदिष्यंति श्रुतय एव । अत उपमीयते द्रविणजातिविकल्पपथैरिति । ततः प्रायः शुक्तिरजतादिन्याया आम्नायोपपादिताः श्रूयंते । यतस्तु जीवन्मुक्तस्यापि प्रारब्धशेषायावशिष्टदेहेंद्रियैः प्रपंचस्य यथापूर्वमेव दृश्यमानत्वादयमेवात्यंतिको न्यायः । यथा पाणींद्रियकृतो घटः पाणींद्रियकृतं ध्वंसं प्रतीक्षते एवं देहेंद्रियार्जितप्रारब्धकर्मणा भोगद्वारा देहेंद्रियकृतक्षयं प्रतीक्षन्नेव जीवन्मुक्तस्य बाधितः प्रपंचोऽपि यथापूर्वं एव वर्तते, तावत्पर्यंतं विषयेंद्रियसंयोगजनितप्रपंचधर्मस्यापि पूर्ववदेव विद्यमानत्वात् । तथा च श्रुतिः । 'रमते तस्मिन्नुत जीर्णे शयाने नैनं जहात्यहस्सु पूर्वेष्वि'ति । 'मृदमृते न घटः खलु दृश्यते मृदमृते न घटोऽस्ति किमप्यतः । मृदपि सा यमृते न हि दृश्यते न तमृतेऽपि मृदस्ति किमप्यतः॥ कलशो हि मृदा प्रकाशते दृशि सा येन च मृत्प्रकाशते । इतरेण न स प्रकाशते स च सत्येन जगत्प्रकाशते ।'

एवं पूर्वश्लोके क्वचिदजयाऽऽत्मना च चरतोऽनुचरेन्निगम इति जीवेश्वरोपाधिद्वयेऽपि लक्ष्यांशैक्याच्चिदैक्यं च बृहदुपलब्धमिति श्लोकार्धेन चिज्जडयोश्च मृद्घटन्यायेनैक्यमुपपाद्य सर्वं ब्रह्मेति ब्रह्माद्वैतसिद्धांतः स्फुटीकृतः । एतावता सर्वेषां ब्रह्मत्वसाम्याज्जयजय जह्यजामित्याद्यविद्याध्वंसाय किं भगवत एव प्रार्थनयेति चेत्तत्राहुः अत इत्युत्तरार्धेन—

अत ऋषयो दधुस्त्वयि मनोवचनाचरितं
कथमयथा भवंति भुवि दत्तपदानि नृणाम् ॥ १५ ॥ (२) ॥

अतः कारणादेव ऋषयो वेदार्थज्ञानविशारदा वेदव्यासादयः वेदतात्पर्यानुरूपं मनोवचनाचरितं उभयं च त्वय्येव दधुर्धृतवंतः। यतः सर्वं बृहदत एव ब्रह्मणो निर्धर्मकत्वाज्जीवोपाधीनामाविद्यकत्वात् सर्वं बृहदिति ज्ञानैकरूपः सर्वज्ञस्य तवैवोपाधिरतस्त्वमेक एव सेव्यः परमेश्वरः। त्वदन्ये सर्वेऽपि सेवकास्त्वदधीना इत्येवमत इति पदेन सूत्रयंति । 'एको[2] देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चे'त्यादिश्रुतीनामुक्तिरियम् । कर्माध्यक्षत्वादिसधर्मकत्वेऽपि

१ छा. ६।४।१। २ श्वे. ६।११।

केवलो निर्गुणः शुद्धोपाधित्वात् । अत एको देवः क्रीडादिगुणविशिष्टः सगुणोऽपि एक एव सर्वभूतेष्वविद्योपाधिष्वनेकेषु गूढस्तस्मादशुद्धोपाधीनामनेकानां कर्मफलदाता त्वमेक एवेश्वरः ततः श्रुतितात्पर्यानुरूपं मनोवचनाचरितं ऋषयस्त्वय्येव दधुरिति । '[१]यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये'इत्यादिश्रुतीनां गायत्र्यर्थोपपादनमिषेण भगवतः सर्वोत्तमत्वपराणामियमुक्तिः । यो ब्रह्माणं जगत्स्रष्टारं पूर्वं विदधाति प्रथममेव करोति, महत्तत्त्वरूपं स्वप्रतिबिंबेन जीवयतीत्यर्थः । '[२]मम योनिर्महद्ब्रह्मे'त्यादि भगवदुक्त्याऽत्रोत्तरप्रकरणे व्याकृतेयं श्रुतिस्तत्र विदधातीत्यनेन प्रतिसर्गादावित्यर्थं इत्यनेन परमकारणत्वे तात्पर्यम् । अथ नित्यमुक्तत्वात् वेदविद्याप्रवर्तकोऽप्ययमेक एवेति निखिलगुरुत्वादुपास्यत्वं विधत्ते यो वै वेदांश्च प्रहिणोति तस्मा इति । तस्मै ब्रह्मणे तावता चतुर्मुखत्वेन पुनः सृष्ट्वा वेदानुपदिशतीति । अतो वेदमात्रा गायत्र्या '[३]धियो यो नः प्रचोदयादि'त्यखिलबुद्धिप्रकाशकोऽयमेव प्रतिपाद्यते इत्यभिधत्ते । तं ह देवमात्मबुद्धिप्रकाशमिति । आत्मनां जीवानां बुद्धीः प्रकाशयति पूर्वं महत्तत्त्वे प्रतिबिंबं निधाय ततस्तदंशभूतासु बुद्धिषु प्रतिबिंबत्वेन प्रविश्य प्रकाशयतीत्यात्मबुद्धिप्रकाशस्तं देवं क्रीडादिगुणविशिष्टं निखिलजीवकदंबबुद्धिप्रेरकमित्यर्थः । एतावता धियो यो नः प्रचोदयादिति प्रशब्देन प्रकाशकत्वं, चोदयादिति प्रेरकत्वं चात्र स्फुटीकृतम् । देवशब्देन भर्गो देवस्य धीमहि धियो यो नः प्रचोदयादिति देवशब्देन सूचितमिति पूर्वमेव व्याकृतत्वात् । एवं जगत्कारणत्वादनाद्यखिलादिगुरुत्वात्, गायत्र्याद्यशेषमंत्रप्रतिपाद्यत्वादयमेक एव मुकुंदो मुक्तिप्रद इति मुमुक्षुभिस्तमेव शरणं गंतव्यमिति तद्भक्तियोगं विधत्ते '[४]मुमुक्षुर्वै शरणमहं प्रपद्ये' इति । एवं निगमरहस्यज्ञा ऋषयस्त्वय्येव मनोवचनयोराचरितं तात्पर्यं दधुः । व्यासादयः पुराणादिषु स्मृतवंत इत्यर्थः । तदुक्तं स्कांदे 'बंधको भवपाशेन भवपाशाच्च मोचकः । कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः' इति ॥ 'न दैवं केशवात्परमि'त्याद्यनेकधान्यपुराणेषु । तथाचात्र महापुराणे व्याकृतं भगवत्पदमाद्यस्कंधे । '[५]एतावतालं ननु सूचितेन गुणैरसाम्यानतिशायनस्य । हित्वेतरान्प्रार्थयतो विभूतिर्यत्पादरेणुं भजतेऽनभीप्सोः' ॥ '[६]अथापि यत्पादनखावसृष्टं जगद्विरिंचोपहृतार्हणांभः । सेशं पुनात्यन्यतमो मुकुंदात्को नाम लोके भगवत्पदार्थः' इति । विभूतिर्लक्ष्मीरितरान्प्रार्थयतोऽपि हित्वा यत्‌यस्य अनभीप्सोः तामनपेक्षमाणस्य

१ श्वे. ६।१८। २ गीता १४।३। ३ ऋ. सं. ३।४।१०। ४ श्वे. ६।१८। ५ भा. १।१८।२०। ६ भा. १।१८।२१।

पादरेणुमुपास्ते। तस्मादस्य गुणैरसाम्यानतिशायनस्य समानाधिकरहितस्य भगवत एतावता सूचितेनालं पर्याप्तम्, विवादानवसरत्वात्। 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चेति षण्णां भग इतींगने'ति। समग्रषड्गुणा नान्यस्मिन्विद्यंते तथापि सर्वत्रोपचरंति विविधाधिकारिणः स्वाराध्यदेवतापरं भगवच्छब्दं व्याकुर्वंति तन्न घटत इत्यर्थः। श्रियः समग्रत्वात्तस्यामनभीप्सुत्वात्समग्रवैराग्यवत्त्वान्नित्यमुक्तत्वादैश्वर्यादिसमग्रभगवत्पदवाच्यानां गुणानामव्यभिचार्याश्रयोपाधिमान् भगवान्नारायण एक एवेति साधयितुं श्रियःपतित्वमेकं सूचितं चेदलमित्यभिप्रायः। इतोऽपि भगवत्तमत्वे लिंगमाह। अथापीति। इत्यनंतरमपि यत्पादनखावसृष्टं यस्य पादनखेन विदारितांडकटाहेनांतः पातितं यत् बहिरावरणांभश्च विरिंचोपहृतार्हणांभश्च तदानीमेव ब्रह्मणा स्वकमंडलुजलेन प्रक्षालितश्चरणस्तज्जलं सेशं सशंकरं जगत्पुनाति। एवंच सति मुकुंदादन्यतमः को नाम भगवत्पदार्थः भगवत्पदस्यार्थो विषयः को नाम ? न कोऽपीत्यर्थः। सर्वेषूत्तमा देवास्तेषु विरंचिशंकरौ। तत्रैकः पादावनेजनपरो द्वितीयः परमभक्त्या शिरसि तद्धारणपरस्तस्मात् को नामान्यो भगवत्पदार्थ इति भावः। तथाच महाभारतोपक्रमे 'नारा[1]यणं नमस्कृत्ये'ति भगवत एव मंगलाचरणेन समग्रग्रंथस्य वैष्णवत्वं स्फुटीकृत्य सर्वपर्वसु भगवानेव सर्वोत्तमत्वेनोपपादितः। तथा च सप्तभिः श्लोकशतैर्भगवदर्जुनसंवादप्रसंगेन भगवता वेदव्यासेन निर्णीतोऽयमर्थः। 'मा[2]मेव ये प्रपद्यंते मायामेतां तरंति ते'इति। 'आ[3]ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन। मामुपेत्य तु कौंतेय पुनर्जन्म न विद्यते'इति। 'येऽ[4]प्यन्यदेवताभक्ता यजंते श्रद्धयान्विताः। तेऽपि मामेव कौंतेय यजंत्यविधिपूर्वकम्'इति। 'का[5]मैस्तैस्तैर्हृतज्ञानाः प्रपद्यंतेऽन्यदेवताः'इति। एवं श्रुत्यनुरूपं मनोवचनाचरितमुभयं ऋषयस्त्वय्येव दधुः त्वदन्येषु वचनाचरितमात्रं दधुरधिकारिवैचित्र्यान्न मनसस्तात्पर्यमित्यभिप्रायः। तथाच श्रुतिः। 'सु[6]पर्णं विप्राः कवयो वचोभिरेकं संतं बहुधा कल्पयंती'ति। 'त[7]स्यां सुपर्णा वृषणा निषेदतु'रिति श्रुत्युपक्रमे मायोपाधौ जीवेश्वरौ द्वौ सुपर्णावित्युक्तसुपर्णयोरेकं संतं सुपर्णमीश्वरमित्यर्थः। अखंडसदात्मानुभवरूपोपाधिमत्त्वात्संतं संततमित्यर्थः। जीवसुपर्णोपाधिवैलक्षण्यं सूचयितुं संतमिति विशेषणम्। नात्र सच्छब्देन केवलं ब्रह्मेति वाच्यम्। उपक्रमविरोधात्। सुपर्णयोरस्यैकसुपर्णत्वात्। किंतु उपास्यत्वेन तं कवयो विप्रा व्यासादयो वचोभिर्बहुधा कल्पयंति अग्नींद्रादिरूपेण वर्णयंति। 'ए[8]कं सद्विप्रा बहुधा वदंत्यग्निं यमं मातरिश्वानमाहु'रिति श्रुतेः। किंतु वचोभिः शब्दमात्रेण न मनसस्तात्पर्येण

१ महाभा. १।१।१। २ गीता ७।१४। ३ गीता ८।१६। ४ गीता ९।२८
५ गीता ७।२०। ६ ऋ. सं. ८।६।१६। ७ ऋ. सं. ८।६।१५। ८ ऋ. २।३।२२।

यतस्तु सुपर्णे ईश्वरस्त्वेक एव न नानेश्वरास्तथापि स्वरूपैक्याद्ब्रह्माद्वैतमाश्रित्य वस्तुभेदराहित्यादनेकधा बहुविधाधिकारिभेदमुद्दिश्येश्वरमेकमिंद्रादिरूपेण कल्पयंति। तथापि नानादेवतारूपेण तदुत्कर्षमेवोपपादयंतीत्यर्थः । तस्य सर्वात्मकत्वात्। ननु तर्हि श्रुतय ऋषयश्च किमित्यनीशभजनविधानात् जनान्वंचयंति देवतांतरभजनेन भगवद्भजनाभावादित्याशंक्याहुः । कथमिति चतुर्थपादेन। कथमयथा भवंति भुवि दत्तपदानि नृणामिति। नृणां भूचराणां पदानि भुवि दत्तानि कथमयथाऽन्यथा भवंति, अपि तु भुवि दत्तान्येव भवंतीत्यर्थः। वृक्षशाखादिषु यत्र कुत्र वा निक्षिप्तानि पदानि वृक्षादीनां भूम्याधारत्वात् भुवि दत्तान्येव भवंति, तथा तवाखिलात्मत्वानुभवैकरूपोपाधित्वात्त्वमेव सर्वनामरूपवानखिलयज्ञभुक् सकलफलदाता चेत्यभिप्रायः। 'एको देवः सर्वभूतेषु गूढः' इति श्रुतेः । तथाचोक्तं भगवता। '**यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान्मयैव विहितान् हि तान्**' इति। तथाच श्रुतिः। '**स प्रथमः स प्रकृतिः स प्रथमो मित्रावरुणो अग्निः । स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इंद्राय हविराजुहोमी**'ति। यद्वाऽनेनोत्तरार्धेन श्रुतयोऽत्र भागवतधर्मं विदधति, अत ऋषयो दधुस्त्वयि मनोवचनाचरितं कथमयथा भवंति भुवि दत्तपदानि नृणामिति। अतः कारणात् यतः पूर्वार्धेन सर्वं बृहदिति सिद्धं अत इत्यर्थः। ऋषयः सनकादयः मनोवचनाचरितं त्वय्येव दधुः। मनसो विविधवृत्तिरूपत्वात् घटपटाद्यशेषचराचररूपग्रहणं निखिलविषयसेवनरूपं कर्म च सर्वेंद्रियाणां मनोऽधीनत्वान्मनस आचरितं, तथाच चराचरस्य शब्दादिविषयाणां च नाममात्रग्रहणं वचनाचरितं तयोः सर्वकर्मोपलक्षणत्वादखिलं कर्म त्वयि निखिलात्मनि दधुर्ध्यानेन स्मृतवंत इत्यर्थः। चिदात्मना त्वया मनआदीनां प्रकाशितत्वात्त्वया च मनआद्यशेषकर्मणः सिद्धत्वात्। तथा सति सर्वं त्वयि सर्वरूपे समर्पितवंत इत्यभिप्रायः। तदुक्तं भगवता। '**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम्**' इति। '**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव तेन गंतव्यं ब्रह्मकर्मसमाधिने**'ति च। सर्वस्य कर्ममात्रस्य त्वय्येव निष्पन्नत्वात्। जलाहरणादिघटकर्मणां मृदेकसिद्धत्वात् स्वत एव मृद्यर्पितानि भवंतीति न्यायेन सर्वं त्वयि समर्पयंतीति भावः। ननु विषयेंद्रियसंबंधरूपं कर्म तत्रेंद्रियेषु विषयाः समर्पिता भवंति तानि च मनसि मनोयोगेनाहंकारद्वारा, भोक्ताऽयं पुरुषः कथं मनोवचनाचरितं मय्येव

१ श्वेता. ६।११। २ गीता ७।२१। ३ गीता ७।२२। ४ गीता ९।२७। ५ गीता ४।२४।

दधुः । तावता तद्ध्यानमात्रेण कथं वा मय्यर्पितं भवतीति चेत्तत्राहुः । कथमयथा भवंति भुवि दत्तपदानि नृणामिति । यथा नृणां पदानि भुवि दत्तानि नान्यथा भवंति तथा भुवि सत्तायां त्वयि नृणां जीवानां दत्तानि पदानि पद्यंते प्राप्यंते ज्ञायंते इति पदानि मनोवचनाचरितानीत्यर्थः । तानि दत्तानि समर्पितानि कथमयथा भवंति । अयं फणिरिति दर्शनविषयेंद्रियसंबंधरूपं मनआचरितं गुणे कथमयथा भवति । तथा फणिरिति वचनाचरितं च फणेरभावात् गुणस्यैव विद्यमानत्वात् फणित्वेनाचरितं सर्वं गुण एव यथा भवति तथा सर्वकर्मार्पणं त्वय्येव भवतीत्यभिप्रायः । तस्मान्मनइंद्रियविषयास्त्वयि गुणे फणिवत् । भोक्ता च तवैवांशः प्रतिसुपुप्तौ त्वय्येव लीयमानस्त्वत्प्रतिबिंबम् । वृक्षादिष्वारूढानां नृणां पदानि भूम्याधारेणैव यथा चरंति तथा सर्वकर्माणि त्वदाधारेणेति सूचितम् । भगवति ये कर्माण्यर्पयंति ते काम्यनिषिद्धविमुखत्वादधिकारिणस्ततस्तु नित्यं प्रारब्धवशान्निष्पन्नं मनोवचनाचरितं च भगवत्यर्पयंतीति ज्ञातव्यम् ॥ १५ ॥

सर्वं ब्रह्मोपलब्धं जगदिदमवयंत्यन्यशेषावशेषा-
दादावंते च मृद्धटमुखविकृतेस्तूदयास्तौ ततोऽस्याः ।
धर्मान्वाचो हृदो वा दधुरत ऋषयस्त्वय्यशेषात्मनीशे
श्रीशे दत्तान्यहो स्युर्भुवि कथमयथा भूचराणां पदानि ॥

इति श्रुतिकल्पलतायां श्रीमद्भागवते महापुराणे श्रुतिस्तुतिव्याख्यायां द्वितीयश्लोकव्याख्यानं नाम सप्तमोऽध्यायः ॥

॥ इति सप्तमोऽध्यायः ॥

---

## अष्टमोऽध्यायः ।

एवं चिदचिदात्मकं जगत् बृहदेवेत्यधिगतपरमार्था ऋषयो मनोवचनाचरितोपलक्षितमशेषं कर्म त्वद्रूपं विचिंत्य वासुदेवः सर्वमिति भावेन त्वयि समर्पितवंत इत्युक्तम् । अथ तेषु केचित्तव कथाश्रवणवर्णननिष्ठाः केचित्तथा संतोऽपि समाधिनिष्ठास्तदितरश्रेयःसाधनमनपेक्षमाणास्त्वामेवोपासत इत्याहुः—

इति तव सूरयस्त्र्यधिपतेऽखिललोकमल-
क्षपणकथाऽमृताब्धिमवगाह्य तपांसि जहुः ।
किमुत पुनः स्वधामविधुताशयकालगुणाः
परम भजंति ये पदमजस्रसुखानुभवम् ॥ १६ ॥ ( ३ ) ॥

इतिशब्देन पूर्वपरामर्शः । इत्येतादृशाः पूर्वोक्ता ज्ञानिनः भागवता ये सर्वं बृहदित्यधिगत्य मनोवचनाचरितं त्वयि दधुरित्युक्तास्तेषां भगवद्धर्मनिष्ठत्वं चाधिगतपरमार्थत्वं च पुनः सूत्रयंति। तव सूरय इति। तव त्वदीयाः भागवता इत्यर्थः। तत्र द्विविधा भागवताः केचिदधुना भगवद्धर्मप्रवृत्ताऽधिगतपरमार्थाः केचित्तत्प्रसादेन वासुदेवः सर्वमित्याधिगम्योपासते । यथाह भगवान् । '[1]उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्' इति । '[2]वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' इति । तत्र पूर्वपद्योक्तास्ते तु तव सूरयो विवेकिनश्चिदचिद्विवेकेन मायानिषेधशेषं चिदात्मानमधिगम्य तत्प्रकाश्यस्य जडस्य मिथ्यात्वान्मृदेव घट इति न्यायेन सर्वं बृहदित्यधिगतपरमार्था इति तव सूरय इति पदद्वयेन ज्ञानिनो भागवता इत्युक्तम्। अधिगतपरमार्थेष्वपि द्विविधा भागवताः वासुदेवः सर्वमिति पश्यंतस्तत्कथामृतसमुद्रमग्नाः केचित्, केचिन्निर्विशेषसमाधिनिष्ठाः । ते कथंभूत्वा किं कृतवंत इत्यपेक्षायां कथाश्रवणादिनिष्ठानादावाहुः। अखिललोकमलक्षपणकथामृताब्धिमवगाह्य तपांसि जहुः इति । अखिलानां लोकानां मलानि पापानि क्षपयंति नाशयंति याः कथास्ता एवामृतं तस्य अब्धिः समुद्रः तं अवगाह्य निषेव्य तपांसि जहुः । तपंतीति तपांसि श्रमावहानि बहुदुष्कराणि तदितरकर्माणि जहुस्त्यक्तवंतः । वक्ष्यत्येकादशस्कंधे '[3]तावत्कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते' इति । तथाच गीतायां चरमाध्याये । '[4]सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' इति । ननु सर्वधर्मान्परित्यज्येति सर्वधर्मत्यागस्य विहितत्वात् कथाश्रवणादेश्च त्यागोऽस्तु, तथा सति कथामृताब्धिमवगाह्य किमिति तपांसि जहुरित्युच्यते इति न च वाच्यम्। भागवतधर्मेतरस्यैव त्यागोऽत्र विधीयते मां शरणं व्रजेत्युक्तत्वात्। तदेकशरणानां तदेकधर्मनिष्ठत्वादितरधर्मत्यागस्तत एव । '[5]सर्वगुह्यतमं भूयः शृणु मे परमं वचः' इत्यारभ्य '[6]मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु' इति भागवतधर्मावलंबनद्वारा सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजेत्युक्तत्वात् कथामृताब्धिमवगाह्य तपांसि जहुरित्युक्तमनवद्यम् । न च वाच्यमनधिगतपरमार्थभागवतविषयोऽयं विधिरिति, सूरय इत्युक्तत्वात् । गीतासु '[7]मामेकं शरणं व्रज' इत्येकशब्देन '[8]एकमेवाद्वितीयं ब्रह्म' इत्येकमात्मानमनेकघटादिष्विव नानारूपेषु कार्येषु एकमुपादानकारणं मृदिवाद्यंतयोर्विद्यमानं मध्येऽपि तदेकमात्र-

---

१ भ.गी. ७।१८। २ भ.गी. ७।१९। ३ भा.स्कं. ११।२०।९। ४ भ.गी. १८।६६। ५ भ. गी. १८।६४। ६ भ. गी. १८।६५। ७ भ. गी. १८।६६। ८ छा. ६।२।१।

मखिलकार्यप्रकाशकं **'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत'**[1] इत्यादिभिर्मदुपदेशवाक्यैरेवाधिगतं तमेव मामीश्वरोपाधिशबलितं शरणं व्रज **'मद्याजी मां नमस्कुरु'**[2] इत्यादि पूर्वपद्योक्तक्रमेण मां भजस्व । ततस्तु **'मामेवैष्यासि सत्यं ते प्रतिजाने प्रियोऽसि मे'**[3] इति फलं प्राप्स्यसीत्युक्तप्रकारेण सत्यं मामेवैष्यसि प्राप्स्यसीति ते प्रतिजाने तुभ्यमहं प्रतिज्ञां करोमि । तत्रैकं ज्ञात्वापि ईश्वरोपाधिशबलितं शरणं व्रज । तत एव सत्यं केवलं लक्ष्यांशमात्रं मां प्राप्स्यसीत्युक्त्वा, न केवलमेतावत् किंतु जीवत एव त्वां तुभ्यं मोक्षं दास्यामि इति उत्तरपद्योत्तरार्धेनाह । **'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि'** इति सर्वपापबीजवासनापाशेभ्योऽपि मोक्षयिष्यामि, तावता जीवन्नेव सत्यं केवलं प्राप्य केवलानंदमनुभविष्यसीत्यनेन । **'सत्यं ज्ञानमनंतं ब्रह्म'**[4], **'यो वेद निहितं गुहायां'**, **'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता'** इति श्रुतेः विपश्चिता सर्वज्ञेन हेतुभूतेन सत्यादिलक्षणं यो वेद स सर्वान्कामानश्नुत इति स्फुटीकृतम् । सत्यमेव ज्ञानं ज्ञानमेवानंतं अनंतत्वमेव आनंदः । **'यो वै भूमा तत्सुखम्'**[5] इति श्रुतेस्तदत्र सत्यं मामेष्यसीत्युक्तम् । अथ सर्वपापेभ्यो मोक्षयिष्यामीत्यनेन सोऽश्नुते सर्वान्कामान् सर्वकामोपलक्षितमानंदम् । अत एव सकलवासनापाशमुक्तो मां प्राप्नोतीत्यर्थः । तस्माद्भागवतेष्वपि नाज्ञविषयोऽयं विधिः । किं तु । **'चतुर्विधा भजंते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ'**[6] इति सप्तमेऽध्याये भगवता गीतास्वार्तादिचतुर्विधा ये भक्ता उक्तास्तेषु चरमभक्तविषयोऽयं विधिः । **'यत् पूर्णानंदबोधस्तद्ब्रह्मैवाहमस्मीति कृतकृत्यो भवति'** इति श्रुतेः । ननु मामेकं शरणं व्रजेति एकशब्देन देवतांतरव्यावृत्तिरिति किं न स्यादितिचेत् सर्वधर्मत्यागेनैव देवतांतरभजनत्यागस्य सिद्धत्वात् । आदावेव सर्वधर्मान्परित्यज्य ततो मां शरणं व्रजेत्युक्तत्वान्न घटते । न चाज्ञस्य सर्वधर्मत्यागो विधातुमुचितः । तथाचोक्तं भगवतैव **'नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम'**[7] इति । नच वाच्यं भगवद्भक्तानामुचितः कर्मत्याग इति । **'ये मे मतमिदं नित्यमनुतिष्ठंति मानवाः'**[8] इत्यादिकर्मयोगिनां प्रशंसया च । **'ये त्वेतदभ्यसूयंतो नानुतिष्ठंति मे मतम् । सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः'**[9] इत्यादिकर्मत्यागिनामज्ञानां निंदया च नाज्ञविषयोऽयं विधिः किं तु ज्ञानिविषय एव । तत्रापि मे मतमिति प्रशंसायां निंदायामपि कर्मयोगस्य स्वमतत्वाभिधानं भागवतधर्म-

---

१ भ. गी. १३।२। २ भ. गी. १८।६५। ३ भ. गी. १८।६६। ४ तै. २।१। ५ छा. ७।२३।१। ६ भ. गी. ७।१६। ७ भ. गी. ४।३१। ८ भ. गी. ३।३१। ९ भ. गी. ३।३२।

त्वात्। तथाच। 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते' इति ज्ञानिनः कर्मानुपयोगस्य पूर्वत्र विहितत्वात् 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' इत्युक्तम्। नाज्ञविषयोऽयं विधिर्यदत्रैकपदस्वारस्यमनधिगम्य व्याकुर्वंति तेऽप्यदीर्घदर्शिनो न च तत् तेषां व्याख्यानं समंजसम्। 'मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे' इत्यत्रापि सत्यं यथा भवति तथा तुभ्यमहं प्रतिज्ञां करोमीति केचित् व्याकुर्वंति। तन्न। मामेवैष्यसीति प्रतिज्ञां करोमीत्येतावता यद्यसत्यं प्रतिजानातीति शंकांकुरोत्पत्तिकारणं स्यात्तर्हि सत्यं यथा स्यात्तथेति व्याकर्तुमुचितम्। किंत्वेकपदस्वारस्यज्ञानाभावात्। सत्यमेव मामेवैष्यसीत्यर्थज्ञानासंभवादत्र सत्यपदस्य यथाकथंचिद्गतिः कल्पितेति स्फुटं दृश्यते। किंच। 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' इत्यत्र कर्मत्यागनिमित्तं पापं स्यादिति मा शुचः शोकं मा कार्षीरित्येकपदस्वारस्यज्ञानाभावादज्ञविषयत्वेनैवं केचित् व्याकुर्वंति। अत्राप्यर्जुनस्य पापशंकोत्पत्तिकारणाभावात् साक्षाद्भगवता। 'सर्वगुह्यतमं भूयः शृणु मे परमं वचः' इत्युपक्रम्य विहिते सर्वधर्मत्यागे यद्यर्जुनस्य पापोत्पत्तिशंका स्यात्तर्ह्यज्ञ एवाधुनाप्यर्जुन इति सिद्धम्। अस्त्विति चेत्तथा सति एतदंतोपदेशानंतरमेवार्जुनोऽत्र वक्ष्यति। 'नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत। स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव' इति। एतावता भगवदुक्तोऽर्थोऽवधारित इति सिद्धे नात्रास्य पापशंकेति। न च भगवानर्जुनस्य प्राकृतदृष्टिरासीत्ततो वा तदुक्तानुष्ठानेन पापं स्यादित्याशंक्य तत्पापमोक्षमपि विधत्ते इति वक्तुमवसरः स्यान्नतु तदस्ति। यत्तु चतुर्थाध्याये। 'अपरं भवतो जन्म परं जन्म विवस्वतः। कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति'। अत एव तस्य भगवति प्राकृतत्वमोहः। ततस्तु 'परं ब्रह्म परं धाम पवित्रं परमं भवान्'। इत्यादि। 'आहुस्त्वामृषयः सर्वे' इत्यादि। 'सर्वमेतदृतं मन्ये यन्मां वदसि केशव' इत्यादि तदुक्तेश्च नेति सिद्धम्। विश्वरूपसाक्षात्कारे सत्यपि जगद्गुरुवरेण भगवता विहिते त्यागे कथमहो तस्य पापशंकावसरोऽधिगतः, यत एवं व्याकुर्वंति? ततो नायमर्थः, किं तु सर्वपापेभ्यः सर्वपापबीजवासनापाशेभ्यो मोक्षयिष्यामि वासनामयलिंगदेहात् मोक्षयिष्यामि जीवन्मुक्तं करिष्यामि। दग्धबीजप्रायेण देहेन वर्तयिष्यामीति यावत्। तथा जीवन्मुक्तः सन् शुकादिवन्मद्धर्मी

---

१ भ. गी. ३।१७। २ भ. गी. १८।६६। ३ भ. गी. १८।६५। ४ भ. गी. १८।६६। ५ भ. गी. १८।६४। ६ भ. गी. १८।७३। ७ भ. गी. ४।४। ८ भ. गी. १०।१२। ९ भ. गी. १०।१३। १० भ. गी. १०।१४।

मन्मना भवेत्याद्युक्तप्रसंगेन ज्ञेयमिति। ननु तर्हि मा शुच इत्यस्य का गतिरिति चेदुपक्रमस्यार्जुनशोकपरिहारहेतुकत्वात्सकलधर्मसारसंग्रहमुपदिश्य मा शुच इत्युपसंहरति। तदुक्तमुपक्रमेऽर्जुनेन। ‘[1]कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः। यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्’। ‘[2]न हि प्रपश्यामि ममापनुद्याद् यच्छोकमुच्छोषणमिंद्रियाणाम्’ इति शोकमुपक्रम्य तत्परिहारोपसंहारस्यावश्यकत्वात्, मामेकं शरणं व्रजेति तावता तव शोकपरिहार इति तस्य फलमाह। प्रश्नानंतरमेवारब्धः सर्वोपनिषत्सारसंग्रहोपदेशस्तत्र शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नं इत्युक्तत्वात् चरमेऽध्याये चरमोपदेशोऽयं कृतः ‘[3]सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज’ इति तत्फलं जीवन्मुक्तिस्ततः। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामीत्युक्तम्। ‘[4]न हि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिंद्रियाणाम्’ इति यदुक्तमुपक्रमे तत्रायमेव विधिः शोकापनोदकस्तस्मादधिगतमेकं मां सगुणं शरणं व्रज। किं कृत्वेतिचेत् सर्वधर्मान् परित्यज्य। ननु तर्हि। ‘[5]न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः’ इति भगवता पूर्वमुक्तत्वात् सर्वधर्मत्यागानंतरं कथं तर्हि निर्वहिष्यामि निर्वाहः स्यादिति चेत् भागवतधर्मावलंबनद्वारा तदितरधर्मत्यागं वक्तुमाह। मन्मना मद्भक्तो मद्याजी भव मामेव सत्यं यास्यसि ततो मा शुचः एतदनुष्ठानमेव तव शोकमपनुद्यादित्युपसंहरतीति द्रष्टव्यम्। ननु सर्वधर्मत्यागे प्रेरितोऽपि कुतः स्वधर्मे युद्धे प्रवृत्तोऽर्जुन इति चेत् प्रारब्धकर्मणां भोगादेव क्षयस्तस्य राज्यसुखभोगस्य दुर्वारत्वात् शत्रुहननरूपपूर्वकर्मसंस्कारस्यानिवार्यत्वात्। तदप्युक्तं भगवतैव। ‘[6]स्वभावजेन कौंतेय निबद्धः स्वेन कर्मणा। कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत्’ इति। स्वभावजेन संस्कारजनितेन शौर्यादिना कीर्त्यैश्वर्यसंपादनेच्छारूपेणेत्यर्थः। स्वेन कर्मणा स्वकर्मणा पूर्वप्रारब्धरूपेण फलभोक्तव्यरूपेणेत्यर्थः। तेन नितरां बद्धस्त्वं मोहादिदानीं भीष्मादिवधरूपं यत् कर्तुं नेच्छसि तदितः परमवशोऽपि करिष्यसि। ‘[7]यदहंकारमाश्रित्य न योत्स्य इति मन्यसे। मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति’ इति पूर्वश्लोकेनोक्तत्वात्। अवशोऽपि प्रकृतिबलात् करिष्यस्येवेत्यर्थः। ननु प्रकृतिर्मतिरेव युद्धे न प्रवर्तते कथमहमवशः सन् करिष्यामीति चेत्तत्राह ‘[8]ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन्सर्वभूतानि यंत्रारूढानि मायया’ इति। अयमर्थः। एतावत्पर्यंतं

---

१ भ. गी. २।७। २ भ. गी. २।८। ३ भ. गी. १८।६६। ४ भ. गी. २।८। ५ भ. गी. १८।११। ६ भ. गी. १८।६०। ७ भ. गी. १८।५९। ८ भ. गी. १८।६१।

तव स्वधर्मत्यागपरधर्माभिसंधिनिषेधमिषेण तव च त्वदितरजगतश्चोद्धारनिमित्तं सकलशास्त्रसारं तुभ्यमुपदिष्टं युद्धे त्वां नियोजयितुम्। नैतावत्प्रयासो ममापेक्षितः। किं तु 'धियो यो नः प्रचोदयात्' इति मंत्ररहस्यं निखिलजीवकदंबबुद्धिप्रकाश-प्रेरकस्य मम तव कर्मानुरूपबुद्धिप्रेरणं किमशक्यम्। न तत्र तव स्वातंत्र्यमस्ति। यतस्त्वीश्वरः सर्वभूतहृद्देशे तिष्ठति स तु मायया सर्वभूतबुद्ध्या सर्वभूतानि भ्रामयन्नेव तिष्ठति। 'तं[2] ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' इति श्रुतेः। तथा च 'धियो[3] यो नः प्रचोदया'दिति मंत्रः। कथंभूतानि भूतानि। यंत्रारूढानि यंत्रं बुद्ध्याख्यं तत्रारूढानि। बुद्ध्यधीनप्रवृत्तित्वात् तत्र यंत्रस्य भ्रामणेन तत्रस्थानि भूतानि स्वत एव भ्रमंतीति भावः। तत्रेश्वरः प्रारब्धकर्मानुरूप एव भ्रामयति कर्मफलस्य दुर्वारत्वात् कर्मणः स्वतो जडत्वात् भोक्तुरनीशत्वात् तत्फले नियोजकस्त्वीश्वर एव। तथा च सति शत्रुसंहारपूर्वकराज्यसुखभोगस्त्वत्कर्मफलमिति पूर्वश्लोकेनोक्तमेव। तत्र च 'कथं[4] भीष्ममहं संख्ये' इति। 'स्वजनं[5] हि कथं हत्वा सुखिनः स्याम माधव' इत्याद्येतज्जन्मकृतममत्वेन यद्यप्यनुकंपया वा न योत्स्य इति यत्कर्तुं नेच्छसि तदवशोऽपि करिष्यसि। या तव बुद्धिस्तत्र न प्रवर्तते तामहं प्रवर्तयिष्ये। यतस्त्वद्बुद्धियंत्रं त्वमारूढस्तद्भ्रामकोऽहमेवेश्वरो हृद्देशे तिष्ठामि। सोऽहं त्वां बलात्तत्र नियोजयिष्यामि। त्वं च करिष्यस्येव। तथा च सति ज्ञानदृष्ट्या मदनुज्ञया युद्धं कर्तुमेव तवोचितमिति निगूढाभिप्रायः।

प्रकृतमनुसरति भगवान् श्रुतिकल्पलताकारः। एवं प्रारब्धवशात् भावियुद्धस्य दुर्वारत्वात् तस्मिन्नादावेवमर्जुनं नियोज्य तदनंतरं सर्वधर्मत्यागोऽत्र विहित इत्यनवद्यम्। अतः तव सूरयः कथामृताब्धिमवगाह्य तपांसि जहुरिति श्रुतिभिः स्तुतो भगवान्। भगवता यथा त्वादौ मन्मना मद्भक्तो मद्याजी भव इत्युक्त्वा सर्वधर्मत्यागो विहितस्तथैवात्र कथामृताब्धिमवगाह्य तपांसि जहुरित्युक्तम्। तत्रावगाह्य निषेव्येत्यर्थेन श्रवणवर्णनादिभागवतधर्मावलंबनद्वारा अखिलकर्मत्यागः सदाचारेण सूच्यते। कथाश्रवणे तु ये ये भागवतधर्माः पूर्वेषां भागवतानां विहिताविहितत्वेन भागवतविषयास्तेष्वधिकारानुरूपं कृत्वा तदितरतपांसि जहुरिति भावः। ननु वेदविहितश्रेयःसाधनानि त्यक्त्वा पुराणादिषु विहितकथाश्रवणपरिनिष्ठिता इति सिद्धे, श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीय-

---

१ ऋ. सं. ३।४।१०। २ श्वे. ६।१८। ३ ऋ. सं. ३।४।१०। ४ भ. गी. २।४। ५ भ. गी. १।३७।

सीति प्रसिद्धम् । तस्मादर्थवादोऽयमिति न च वाच्यम् । कथाश्रवणादेश्चावश्यकतया श्रुत्यैव विहितत्वात् । 'त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् । विष्णोः कर्माणि पश्यत' इति श्रुतेः । भो गोपाः, विष्णोः कर्माणि पश्यत । गां इंद्रियाणि पांति पालयंति जीवयंतीति गोपास्तेषां संबोधनं भो गोपा इंद्रियप्रकाशका इत्यनेन भो देहेंद्रियादितादात्म्यरहिताः चिदचिद्विवेक-संपन्ना इत्यर्थः सूच्यते । देहात्ममानिनामज्ञानां स्वत एव देहेंद्रियाणि प्रका-शंत इति निश्चयात्तद्विलक्षणा ज्ञानिन इह संबोध्यंते । आत्मज्ञाने जाते किमधुना कथाश्रवणादिविधिः प्रयोजनाभावादिति चेन्न । विष्णोः कर्माणि पश्यतेति तेष्वपि यदा त्वयं विधिस्त्वदितरेष्वज्ञेष्विति किं वक्तव्यम् । कर्माणि श्रृणुतेति विवक्षायां पश्यतेति विधिना श्रोत्रश्रुतानि कर्माणि हृदि पश्यत ध्यानपूर्वकं सर्वदा स्मरणविषयीकुरुतेति विधीयते । श्रवणं विना ध्यानासंभवात् । ननु विष्णोरेव कर्माणि पश्यतेति कोऽयं निर्बंधस्तदितरदेवताकर्माणि पश्यामस्तेषां च परत्वश्रवणादिति चेत्सत्यम् । ब्रह्मैकत्वाऽद्वितीयत्वान्न क्वापि भेदो दृश्यते तत्र 'एक एव रुद्रः'[1] इति । 'हिरण्यगर्भः समवर्तताग्रे'[2] इति । 'इंद्रो[3] यातोऽ-वसितस्य राजा' इति । 'अग्निर्मूर्धा[4] दिवः ककुत्पतिः' इति । 'सविता[5] पश्चातात्सविता पुरस्तात्' इत्यादि । 'सोमः[6] पवते जनिता मतीनां' इति सर्वेषां देवानां श्रुतिभिः परत्वमुपपाद्यते । ब्रह्मत्वसामान्यात् किंतु स च जगदादिकारणस्य ब्रह्मणो जनकः श्रियः पतिर्विष्णुरेव । 'अजस्य[7] नाभावध्येक-मर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः' इति विधिजनकत्वं विष्णोरेवोक्तं ब्रह्मणश्च जगदादिकारणत्वं 'हिरण्यगर्भः[8] समवर्तताग्रे भूतस्य जातः पति-रेक आसीत्' इति श्रुत्योक्तम् । ततः श्रुतिभिरुपाधिसर्वोत्कृष्टत्वं तु तस्यैवोपपा-द्यते । 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि' इत्यादि तस्यैव गुणानंत्यात् सगुणत्वेऽप्यानंत्यस्य तदेकनिष्ठत्वात्तस्यैवावतारचरि-तानि जगदुद्धारहेतुकानीति तदेकगुणश्रवणं श्रुतिभिर्विधीयते । तस्यानन्यसाध्य-कर्मकरत्वादतर्क्यमहिमत्वात्तस्यैव कर्माणि पश्यतेति श्रुत्या विधीयते । '[9]त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः' अत इत्येतैः पदैः । अदाभ्यः अभि-भवितुमशक्य इत्यर्थः । समोत्तमयोरभावात् । नहि अतुल्यस्यानुत्तमस्याभिभवः क्वचिदपि वक्तुं शक्यते । अत एव विष्णुर्व्यापकः । निरभिमानित्वात् । ब्रह्मत्वसा-

१ ऋ. सं. १।२।७। २ ऋ. सं. ८।७।३। ३ ऋ. सं. १।२।३८। ४ ऋ. सं. ६।३।३९। ५ ऋ. सं. ७।८।११। ६ ऋ. सं. ७।४।६। ७ ऋ. सं. ८।३१।१७। ८ ऋ. सं. २।२।२४। ९ ऋ. सं. १।२।७।

मान्यात्सर्वेऽपि व्यापका एव, किंतु देहाद्यभिमानित्वात्सर्वात्मकत्वात् प्रथमं स प्रकृतिविद्याशबलितः श्रीविष्णुः स प्रथमः सर्वपूर्वजस्य ब्रह्मणो जनकः । 'यो[1] ब्रह्माणं विदधाति पूर्वम्' इति श्रुतेः । **'स एव प्रथमः स प्रकृतिस्ततो मित्रो वरुणः'** इत्याद्यखिलदेवताकदंबजीवप्रतिबिंबबिंबात्मा यस्तस्मा इंद्राय मुख्यायेंद्राय हविराजुहोतीत्यादिश्रुतिसिद्धत्वात् विष्णुधर्मस्य सर्वोत्कृष्टत्वात्तदितरधर्मस्य बंधकत्वात् विष्णोर्धर्मान् धारयन् विष्णोः कर्माणि पश्यतेति विष्णोरिति पदस्योभयत्रानुषंगतयार्थो व्याक्रियते । ननु तत्काम्यविषये, निष्कामस्य किं विष्ण्वर्पणेन या काचिद्देवतास्तु । तदर्पणस्य बंधकत्वाभावात् । किं पुनर्विधिपरिपालनमात्रोद्देशेन प्रत्यवायपरिहाराय कृते बंधः स्यादिति चेन्मैवम् । भगवदर्पितेतरस्य सर्वस्य कर्मणो बंधकत्वात् । तदुक्तं भगवता । **'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं[2] कर्मबंधनः । तदर्थं कर्म कौंतेय मुक्तसंगः समाचर'** इति । अयमर्थः । यज्ञार्थात् विष्ण्वर्थात् निष्कामाद्विष्ण्वैकप्रीतये कृतादन्यत्र कर्मणोऽयं लोकः कर्मबंधनः । अपथ्यस्य रोगजनकस्यान्नस्येव कर्मणः स्वाभाविकबंधशक्तित्वात् । ततस्तु तदर्थं कर्म तच्च मुक्तसंगः फलवासनारहितः सन्नाचरेत्यर्थः । तस्मात् यज्ञार्थादितरकर्ममात्रस्य बंधकत्वविधानात् काम्यसममेव निष्कामं देवतांतरोद्दिष्टं वा प्रत्यवायपरिहारायाचरितं विधिपरिपालनाय निर्गुणब्रह्मार्पणं वा सर्वबंधकमिति सद्भिरुपपाद्यते । ननु कर्मणां स्वाभाविकबंधकशक्तित्वात् भगवत्यर्पितानां च बंधकत्वं घटेत, तदभावे कामनारहितस्य कर्ममात्रस्य न बंधकत्वमिति चेन्मैवम् । भगवतो मुकुंदस्य मुक्तिप्रदत्वासाधारणत्वात् **'यो[3] ब्रह्माणं विदधाति पूर्वम्'** इत्यादि । **'मुमुक्षुर्वै शरणमहं प्रपद्ये'** इत्यादिश्रुतिसिद्धमुमुक्ष्वेकोपास्यत्वात् ब्रह्मादीनां वेदविद्याप्रदत्वात् केवलविद्यैकोपाधित्वात् सत्वैकमात्ररूपत्वात् अखिलप्रतिबिंबबिंबत्वात् अपथ्यमपि भिषक्तमः पथ्यं करोतीति न्यायात् तदर्पितमाविद्यकं कर्म दग्धबीजप्रायं भवति । **'सर्वकर्मफलत्यागं[4] प्राहुस्त्यागं विचक्षणाः'** इति भगवता निर्णीतत्वात् । नच भगवत्यनर्पितस्य कर्मणः फलत्यागेनापि त्यागत्वं संभवति । अपथ्याशिना तत्फलस्य रोगस्य मनसा कृतेऽपि त्यागे रोगो भवत्येवेति न्यायात् । तथाच घृतक्षीरादिपौष्टिकद्रव्याशिना मनसा त्यक्तेऽपि पुष्टिफले पुष्टेर्दुर्वारत्ववत् कर्मणो निसर्गबंधकशक्तित्वात् फलं दुर्वारम् । यदि पुण्यकर्मफलत्यागेन त्यागस्तर्हि पापकर्मफलत्यागेनापि त्यागः कुतो न स्यात् । उभयोः समानवीर्यत्वात् । तस्मात् भगवदर्पितनिष्कामस्यैव त्यागत्वम् । नित्यस्यापि फलश्रवणात् । यथा भिषग्वर्यकरे दत्तमपथ्यं द्रव्यांतरसंयोगादिक्रियायोगैः पथ्यं भवति, तथा त्वविद्याविरचित-

१ श्वे. ६।१८। २ भ. गी. ३।९। ३ श्वे. ६।१८। ४ भ. गी. १८।२।

कर्मणां भगवति विधोपाधौ समर्पितानामेव मोक्षहेतुकत्वात् बंधकफलराहित्यं संभवति। तदपि सर्वस्य विहितस्यैव। 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबंधनः। तदर्थं कर्म कौंतेय मुक्तसंगः समाचर' इति तृतीयाध्यायादौ भगवता निर्णीतत्वात्। 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम्' इति न्यायसिद्धत्वान्नित्यस्य कर्मणोऽपि भगवति समर्पणे बंधाभावश्चेत् पापात्मककर्मसमर्पणप्रवृत्तेर्न विहितत्वात्। किंतु काम्यान्यकर्मण एव 'ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः। अनन्येनैव योगेन मां ध्यायंत उपासते। तेषामहं समुद्धर्ता' इति द्वादशाध्याये। एवं भगवदर्पितकर्मणां मोक्षहेतुत्वस्य तत्र तत्रोक्तत्वादशेषोपसंहारे 'सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः' इत्यनेन भगवदर्पितनिष्कामकर्मण एव सर्वकर्मफलत्यागरूपत्वसंभवात्स एव त्यागः। अन्यथा बंधकत्वाभावत्वसंभवात्। ननु 'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः' इत्यनेन काम्यकर्मणः स्वरूपतस्त्यागस्य संन्यासत्वाभिधानात्। नियतस्य तु संन्यासः कर्मणो नोपपद्यते' इति नियतत्यागनिषेधात् 'सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः' इति नित्यस्य फलत्यागस्य त्यागत्वविधानान्नात्र भगवदर्पणप्रसंग इति चेत् 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबंधनः' इति पूर्वत्र निर्णीतत्वाद्यज्ञो वै विष्णुस्तदर्थेतरस्य बंधकत्वं तु तदर्थकानि काम्यान्यपि न बंधकानीति माभूत् काम्ये प्रवृत्तिरिति तृतीयाध्याये तत्रैव 'तदर्थं कर्म कौंतेय मुक्तसंगः समाचर' इति तदुत्तरार्धं च तदर्थमपि मुक्तसंगः फलाभिलाषरहितः सन्कुर्विंत्युक्तमर्थमेवात्र संन्यासतत्वं बुभुत्सुं प्रति संन्यासत्वेनाभिधत्ते। नतु पूर्वत्र विहितार्थविरोधेनेति वक्तुमुचितम्। वस्तुतस्तु तदर्थं मुक्तसंगः समाचरेत्युक्तेर्नित्यस्यापि संन्यासतात्पर्याच्च। तथाच काम्यकर्मनिवृत्तोऽपि कश्चन नित्यकर्मणि निष्कामतया प्रवृत्तो यदि तावता बंधो न स्यादिति विश्रब्धो भगवति नार्पयेत्तस्य बंधो दुर्वारो नित्यस्यापि फलश्रवणात्। 'सर्वे एते पुण्यलोका भवंति' इति, 'कर्मणा पितृलोकः' इति, 'धर्मेण पापमपनुदति' इत्यादिश्रुतिसिद्धत्वात् कर्मणो निसर्गबंधकत्वात् भगवदर्पणद्वारा तत्फलत्याग एव त्याग इत्याशयेन त्यागतत्वं विविदिषुं प्रत्याह। 'सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः' इति। यदुक्तं। 'यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबंधनः'

१ भ. गी. ३।९। २ भ. गी. ९।२७। ३ भ. गी. १२।७। ४ भ. गी. १८।२। ५ भ. गी. १८।२। ६ भ. गी. १८।७। ७ भ. गी. १८।६। ८ भ. गी. ३।९। ९ भ. गी. ३।९। १० छा. २।२३।२। ११ बृ. १।५।१६। १२ भ. गी. १८।२। १३ भ. गी. ३।९।

इति तदत्र त्यागशब्दस्यायमर्थः। ये विचक्षणा नित्यमपि बंधकं बंधकशक्तित्वात् विवेकनिपुणास्ते सर्वकर्मफलत्यागं त्यागं प्राहुः। प्रकर्षेण शास्त्रपूर्वापरपर्यालोचनेन न्यायतः सिद्धं त्यागमाहुरित्यर्थः। अयं भावः। यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबंधन इत्यनेन सकामं निष्कामं च भगवत्यनर्पितं बंधकं भवत्येव, तथा तदर्पितं नित्यं काम्यं च नैव भवति। 'तदर्थं[1] कर्म कौंतेय मुक्तसंगः समाचर' इत्यभिधानेन नित्यमिव काम्यमपि तदर्पणतया कर्तव्यं, तदपि फलत्यागेन न तु सर्वथा त्यागः। अथ च नित्यं पौष्टिकं यथा निष्कामं कर्म च भवति तथा कामनात्यागेन भुक्तमपि पुष्टिं जनयत्येव। तथा सर्वकर्मफलत्यागस्त्यागो न भवति, किंतु फलत्यागेन भगवत्यर्पितमेव फलवद्भवतीति विचक्षणाः प्रकर्षेण प्राहुरित्यभिप्रायः प्रशब्देन विचक्षणा इति विशेषणेन सूचयति। तस्मात्त्यागशब्दो भगवत्यर्पितनिष्कामकर्मयोगवाचक इति सिद्धम्। तेन 'त्यागेनैके[2]ऽमृतत्वम्' इति श्रुत्याभिधीयते। न कर्मणा न प्रजया न धनेन भगवत्यर्पितेन किंतु तदर्पितेन कर्मादिनाऽमृतत्वमित्यर्थः। 'तमेतं[3] वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतेर्यज्ञादीनां मोक्षसाधनत्वेन विहितत्वात् भगवदर्पितैः कर्मभिरेव मोक्षो न तदितरकर्मणेति त्यागशब्देन श्रुत्याभिधीयते। एतावता कर्मोपासनाज्ञानकांडानामेकवाक्येन तु निखिलनिगमागमकदंबैकवाक्यत्वादयमेव मुख्योऽर्थः। कर्मणो मोक्षांगत्वात् कर्मकांडं मुक्तिपरम्। तथाच काम्ये सोमयागादौ कर्मण्यप्रवर्तमानानां यथाकथंचित् 'निंबप्रदानविधये खलु खंडदानमि'ति प्रवृत्तिन्यायेन प्रवर्तकत्वात् परंपरया मोक्षजनकत्वादखिलकर्मकांडस्य मोक्षहेतुकत्वात्। तत एव श्रुत्यापि। 'तमेतं[3] वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसाऽनाशकेन' इति कर्मणो मुक्तिहेतुत्वम्। यथाऽपक्वपारदस्य व्रणादिरोगनाशानंतरं स्वत एव रोगांतरजनकत्वं प्रसिद्धम्, दंतहानिकरत्वात् करतलादौ श्वेतत्वादिजनकत्वात्। तथा च कर्मणो ज्ञानहेतुभूतचित्तशुद्धिकरत्वेऽपि नित्यस्य निष्कामस्यापि फलश्रवणाच्चित्तमालिन्यनाशानंतरं स्वतो बंधकत्वान्न मुक्तिहेतुत्वं, पितृलोकादिफलस्य दुर्वारत्वात्। तत्र यथा भिषग्वर्यकरेऽर्पितस्य पारदस्य सम्यक् परिपक्वस्य भस्मीभूतस्य रोगपरिहारकत्वं च स्वतो रोगजनकत्वराहित्यं च, तथा भगवतः संसारवैद्यस्य पदारविंदसमर्पितकर्मणां चित्तशुद्धिकरत्वेऽपि स्वतो बंधराहित्यं तदर्थं प्रवृत्तमुपासनाकांडं तच्च मुक्तिपरम्। तत्र देवतांतरोपासनायाः काम्यवत्प्ररोचनार्थत्वं न विरुद्धम्। पक्वपारदस्य रोगहारकत्वफलवत् भगवदर्पितस्य कर्मणश्चित्तशुद्धिकरत्वं तर्हि 'कर्मणा[4] पितृलोक' इतिवत्पुनः फलजनकत्वान्नात्यंतिकमोक्षहेतुकत्वमिति च न वाच्यम्। मोक्षहेतुकत्वात्। कर्मणः फलं

१ भ. गी. ३।९। २ महाना. १०।५। ३ बृ. ४।४।२२। ४ बृ. १।५।१६।

दुर्वारं सत्यमेव, भिषग्वरकरेऽर्पितस्य रोगपरिहारकत्वरोगांतरपरिहारकत्वात्सुखकरत्वं, एवं मोक्षफलकत्वोक्तेरशेषदुःखनिवृत्तिरूपत्वात् बंधकं न भवतीत्येव तात्पर्यम्। तस्मादुपासनाकांडस्य मुक्तिपरत्वं श्रुत्याप्यभिधीयते। 'तमक्रतुं[1] पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्' इति। किंच। 'नायमात्मा[2] प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वां' इति। प्रवचनाद्यलभ्योऽयमेव यं पुरुषं अनुगृह्णाति तस्यैष आत्मा परमात्मा स्वां तनुं विद्याख्यां प्रयच्छतीति श्रुत्या यदीश्वरस्य विद्याप्रदत्वं विधीयते तदपि तदर्पितकर्मयोगरूपया भक्त्याराधितस्य, नतु स्वत एव। तदन्येषु तदप्रदानवैषम्यापत्तेः। तथाच ज्ञानकांडस्य मुक्तिहेतुत्वं प्रसिद्धमेव। 'तमेव[3] विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय' इति श्रुतेः। अत्रापि 'न[4] कर्मणा न प्रजया' इति च नान्यः पंथेत्यभिधत्ते। इदं गृहं प्रवेष्टव्यमस्माद्द्वारादन्यः पंथा न विद्यत इतियावत्। तत्र गृहात् बहिर्ये मार्गास्तान्हित्वा ग्रामांतरस्थितेनैव पथा गृहं प्रविशतीति यथा न घटते तथा कर्मोपासनारहितः को वा कथं वा ज्ञानवान् स्यात्। क्रमेण तु तद्युक्तम्। एवं न कर्मणा न प्रजया धनेन त्यागेनैके इत्येतावता भगवदर्पितकर्मादिना मोक्ष इत्युक्तं, तस्मात् कर्मोपासना ज्ञानमिति त्रिकांडसाध्यो मोक्ष इति सकलनिगमागमकदंबतात्पर्यम्। अत्रार्याः केचित्त्यागशब्देन संन्यासमाहुस्तदत्र न घटते। कुतः। त्यागशब्देन संन्यासः किमाश्रमरूपो वा, 'काम्यानां[5] कर्मणां न्यासं संन्यासं कवयो विदुः' इति भगवदुक्तप्रकारेण काम्यकर्मत्यागरूपो वा। आद्येऽपि ततः प्राक् किं कर्माद्यनुष्ठाननिरपेक्षो वा सापेक्षो वा। यदि कर्मनिरपेक्षस्तर्हि। 'संन्यस्य श्रवणं कुर्यात्' इति श्रुतेः संन्यासिनां श्रवणद्वारा मोक्षो न त्वाश्रममात्रेण। तथा सति अशुद्धचित्तस्य श्रवणाधिकारराहित्यात्संन्यासात्प्राक् कर्मयोगेन शुद्धचित्तस्यैव संन्यासाधिकार इति सिद्धेन कर्मणेति कर्मनिषेधपूर्वकसंन्यासस्यैव मोक्षांगत्वाभिधानं न स्यात्। यदि संन्यासस्य ततः प्राक् कर्मसापेक्षत्वं तदापि न कर्मणेति कर्मनिषेधपूर्वकसंन्यासाभिधानं न स्यात् सापेक्षत्वात्। तस्मात्त्यागोऽत्र न संन्यासवाचक इति सिद्धम्। द्वितीये काम्यकर्मत्यागस्यैव संन्यासत्वान्न नित्यकर्मणां फलत्यागरूपत्यागस्य संन्यासत्वं च संभवति। 'काम्यानां[6] कर्मणां न्यासं संन्यासं कवयो विदुः' इत्युक्त्वापि विशेषतः 'सर्वकर्मफलत्यागं[7] प्राहुस्त्यागं विचक्षणाः' इत्युक्तत्वात्, 'नियतस्य[8] तु संन्यासः कर्मणो नोपपद्यते' इति वक्ष्यमाणत्वात्त्यागशब्देनात्र भगवदर्पितनिष्कामकर्मयोगरूपोपासनेत्येवार्थः।

---

१ का. २।२०। २ का. २।२३। ३ श्वे. ३।८। ४ महाना. १०।५। ५ भ. गी. १८।२। ६ भ. गी. १८।२। ७ भ. गी. ४।३२। ८ भ. गी. १८।७।

ननु अशुद्धचित्तस्य संन्यासानर्हत्वात् न कर्मनिषेधपूर्वकः संन्यासोऽत्र त्यागशब्देन घटत इति चेत्, कर्मणा शुद्धचित्तानां न कर्मण्येव प्रवर्तमानानां संन्यासो मुक्तिप्रदः तेषामत्र न कर्मादिना मोक्षः किंतु संन्यासेनैवेति कर्मादीनां मोक्षसाधनत्वनिषेधः । त्यागशब्दः संन्यासवाचक इति ब्रूम इतिचेत्, कर्मणो मोक्षांगभूतश्रवणांगस्य संन्यासाधिकारजनकस्यैव निषेधो यद्युचितः स्यात्तर्हि न संन्यासेनाप्यमृतत्वं किंतु श्रवणेनैकेनामृतत्वमित्यपि वक्तुमुचितमिति प्राप्ते, कर्मवत्संन्यासस्यापि मोक्षांगत्वं निषिध्यते । 'त्यागेनैकेऽमृतत्वमानशुः' इत्यत्र त्यागस्य स्वातंत्र्यात् हेतुत्वेन त्यागपदेन सोऽभिधीयते । संन्यासः कर्मफलत्यागः न सामान्यतः कर्मनिषेध एवं तस्यापि न स्वातन्त्र्यमिति वक्तुमुचितत्वात् । कर्मणः फलांगत्ववत् संन्यासस्य न फलांगत्वं, किंतु मोक्षं प्रति अस्वातंत्र्यम् । अन्यथा केवलसंन्याससमात्रेणैव मोक्षो वा संन्यसनानंतरं श्रवणमननादिना वा ? आद्ये 'ज्ञानादेव तु कैवल्यं' इति सिद्धांतविरोधित्वात्तदसिद्धम् । द्वितीये संन्यासिनः श्रवणात्प्रागेव यथेष्टाशने प्रवृत्तस्योभयभ्रष्टस्य पतितस्य नरकगामिनो मृतस्य न मोक्ष इति सिद्धे यथा न कर्मणा तथा न संन्यासेनापीति सिद्धे न संन्यासोऽप्यत्र स्वतंत्र इति घटते । ननु यतेर्जन्मांतरे श्रवणद्वारा मुक्तिः स्यादिति चेदीश्वरप्रसादेन वा स्वत एव वा ? आद्ये त्वीश्वरार्पणतया कर्मयोगेन शुद्धचित्तस्य श्रवणात्प्रागेव मृतस्यापीश्वरो जन्मांतरे श्रवणादिद्वारा मुक्तिप्रदः स्यादेव । कोऽत्र त्यागेनैके इतीतरनिषेधपूर्वकः संन्यासप्रशंसाविशेषः । ननु 'संन्यस्य श्रवणं कुर्यात्' इति श्रुतेर्गृहस्थस्य श्रवणाधिकारराहित्यादितिचेत्, याज्ञवल्क्यजनकार्जुनादीनां गार्हस्थ्ये श्रवणाधिकारश्रवणात्तदसिद्धम् । ननु तेषां जन्मांतरे संन्यासग्रहणं चिंत्यम् । कुतः । 'संन्यस्य श्रवणं कुर्यात्' इति श्रुतिविरोधपरिहारायेति चेत्, श्रुतेर्भगवता काम्यत्यागपरत्वेन व्याकृतत्वान्न श्रुतिविरोधः । तदुक्तं 'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः' इति । ननु काम्यत्यागस्य संन्यासत्वं गौणम् । आश्रमसंन्यासस्य मुख्यत्वात् 'संन्यस्य श्रवणं कुर्यात्' इत्याश्रमसंन्यास एव श्रुत्याऽभिधीयत इति चेन्मैवम् । 'संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् । त्यागस्य च हृषीकेश' इत्यर्जुनस्य संन्यासतत्त्वं वेदितुमिच्छामीति प्रश्नादाश्रमसंन्यास एकः काम्यकर्मत्यागरूप एक इत्युभयोः किं तत्त्वमिति प्रश्नस्य काम्यकर्मत्याग एव संन्यासो न त्वाश्रमरूप इत्युत्तरविवक्षया कवयो विदुरित्युक्तम् । आश्रमसंन्यासस्य श्रवणांगत्ववादिनो न कवयः किंतु संन्यासाश्रमाभिमानिन इत्यर्थः स्पष्टो

१ महाना. १०।५। २ भ. गी. २।८। ३ भ. गी. १८।१।

दृश्यते। तथा च '**संन्यस्य श्रवणं कुर्यात्**' इतिचेच्छ्रुतिस्तदानीमितरसाधनानां क्वावसरः स्यात् 'संन्यस्य श्रवणं कुर्यात्', 'स्नात्वाऽश्नीयात्' इतिवत्तत्र जन्मान्तरस्नानवदत्र जन्मांतरसंन्यासः। तस्मान्नाश्रमसंन्यासः श्रवणस्य मुख्यः। स्त्रीशूद्राणां च श्रवणाधिकारत्वान्मैत्रेय्यादिस्त्रीणां श्रवणाधिकारत्वेऽप्याश्रमसंन्यासानर्हत्वात्। किंच न्यायतोऽप्ययमेवार्थः। आश्रमसंन्यासिनोऽपि काम्यत्यागं विना श्रवणाधिकारराहित्यात् शिखासूत्रत्यागानंतरमपि काम्ये प्रवृत्तस्योभयभ्रष्टत्वसिद्धेस्तत्रापि काम्यत्यागोंऽतरंग इति सिद्धम्। तथा च स्त्रीशूद्रादीनां काम्यत्यागरूपस्य संन्यासस्याश्रमसंन्यासापेक्षाराहित्यान्मोक्षः, तथा च सति द्विजस्त्रीशूद्राद्यशेषमुमुक्षूणां यः सापेक्षः संन्यासो यतीनां च यः सापेक्षः स एव संन्यासः श्रवणायांतरंगत्वेन श्रुत्याभिधीयते इति सिद्धम्। आश्रमसंन्यासस्य काम्यत्यागसंन्याससापेक्षत्वात्काम्यत्यागसंन्यासस्याश्रमसंन्यासनिरपेक्षत्वात्स्वातंत्र्यात्, ननु '**यदहरेव विरजेत्तदहरेव प्रव्रजेत्**'[1] इति। ननु द्विजानामाश्रमसंन्यासार्हत्वात्तेषां यथोपनयनादिसंस्कारा द्विजत्वजनकास्तथा श्रवणाय संन्यासोऽधिकारजनक इति ब्रूम इतिचेत्सर्वसाधारणमुमुक्षुविषयत्वं त्वसिद्धम्। अथ द्विजमात्रविषयत्वेनाश्रमसंन्यासस्य मोक्षांगत्वमित्युच्यते, तत्किं द्विजमात्रविषयत्वस्य प्रमाणसिद्धत्वादुत न्यायतः? आद्ये तथा द्विजविषयत्वविशेषस्याश्रवणादसिद्धम्। यदि द्विजस्यैव संन्यासाधिकारित्वादेवं द्विजविषयोऽयं संन्यास इति चेत्, गर्भाधानादिसंस्कारजन्यद्विजत्वफलो वा मुक्तिफलो वाऽयं संन्यासः?। श्रवणांगत्वान्नाद्य इति सिद्धम्। द्वितीये स्त्रीशूद्रादीनां यं विना श्रवणाधिकारः श्रवणेन मोक्षस्तं विना द्विजानां नाधिकार इति सिद्धे किमपराद्धं द्विजैः? किं वा सुकृतमाचरितं स्त्रीशूद्राद्यैः?। ननु स्त्रीशूद्राणामर्थत एव श्रवणाधिकारो न तु मूलश्रुतीनां श्रवणपठण इत्यपि चेत् स तूपनयनादूर्ध्वमस्याधिकारः सिद्ध एव, तत्र ब्रह्मचर्ये गुरुकुलवासे शास्त्रश्रवणविधानात्तत्र तत्त्वजिज्ञासोर्वेदांतश्रवणे नाधिकार इति सिद्धे सर्वत्र विरोधान्नायमर्थः। ननु ब्रह्मचारिणः प्राग्जन्मसंन्यासेनाधिकारः स्यादिति चेत्, प्राग्जन्मन्यपि ब्रह्मचर्ये वेदांतश्रवणाधिकारोऽस्ति वा न वा? आद्ये प्राग्जन्मसंन्यासश्रित्यः एवं सत्यनवस्था स्यात्। तस्मादसिद्धः प्राग्जन्मसंन्यासः। अंते '**तमेतं वेदानुवचनेन**'[2] इति श्रुतिविरोधः। '**संन्यस्य श्रवणं कुर्यात्**', '**प्राङ्मुखः स्थित्वा जपेत्**' इत्यादिविधयो विरक्तस्याभिमुखीभूतचित्तस्याधिकारमाहुः, न तु प्राङ्मुखस्थितस्य युक्तमिदं मतम्। ननु '**यदहरेव विरजेत्तदहरेव प्रव्रजेत्**'[3] इति श्रुतेर्विरक्तस्य संन्यासाधिकारत्वात्ततः प्रागेव काम्यकर्मत्यागान्न

१ जाबा. ४। २ बृह. ४।४।२२। ३ जाबा. ४।

यतेः काम्यत्यागसंन्यासापेक्षेति चेन्नैवम्। वांताशिनां यतीनां व्रतभंगप्रत्यवायश्रवणात् कामोद्भवसंभावनायां काम्ये कर्मणि लौकिके वैदिके वा प्रवृत्तिः स्यादेव न केवलं वैदिके कर्मणि ज्योतिष्टोमादौ। एवं च काम्यत्याग एवात्र 'काम्यानां कर्मणां न्यासम्'[1] इत्यनेनाभिधीयते। लौकिकेन धनाद्यर्जनकाम्ये प्रवृत्तस्य त्यक्तवैदिककाम्यस्य संन्यासत्वासंभवात्। तत्र धनाद्यर्जनकाम्ये प्रवृत्तस्यापि त्यक्तवैदिककाम्यस्य संन्यासत्वासंभवात्। तत्र धनाद्यर्जने प्रवृत्तस्यापि मनसो निग्रहस्यावश्यकत्वात्तस्यापि काम्यत्यागसंन्यासापेक्षत्वं दुर्वारम्। 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्'[2] इति श्रुत्यापि काम्यकर्मत्यागसंन्यासांगत्वेनैवायं संन्यासो विधीयते न स्वातंत्र्येण। अयमर्थः। 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' चेत्पुनः कामहतो भूत्वा मोक्षविमुखो माभूदिति तात्पर्येण यच्छब्द-एवकारयोः प्रयोगः, तस्माद्विरक्तस्य पुनः कामहतत्वे प्राप्ते तु संन्यासाश्रमेऽपि यदि क्वचित्प्रमादः स्यात्तर्हि यदहरेव विरजेत्तदहरेव प्रव्रजेदिति विधिरनर्थक इति सिद्धे तत्रैवं तात्पर्यम्। यतेः पुनर्गार्हस्थ्यासंभवात्, विक्षिप्तस्य मनसो निग्रहं करिष्यति विरज्य संन्यस्तत्वात्। यदि यदहरेव विरजेत्तदहरेव न प्रव्रजेत् पुनर्विक्षिप्ते मनसि स्त्रीधनाद्यासक्त्या मुमुक्षाभंगः स्यात्, तस्मात् 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुतिबलाद्यदा संन्यासिनां च लौकिकवैदिककाम्यकर्मत्यागलक्षणः संन्यासः सापेक्ष इति सिद्धम् तर्हि सत्वाश्रमसंन्यासनिरपेक्षः स्वतंत्र इति सिद्धमेव। गार्हस्थ्ये याज्ञवल्क्यादीनां श्रवणाधिकारस्य श्रुतौ श्रवणात् प्राग्जन्मसंन्यासकल्पनावैयर्थ्यात्। 'संन्यस्य श्रवणं कुर्यात्' इति श्रुतेः 'उपविश्य स्वपेत्' इति न्यायेनार्थस्यान्यथानुपपत्तिः। क्वचिदुपविष्टस्यापि स्वापकाले शय्योपवेशनावश्यकत्ववत्तुल्यन्यायात्। तथा च षष्ठाध्यायेऽप्ययमेवार्थः स्पष्टतया भगवताऽभिधीयते 'अनाश्रितः[3] कर्मफलं कार्यं कर्म करोति यः। स संन्यासी च योगी च न निरग्निर्न चाक्रियः' इति। स्वरूपतो नित्यविहितत्यागी अक्रियो यः स न संन्यासी न च योगी। कर्मयोगी निरग्निर्निराश्रमसंन्यासी सोऽपि न संन्यासी न च योगी। 'काम्यानां[4] कर्मणां न्यासं संन्यासं कवयो विदुः' इति वक्ष्यमाणत्वान्न चाक्रियः। ननु याज्ञवल्क्यादिभिः पक्वज्ञानिभिरपि संन्यासस्वीकारात्संन्यासो मुख्य इति चेन्नेति को ब्रूते? सर्वाश्रममुकुटालंकाररूपत्वादेकांतोपयोगित्वात् स्वरूपतः सर्वसंगत्यागरूपत्वाद्विदुषां च जिज्ञासूनां च सर्वेषामयमाश्रमो मुख्य एव, किंतु संन्यासं विना न श्रवणाधिकारो न च मुक्तिरिति।

---

१ भ. गी. १८।२। २ जाबा. ४। ३ भ. गी. ६।१। ४ भ. गी. १८।२।

तप्तमुद्राधारणं विना न ज्ञानाधिकारत्वमिति न्यायस्य विद्वद्योग्यत्वादेवं व्याकरोति भगवान् श्रुतिकल्पलताकारः। अथ प्रस्तुतमनुसरति । '**न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः**' इति श्रुत्या त्यागशब्देन भगवदर्पितनिष्कामकर्मयोगस्यैव स्वातंत्र्यमभिधीयते। तत्र कर्मणा स्वधर्मेण नित्येन निष्कामेनापि न मोक्षः, किं तु पितृलोक एव। '**कर्मणा पितृलोकः**' इति श्रुतेः। न प्रजया गृहस्थधर्मेण कामेन धनेनार्थेन वेदोक्तत्रिवर्गेण न मोक्षः। किं तु भगवदर्पितेन नित्येन कर्मणैकेन चामृतमात्मज्ञानस्य चित्तशुद्धिद्वारा भगवतः प्रसादैकलभ्यत्वात्तदर्पितनित्यकर्मणश्चित्तशुद्धिकरत्वात् तत्प्रसादहेतुत्वाच्च स्वाभाविकबंधकशक्तित्वात् भगवत्यर्पितानां च कर्मणां बंधकत्वं घटेत, तदभावे कामनारहितस्य कर्ममात्रस्य न बंधकत्वमिति चेन्नैवम्। भगवतो मुकुंदस्य मुक्तिप्रदत्वासाधारणत्वात् '**यो ब्रह्माणं विदधाति पूर्वं**' इत्यादि, '**मुमुक्षुर्वै शरणमहं प्रपद्ये**' इत्यादिश्रुतिसिद्धमुमुक्ष्वेकोपास्यत्वात् ब्रह्मादीनां विद्याप्रदत्वात् केवलविद्यैकोपाधित्वात् सत्त्वैकमात्ररूपत्वात् अखिलप्रतिबिंबबिंबत्वात् अपथ्यमपि भिषक्तमः पथ्यं करोतीति न्यायात्। तदर्पितमाविद्यकं कर्म दग्धबीजप्रायं विद्यैकोपाधेरविद्याप्रतियोग्युपाधित्वात् मुक्तिहेतुकं तत्कर्म करोतीत्यतो न विष्ण्वर्पितं कर्म बंधकमिति वक्तुं शक्यते। तत एव । '**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबंधनः**' इत्युच्यते '**यज्ञेन यज्ञम्**' इति श्रुत्या। '**स प्रथम**' इत्यादिश्रुतिभिरप्यत एव एवं विधीयते। ननु '**त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनम्। उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतात्**' इति मृत्युमोक्षाय त्र्यंबकोऽपि मुमुक्षुभिः प्रार्थ्यते। ततस्तु देवतांतरोद्दिष्टं न बंधकमिति ब्रूम इति चेन्नैवम्। अपमृत्युमोक्षाय प्रार्थनेयं, न त्वविद्यानिवृत्तिद्वारा सर्वथा मृत्युमोक्षाय मुमुक्षूणामियं प्रार्थनेति घटते। पुष्टिवर्धनमिति काम्यप्रदत्वविशेषणाद्रोगपरिहारद्वारा पुष्टिवर्धनं, यजामहे इति स्पष्टार्थत्वात्। लोकेऽपि रोगाद्यापत्परिहाराय मंत्रस्यास्य जपादेर्दर्शनात्। तथाच नात्र '**अतो धर्माणि धारयन्**'। '**कर्माणि पश्यत**'तिवत् त्र्यंबकं यजेतेति विधिः। किं विद्महे धीमहीत्यखिलदेवतागायत्र्या निखिलोपासना तत्तदुपासकोपास्यत्वेन यथा वेदेनोपपाद्यते, तथा त्र्यंबकं यजामहे न तावता विधिरिति। यच्च '**तुरीयं शिवमद्वैतम्**' इत्यादि '**एक एव रुद्र**' इत्यादि श्रुतिभिरभिधीयते तत्तु सर्वेषां वेदानां

१ महाभा. १०।५। २ बृ. १।५।१६। ३ श्वे. ६।१८। ४ भ. गी. ३।९। ५ ऋ. सं. ८।४।१९। ६ ऋ. सं. ५।५।३०। ७ ऋ. सं. १।२।७। ८ नृ. पू. ४।१। ९ अथर्व. ५।

अद्वितीये ब्रह्मणि तात्पर्यमित्यग्न्यादीनां च 'सर्वं खल्विदं ब्रह्म' इति सिद्धांतमनुसृत्याकाशादीनां च परत्वेन श्रुतिभिरुपपादितत्वात् ब्रह्मत्वसामान्ये पर्यवसानात् शिवादीनां विष्ण्वैक्यं परत्वं च युक्तमेव न तत्र विरुद्धम्, किं तु मुमुक्षूपास्यत्वं मुक्तिप्रदत्वं ब्रह्मादिजगत्कारणजनकत्वं वेदविद्याप्रवर्तकत्वं सत्वैकमात्रत्वं विद्यैकोपाधित्वं तस्मिन्नेव भगवति श्रूयते । ततस्तु तस्मिन्नेव कर्मार्पणादि श्रुतिभिर्विधीयते । न तथान्यदेवतार्पणादि, न चान्यकर्मणः श्रवणादिविधिस्तद्धर्मधारणविधिश्च श्रूयते । ततस्त्वितरदेवतार्पितकर्मणो बंधकत्वात् 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबंधनः' इत्युच्यते । तथाच विशेषतोऽपि भगवानाह । 'येप्यन्यदेवताभक्ता यजंते श्रद्धयान्विताः। तेऽपि मामेव कौंतेय यजंत्यविधिपूर्वकम्' इति विष्ण्वेकरूपेण यजनस्य विधिपूर्वकत्वात् बंधकत्वाभावात् मुक्तिहेतुकत्वम् । न ह्येकं भिषग्वर्यं विना कश्चनाऽपथ्यं पथ्यं कर्तुं समर्थ इति न्यायात् । सत्त्वस्य मुक्तिहेतुकत्वात् सत्त्वोपाधेर्मुक्तिप्रदत्वमिति न्यायाच्च । यथाह भगवान् । 'न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः' इति । तस्मात् तत्त्वस्मिन्नस्तीत्यर्थः । तथैव विधिपरिपालनप्रत्यवायपरिहाराय कृतं निष्कामं च पितुराज्ञापरिपालनाय तदाज्ञोल्लंघनदोषपरिहाराय भक्षितेऽप्यपथ्यान्ने न रोगो दुर्वार इति न्यायात् । तथाचेच्छास्त्रेण कुतो विधीयते इति चेद्यथाकथंचिदपथ्यमपि वायं भक्षयित्वा जीवतु नामेति पथ्यं रुच्यनभिज्ञस्येव पितेव शास्त्रसामान्यत उपवासकृतमृत्युपरिहारायैव रोगमंगीकृत्य काम्यं वा संध्यादि कामनारहितं वा यत्किंचित्कर्म विधत्ते तस्य बंधकत्वस्य दुर्वारत्वादेव भगवदर्पितं कर्म मुख्यमिति विशेषतोऽपि सर्वत्र विधीयते । तथैव भगवत्यर्पितं निष्कामं च मास्तु मम रोग इत्युक्त्वापि भक्षितमपथ्यं नारोग्यकरं भवतीति न्यायात् । तथाच निर्गुणब्रह्मार्पणम् । न हि शुक्त्या मिथ्यारजतनाश इति न्यायादधिष्ठानस्य विवर्तप्रतियोगित्वाभावात् प्रत्युताधिष्ठानस्य विवर्तप्रकाशकत्वादाविद्यकस्य कर्मणो विद्यैकदाह्यत्वात् विद्यायाश्चावस्तुत्वात् स्वातंत्र्येणाविद्याध्वंसकत्वाक्षमत्वात् विद्याशबलितसगुणब्रह्मण्यर्पितस्यैवाविद्यकस्य कर्मणो ध्वंसः, यथा च शुक्तिज्ञानेनैव मिथ्यारजतस्य नाशो न केवलया शुक्त्या तथा ब्रह्मविद्याशबलितेनैवाविद्यातत्कार्यस्य कर्मणश्च ध्वंसो न निर्गुणेन ब्रह्मणेति । अत एव 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबंधनः' इत्युच्यते । यज्ञशब्देन सगुणो विष्णुरेवेति न्यायाम्नायसिद्धोऽर्थः । किंच यदि देवतांतरोद्दिष्टं भगवत्यनर्पितं निष्कामं निर्गुणे चानर्पितं

---

१ छा. ३।१४।१। २ भ. गी. ३।९। ३ भ. गी. ९।२३। ४ भ. गी. १८।४०।

न वंधकमितिचेत् '[1]यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबंधनः' इति वाक्यस्य साधारणत्वोपपादकत्वादिदोषापत्तेर्मूले कुठार इति न्यायेन वाक्यदोषापादकोऽर्थो न मुख्योऽर्थः। अन्यत्र कर्मणां च बंधकत्वराहित्ये 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबंधनः' इत्युक्तमसिद्धम्। तथा सत्यपि यद्येवमाह, तर्हि कथं सर्वज्ञो भगवान्? कथं वा सर्वशास्त्रसंग्रहसारभूता गीता च?। यदि सर्वज्ञो भगवान् यदि च निखिलोपनिषत्सारसंग्रहरूपा गीता तर्हि सगुणविष्ण्वर्पितकर्मनिर्बंध इति सिद्धम्। ननु '[2]ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्' इत्यादिवाक्यैर्निर्गुणब्रह्मार्पणस्य मुक्तिहेतुकत्वमिति चेन्मैवम्। न हि स्रजा तत्प्रकाश्यः सर्पो नश्यति न कर्मणामसतां तदेकप्रकाश्यानां तस्मान्नाश इति वक्तुं शक्यते। निर्गुणस्य निर्धर्मकत्वात्तदर्पणग्रहणवृत्तिरूपज्ञानाभावात् सगुणस्य कल्पवृक्षरूपत्वात् यादृशी भावना तादृशफलत्वात् निर्गुणे कर्मफलध्वंसाभावात् सर्वज्ञोऽपि सगुणो न तत्कर्मफलं ध्वंसयति '[3]ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहम्' इति तेनैवोक्तत्वात्। तस्मात्सगुणब्रह्मार्पणमित्येवार्थस्ततो न विरुद्धम्। एवं न्यायाम्नायसिद्धार्थः श्रीमद्भागवतेऽत्र स्फुटं व्याक्रियते। तदुक्तं द्वादशस्कंधे '[4]नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम्। कुतः पुनः शश्वदभद्रमीश्वरे नचार्पितं कर्म यदप्यकारणम्' इति। नैष्कर्म्यं ज्ञानं चिदचिद्विवेकरूपं अलमत्यर्थं निरंजनं निर्दुष्टं तदप्यच्युतभाववर्जितं न शोभते न सम्यक् साक्षात्काराय कल्पत इत्यर्थः। '[5]क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्' इत्यादिभगवदुक्तत्वात्। तथा च सतीश्वरे सर्वेश्वरे भगवति नार्पितं शश्वदभद्रं निसर्गबंधकरं कर्म कुतः शोभते, कस्माद्वा हेतोः शोभते, न कस्मादपीत्यर्थः। देवतांतराद्यर्पिताद्वा निर्गुणार्पणाद्धेतोर्वा न कुतः शोभते? किंच न च शुष्कं नैष्कर्म्यमीश्वरे न समर्पितं केवलं विधिपरिपालनाय प्रत्यवायपरिहाराय चित्तशुद्धय इति वा संकल्प्य कृतमेतत्सर्वं शुष्कं निष्कामं तदपि न शोभत इत्याह। यदप्यकारणमिति। तथाच द्वितीयस्कंधे। '[6]तपस्विनो दानपरा यशस्विनो मनस्विनो मंत्रविदः सुमंगलाः। क्षेमं न विंदंति विना यदर्पणं तस्मै सुभद्रश्रवसे नमोनमः' इति। एवमेतत् द्वादशस्वपि स्कंधेषु। तस्मादत्र निखिलनिगमसारे श्रुतिस्तुतिप्रकरणे पूर्वश्लोकद्वितीयार्धेन स्पष्टमेव भगवति मनोवचनाचरितं अशेषं कर्म परमर्षयोऽर्पितवंत इत्युक्तम्। अस्मिन्पद्ये भगवत्कथाप्रसंगात् '[7]अंतो देवा अवंतु नः' इत्यशेषवर्गादि-

---

१ भ. गी. ३।९। २ भ. गी. ४।२४। ३ भ. गी. ४।११। ४ भा. १२।१२।५२। ५ भ. गी. १२।५। ६ भा. ग. २।४।१७। ७ ऋ. सं. १।२।७।

श्रुतिभिरर्थतः स एवार्थः स्फुटीकृतः। अथ प्रस्तुतमनुसरति भगवान् श्रुतिकल्पलताकारः। तस्माद्भगवदर्पितकर्मणां भागवतधर्मत्वात् 'अतो धर्माणि धारयन्। विष्णोः कर्माणि पश्यत' इति श्रुत्यापि भगवति सर्वकर्माणि निवेदयंतस्तत्कर्माणि पश्यतेत्येतद्द्वारैव भगवत्कथाश्रवणादिकं विधीयते। ततो न सामान्यतोऽन्यविधिवदयं विधिः मुक्तिफलत्वात्, सामान्यतो विधिप्रोक्तकर्मणां बंधकत्वात्परमो विधिरयमिति सिद्धम्। ननु तथा सति भगवत्यर्पितानि तपांस्याचरन्नेव तत्कथामृताब्ध्यवगाहनमिति कथम्, तत्र कथामृताब्धिमवगाह्य तपांसि जहुरिति विरुद्धमिति न वाच्यम्। अग्निहोत्रादिविधीनामविद्वदधिकारिविषयाणां ज्ञानोत्पत्तेः प्राग्भगवदर्पणतयाचरितानां मोक्षहेतुकत्वात् भगवत्प्रसादेन आत्मज्ञाने जातेऽपि जनकादयो लोकसंग्रहार्थमाचरंत्येव। तदुक्तं भगवता। 'सक्ताः कर्मण्यविद्वांसो यथा कुर्वंति भारत। कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम्' इति। तत्र ये लोकसंग्रहचिकीर्षवस्ते तु ज्ञानिनोऽपि संतः कर्माण्याचरंत्येव। भगवत्यर्पितानां कर्मणां भागवतधर्मत्वात्। केचिल्लोकसंग्रहचिकीर्षारहितास्ते तव सूरयस्तपांसि जहुरित्युक्तं तेषां तदुपयोगराहित्यात्। लोकसंग्रहस्तु लोके विद्यमानानामक्षीणविविधप्रारब्धकर्मणामेवावश्यको न तु त्यक्तलोकधर्माणां लोकसंग्रहस्यावश्यकत्वं ततस्तपांसि जहुरित्यनवद्यमलमित्यादिबहुविस्तरेण। एवं 'अतो देवा अवंतु नः' इति वर्गाद्यनेकश्रुतिभिर्भगवत्कथाश्रवणादिप्रसंगेन त्वदेकसर्वेश्वरत्वमुपाधिसर्वोत्कृष्टत्वद्वारोपपादितम्॥

अवतारप्रसंगात्कथाश्रवणादिविधानात्केवले तदसंभवात्। ननूपाधिकृतसर्वोत्तमत्वे सिद्धेऽपि स्वरूपसाम्यात् भगवदितरदेवतानां चोपास्यत्वं मुख्यमेवेति चेत् 'अतो देवा' इत्याद्युपपादितोपाधिसर्वोत्कृष्टवत्स्वरूपसर्वोत्कृष्टत्वं च श्रुत्यैवोपपाद्यते। 'तद्विष्णोः परमं पदं सदा पश्यंति सूरयः। दिवीव चक्षुराततम्॥ तद्विप्रासो विपन्यवो जागृवांसः समिंधते। विष्णोर्यत्परमं पदम्' इति। सूरयश्चिदचिद्विवेकसंपन्ना हंसा इत्यर्थः। ते तद्विष्णोस्तस्य विष्णोर्यस्त्रीणि पदा विचक्रमे इत्युक्त इति तच्छब्देन पूर्वपरामर्शः। तस्यैव परमं पदं तदुपाधिनिषेधशेषं पश्यंति। यत्र तदाकारपरिणते चित्ते प्रतिबिंबस्य बिंबैक्यं तद्विष्णोरेव पदमित्यर्थः। तदुक्तं भगवता। 'यद्गत्वा न निवर्तंते तद्धाम परमं मम' इति। यच्च 'भर्गो देवस्य धीमहि' इति ध्येयं गायत्र्याप्युपपाद्यते तद्देवस्य भर्गाख्यं विष्णोः परमं पदं सूरयो विवेकिनः सदा पश्यंति ध्यायंतीत्यर्थः। सूरयः पश्यंतीत्यनेन गोपा इति देहेंद्रियादिव्यतिरिक्तात्मज्ञानिनः संबोधिताः। विष्णोः

१ ऋ. सं. १।२।७। २ भ. गी. ३।२५। ३ ऋ. सं. १।२।७। ४ ऋ. सं. १।२।७। ५ भ. गी. १५।६। ६ ऋ. सं. ३।४।१०।

कर्माणि पश्यतेति श्रवणादौ ये नियोजितास्ते भागवता इत्यर्थः। त एवात्र सूरय इति श्रुतिभिः स्तुतिप्रसंगेऽप्युक्तास्तेषु केचित् कथैकनिष्ठाः, केचित् श्रवणादिनिष्ठाः। एतावता सतां जीवन्मुक्तानां ध्येयं परं ब्रह्म तद्विष्णोरेव परमं पदं स्वरूपं नान्येषां ब्रह्मादीनां महदहंकाराभिमानिनां महदादिशरीरोपाधिमतामित्यर्थः प्रतिबिंबात्मत्वात्। तेषां समाधौ तदाकारपरिणते सत्त्वे तदैक्यं न सर्वदा प्रतिबिंबत्वात्। एतच्चोपक्रमे गायत्र्यर्थप्रसंगेनात्र भगवता न्यायाम्नायसिद्धमुपपादितमेव। एतदुत्तरपद्येऽपि 'महदहमादयोऽडमसृजन्यदनुग्रहतः'[1] इत्यत्र श्रुतय उपपादयिष्यंत्यतो ब्रह्मरुद्रादीनां प्रतिबिंबात्मत्वान्निखिलप्रतिबिंबबिंबस्य विष्णुत्वोपाधेः साक्षाद्ब्रह्मैकप्रकाश्यत्वाज्जीवन्मुक्तानां निर्विशेषसमाधौ बुद्ध्याख्यस्य बिंबोपाधेर्यस्मिन्पड्विंशे सर्वगत आत्मनि तदाकारता च तदानीं पंचविंशस्य यस्मिन्नैक्यं तद्विष्णोः परमं पदं न ब्रह्मादीनां स्वरूपं तत्प्रसादैकगम्यमेव न तु विष्णुवदखंडतया तदनुभवैकरूपोपाधित्वं विष्णोः प्रतिबिंबत्वात्तस्य सर्वोत्कृष्टोपाधेर्बिंबात्मनो यन्निर्गुणं परं ब्रह्म तदेकस्वरूपत्वात् 'तद्विष्णोः परमं पदम्'[2] इति श्रुत्याभिधीयते। तथा च ब्रह्माद्वितीयत्वे सर्वेषामेव तत्पदं किं, विष्णोरेव तत्पदमिति चेत् सर्वेषां विष्णुप्रतिबिंबत्वात् सूरयो यत्पश्यंति तद्ब्रह्म बिंबस्य विष्णोरेवात्मेत्याद्युपसंहारे स्पष्टमभिधीयते विष्णोर्यत् परमं पदमिति। यद्यस्मात्परमं यत्तत्तु विष्णोरेव पदं तदुपाधेस्तदखंडानंदानुभवरूपत्वादन्येषां प्रतिबिंबप्रकाश्यत्वात्सगुणं ब्रह्म विष्णोरेकस्यैवेति सिद्धम्। ततस्तत्कथाश्रवणस्य परमश्रेयोरूपत्वादितरतपांसि जहुरिति उपाधिविशिष्टस्य तस्य कर्मश्रवणादिनिष्ठा इतरकर्माणि नाद्रियंत इति 'अतो देवा' इत्यादिश्रुतिभिः सर्वोत्कृष्टतया भगवत्कथाश्रवणस्य सदाचार उक्तः। इदानीं 'तद्विष्णोः परमं पदं सदा पश्यंति सूरयः' इत्यादिस्वरूपसर्वोत्कृष्टपराः श्रुतयोऽपि कथाश्रवणादिनिष्ठा यदा तपांसि जहुस्तदा ये तु तद्विष्णोः परमं पदमेव पश्यंति ते जहुरिति किं वक्तव्यमित्याहुः किमुतेत्युत्तरार्धेन॥

**किमुत पुनः स्वधामविधुताशयकालगुणाः**
**परम भजंति ये पदमजस्रसुखानुभवम्॥ १६॥ (२)॥**

हे परम, भो केवलेत्यर्थः। 'तद्विष्णोः परमं पदम्' इति श्रुतेः परमपदेन संबोधयंति। एतावता तद्विष्णोरिति षष्ठ्या विष्णुत्वोपाधितत्प्रकाशकपरमपदयोर्मायाब्रह्मणोः पृथक्त्वं यत् श्रुत्योपपादितं तदत्रोपाधेर्ब्रह्मणि स्रजि सर्पवन्मायामात्रत्वाद्ब्रह्मैव वस्तु यथा स्रगेव न सर्पं इति न्यायात् सर्पोऽपि स्रगेव,

१ भा. १०।८७।१७। २ ऋ. सं. १।२।७।

ततस्त्वमेव परमं पदमिति तात्पर्यम् । निरुपाधेः स्वरूपभूतोऽनुभव इति सिद्धे सोपाधेरीश्वरस्यैकोऽनुभवः, सोऽप्यजस्रसुखानुभवः । तथा सत्युभयोरनुभवसाम्यान्न निर्गुणसगुणयोर्वैलक्षण्यम् । ननु निर्गुणस्यानुभवस्वरूपत्वे साक्षित्वादिधर्मराहित्यं विशेष इति चेत्तथापि स्वरूपाखंडानुभवाद्वैतं तु सिद्धमनुभवद्वयाभावात् । तस्माद्यस्यानुभवस्तत्सगुणं यस्मिन्ननुभवस्तन्निर्गुणं चक्षुःप्रकाशकं ज्योतिरितिवत्तत्प्रकाशकं द्योतयंत्यः परमेति संबोधयंत्यस्तत्केवलत्वोपासकमहिमानमुपकुर्वंति । भो परम निर्गुण, अजस्रसुखानुभवं पदं ये भजंति ते किमुत पुनरिति । अजस्रमखंडं सर्वदा सुखस्यानुभवो यस्मिंस्तदजस्रसुखानुभवं पदं ये तव सूरय इति पूर्वार्धेनान्वयः । 'परमं पदं सदा पश्यंति सूरयः' इति श्रुतेश्च । अत्र यच्छब्दस्तच्छब्दमपेक्षते किमुत ? । ते किमुत पुनर्वक्तव्यं तपांसि जहुरिति पूर्वार्धेनान्वयः । कथाश्रवणनिष्ठानां तपआद्याचरणे वृत्तिसद्भावेऽपि यदा नाचरंति तदा समाधिनिष्ठा जहुरिति किं चित्रमत्र वक्तव्यमित्यर्थः । अत्राजस्रसुखानुभवमित्यनेन तवाजस्रसुखानुभवं पदमिति सूच्यते । ईश्वरेतराणां जीवन्मुक्तानामखंडानंदानुभवस्य दुर्घटत्वात् । प्रारब्धकर्मणां भोगादेव क्षयः । भोगकाले संप्रज्ञातसमाधिस्थस्यापि सुखदुःखभोगजनितवृत्तिचांचल्यात् किमुतासंप्रज्ञातसमाधिस्थस्य भोगस्य बुद्धिगम्यत्वात् घटाकारायां वृत्तौ घटाकारस्य स्फुरणाभावात्तदानीं दुःखरूपसुखस्य दुःखस्य चासत्त्वात् भोगकाले तदसंभवात् । तस्मादीश्वरस्य तवाजस्रसुखानुभवं पदमिति सिद्धम् । न च निर्विशेषं सुखैकमात्रं सुखानुभवधर्मरूपस्वरूपमिति वक्तुं शक्यं निर्धर्मकत्वात् । तस्मात् चक्षुःप्रकाशकं ज्योतिर्न चक्षुस्तेजोनिरीक्षणवाचकमिति न्यायान्न निर्गुणमनुभवधर्मस्वभावरूपम् । एतावता 'तद्विष्णोः परमं पदं सदा पश्यंति सूरयः' इति श्रुतेश्च सदा विष्णोः परमं पदं सूरयः पश्यंतीत्यन्वयः, न तु सूरयः सदा पश्यंतीत्यर्थो घटते बाधितत्वात्, किंतु विष्णोः सदा अजस्रं परमं पदं सत्यस्वरूपमीश्वरत्वोपाधिप्रकाशकम् । तत्रेश्वरोपाधेः सदा तदनुभवैकरूपत्वात् सदा विष्णोः परमं पदं तस्मान्नान्येषां ब्रह्मादीनां तत्परमं पदं तेषां तदा तदजस्रसुखानुभवराहित्यादभ्यासगम्यत्वात्तेषामुपाधिवृंदस्य प्रतिबिंबकदंबप्रकाश्यत्वात्तदखिलबिंबस्य विष्णोरेव तत्परमं पदं तदुपाधेः केवलब्रह्मैकप्रकाश्यत्वाद्बिंबरूपत्वादिति श्रुत्यनुरूपो वाक्यार्थः । एवं तवाजस्रसुखानुभवं तत्पदं तव भजंतीत्युक्तम् । ते तु न तथा किंतु तेषामभ्यासबलादनुभव इति वदंत्यः कथंभूतास्ते ये तत्पदं भजंतीत्यपेक्षायामाहुः । स्वधामविधुताशयकालगुणा इति । स्वधाम्नि केवले स्वबिंबस्वरूपे विधुता निरस्ता आशयाश्च कालाश्च गुणाश्च यैस्ते तथा । अयमर्थः । स्वधामेत्यनेन स्वस्य प्रतिबिंबात्मनो धाम प्रवेशस्थानं प्रतिबिंबस्य प्रतिसुषुप्तौ प्रलये च

१ ऋ. सं. १।२।७।

बिंबे प्रवेश इति न्यायाम्नायानुभवसिद्धत्वाद्बिंबस्य विष्णोः परमं पदमिति सूच्यते । तस्मिन् विधुता आशयादय इत्यनेन प्रतिबिंबत्वहेतूनां यदा बिंबाकारपरिणामस्तदा बिंबैक्यानुभव इति सूच्यते । सुप्तौ तमसि विलीने सत्त्वे बिंबैक्यं पंकशबलिते कर्दमकलुषीकृते जले प्रतिबिंबादर्शनमिति न्यायात्तदानीं बिंबैक्यं प्रलये सृष्टिक्रमव्युत्क्रमेणाशयादीनां लये बिंबैक्यं तथापि सत्त्वरूपाया बुद्धेरुभयत्रानुभवाभावान्न संसारनिवृत्तिर्न तथात्र, किंत्वाशयादीनां बीजस्य सत्त्वस्य संसारमूलस्यांतःकरणाख्यस्याधिगते षड्विंशे चिदात्मनि यदा तदाकारपरिणामस्तदानीं नाशयाः अंतःकरणचतुष्टयवृत्तिरूपाः, न च काला जाग्रदाद्यवस्थात्रयरूपाः संसारहेतुभूताः । 'सुषुप्तिकाले सकले विलीने'[1] इति श्रुतेः सुषुप्त्याद्यवस्थाः कालशब्देन गृह्यंते । तदानीं विक्षेपाभावात् स्वप्नजागरराहित्याल्लयाभावात्सुषुप्त्यभावादवस्थात्रयातीतशुद्धतुर्यावस्थायामवस्थात्रयभोक्तुरेव निर्विशेषकालरूपत्वात्तुर्याया अवस्थात्वेऽपि न तत्र काल इत्यतो विधुताः काला इत्युच्यते । यस्मिन्नाशयादयो विधुतास्तस्यैव कालरूपत्वात् । 'नासदासीन्नो सदासीत्तदानीं'[2] इति श्रुतेस्तदानीमिति कालवाचकशब्दात्केवलाधिष्ठानस्य सकललयशेषस्यैव निर्विशेषकालरूपत्वात् समाधौ त्रिक्षणरूपाभिर्वृत्तिभिः सविशेषकालस्य लवादिरूपस्याप्रतीयमानत्वाच्च । तदुक्तं । 'न तत्र कालो निमिषांतरः प्रभुः' इति । तथाच विधुता गुणाः सत्त्वस्य तदाकारेण परिणतत्वात् विक्षेपाभावाद्रजोराहित्याल्लयाभावात्तमसोऽप्यभावात् । तथा च सति स्वरूपैकस्फूर्तिं विना न तत्र कापि प्रतीतिरिति भावः । एतादृशोऽनुभवो येषां ते तथा विधुताशयकालगुणाः । एतावता त्विश्वरोपाधे रजस्तमस्पर्शराहित्यादजस्रसुखानुभवो यथा न तथा त्रिगुणोपाधिमतामिति वैलक्षण्यं दर्शितम् । भगवतोऽसाधारणानन्याव्यभिचारिशुद्धसत्त्वैकोपाधित्वात् । तदुक्तं भगवता 'न[3] तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः' इति । तत्सत्त्वं पृथिव्यादिषु न क्वाप्यस्ति तस्मान्मदुपाधिरूपत्वान्मय्येवास्तीत्यर्थः । तदस्य सत्त्वस्य विष्णूपाधित्वात्केवलस्य ब्रह्मणस्तत्प्रकाशकत्वात्तद्विष्णोः परमं पदं नान्येषां ब्रह्मादीनाम् । तस्मादुपाधितो रजआदिमिश्रत्वादवरत्वं स्वरूपतस्तस्य बिंबस्य प्रतिबिंबत्वात् । अतो भागवतधर्म एव श्रेयान्समाधिश्चेति सिद्धांतः । ततस्तस्मिन्निखिलकर्मसमर्पणं तत्कथाश्रवणवर्णनकीर्तनादिकमेव परं श्रेय इति श्रुतिभिः सदाचारेण स्फुटीकृतम् । तदत्र श्रुतिकल्पलताकारेण भगवता न्यायाम्नायसिद्धप्राचीनमुनिवर्यमतसिद्धांतानुसारं व्याकृतमलमतिविस्तरैः ॥ १६ ॥ ( ३ ) ॥

---

१ कैव. १८। २ ऋ. सं. ८।७।१७। ३ भ. गी. १८।४०।

जगदघहृत्कथामृताब्धिमग्नास्त्र्यधिप जहुस्तव सूरयस्तपांसि ।
किमुत परम विनिर्धुताशया ये सततसुखानुभवं पदं भजंति ॥

इति श्रीश्रुतिकल्पलतायां श्रुतिस्तुतिप्रकरणे श्रीमद्भागवतधर्मसदाचारो नाम तृतीयपद्यव्याख्यानाख्योऽष्टमोऽध्यायः ॥

इत्यष्टमोऽध्यायः ॥

---

# नवमोऽध्यायः ।

एवं बृहदुपलब्धमेतदिति श्रुतिस्तुतिद्वितीयपद्यमारभ्य ज्ञानिनो वासुदेवः सर्वमिति भगवदात्मकं जगदवलोकयंतः स्वमनोवचनाचरितं भगवति समर्पयंतस्तदखिललोकपावनचरितश्रवणवर्णनकीर्तनपरा इति केचित् । केचिन्निवृत्तवृत्तिप्रवाहलयविक्षेपशून्यचेतसः सततसमाधिनिष्ठा इति द्विविधा अपि तपांसि जहुरित्युपपादनेन भगवदनुग्रहैकगम्ये निजात्मतत्त्वेऽधिगते तु तदितरधर्मत्यागेन तद्धर्मावलंबनेन तद्भजनमेवात्यंतिकं श्रेय इति सदाचारेण श्रुतिभिः स्फुटीकृतम् । अथ काश्चिज्ज्ञानविहीनान् शोचंत्यः काश्चिदज्ञानस्य भगवद्भजनफलत्वमुपपादयंत्यः काश्चित्तत्त्वविचारेण ज्ञानस्य भगवद्वाक्यैकगम्यत्वं प्रतिपादयंत्यस्तदितरदेवताकदंबस्य तत्प्रतिबिंबत्वान्न मुक्तिप्रदत्वं घटत इति भगवतः सर्वोत्कर्षं वर्णयंत्यः स्तुवंति—

दृतय इव श्वसंत्यसुभृतो यदि तेऽनुविधा
महदहमादयोऽण्डमसृजन्यदनुग्रहतः ।
पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः
सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥ १७ ॥ (४) ॥

असुभृतः प्राणाद्युपाधिमात्मतया धारयंतीति तथा देहात्ममानिन इत्यर्थः । इंद्रियपोषणपरा इति वा । तेऽपि त एव देहात्ममानित्वात् दृतय इव श्वसंति । दृतयो भस्त्रास्तद्वद्वृथा श्वसंतीत्यर्थः । ज्ञानैकहेतुभूतनृजन्मजीवितवैयर्थ्यात् मृतपशुचर्मभस्त्रा इव तेषां देहस्तद्वायुवत्तन्निःश्वासाश्च निःसरंतीति वस्तुतो मृततुल्या इति भावः । 'पुरुषत्वे चाविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं संपन्नतमोऽथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानम्'

इति श्रुतेरात्मज्ञानसाधनैकनृदेहनैष्फल्यादशनापिपासादिपशुत्वसाधारणधर्माः वृथा जीवंतीत्यादिश्रुतयश्चेति वदंत्यो **'यो वा[1] एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणः'** इत्याद्याः श्रुतयस्तान् शोचंतीति द्रष्टव्यम् । अथैतन्नैष्फल्यं भगवद्दास्याभावादिति, तत्सद्भावे तु ब्रह्मात्मबोधैकफलं भगवत्कैंकर्यमिति तत्त्वरीत्या साधयंत्यो **'ब्रह्मविदाप्नोति परं'**[2] इत्यादि, **'ब्रह्मपुच्छं प्रतिष्ठा'**[3] इत्याद्यंतं ब्रह्मवल्ल्याख्यतैत्तिरीयोपनिषत्पुरःसराः श्रुतयो भगवदुत्कर्षं स्फुटं व्याकुर्वंति । यदि तेऽनुविधाः पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः सदसतः परं त्वमथ यदेष्ववशेषमृतमिति । अत्र अन्नमयादिषु पुरुषविधोऽन्वयः तत्र यश्चरमं सत्वं स इति तच्छब्दो यच्छब्दात् गृह्यते। यदि तेऽनुविधा अथ सदसतः परं यदेष्ववशेषमृतमिति पदानामन्वयक्रमेणार्थः । अत्रान्नमयादिषु कोशेषु व्यष्टिसमष्टिरूपेषु पुरुषविधोऽन्वयः प्रतिकोशेषु पुरुषस्योपाधेर्विधा प्रकारः पुरुषविधस्तं पुरुषविधमन्वेतीत्यन्वयः । कोशानुरूप आत्मनस्तत्र तत्र तथातथा स्फुरणरूपोऽन्वय इत्यर्थः । **'स[4] वा एष पुरुषविध एव । तस्य पुरुषविधतां अन्वयं पुरुषविधः'** इति श्रुतेश्चायमर्थः–स वा इति तच्छब्देन पूर्वपरामर्शः । **'तस्माद्वा एतस्मादन्योऽतर[5] आत्मा प्राणमयः'** इत्यादि प्रतिकोशं स इति परामृश्यते । स वा एष पुरुषविध एव स पूर्वकोशः एषोऽयं प्रस्तुतोऽपि पुरुषविध उपाधिप्रकार एव । यथा स उपाधिरन्नमयादिस्तथैवायं प्राणमयादिश्चोपाधिरेव नात्मेत्यर्थः । अन्योंऽतर आत्मा प्राणमय इत्याद्युक्तत्वान्नायमात्मा किंतु उपाधिरेवेति तात्पर्यं । तस्माद्वा एतस्मादित्युक्तत्वात् तस्मात्पूर्वस्मादेतस्माच्चिदात्मनः तस्मादुपाधिरिति सिद्धं । तदुक्तं भगवता । **'द्वाविमौ[6] पुरुषौ लोके क्षरश्चाक्षर एव च'** इत्युपाधेश्च पुरुषत्वाभिधानात् । तस्य पुरुषविधतामुपाधिप्रकारतामन्वयं पुरुषविधः । अन्वनुरूपः अयं पुरुषविधः चित्स्वरूपस्य पुरुषस्य विध इव विधः । घटादिष्वाकाशस्येव वस्तुतस्त्वविध एवेत्यर्थः । निर्विकारित्वात् । एवमेव श्रुत्यनुरूपोऽत्रान्नमयादिषु पुरुषविधोऽन्वयः । तत्र यश्चरमः पुरुषविधोऽन्वय आनंदमयः स त्वं समष्ट्यानंदकोशोपाधिमूर्तिस्त्वमेवेत्यर्थः । अखिलात्मत्वान्नित्यनिजानंदानुभवस्वरूपत्वात् । ततः किमत आहुः । यदि तेऽनुविधाः अनुविदधतीत्यनुविधाः अनुवर्तिनो दासाः दृतय इव श्वसंतीत्युक्ताः तव दास्यविहीनाः, यदि त एव तव दास्यं गता भवेयुरित्यर्थोऽत्र यदीति पदेन सूच्यते । आनंदमयोपाधेस्तव दास्यफलं तु तदुपाधेरनंतरं यच्छुद्धं निरुपाधि तव स्वरूपं तत्त्वं तदेवेत्याहुः ।

---

१ बृ. ८।८।१०। २ तै. २।१।१। ३ तै. २।५। ४ बृ. २।२।१। ५ तै. २।१। ६ भ. गी. १५।१६।

अथ सदसतः परं यदेष्ववशेषमृतमिति । अथानंतरमानंदमयान्वयानंतरं तु सदसतः परं सतः कार्यादसतः कारणात् प्रकृतेः परं, यद्वा सतः पंचविंशात् प्रतिबिंबादसतस्तदुपाधेः परमित्यर्थः । 'संतो बंधुमसति निरविंदन्' इति श्रुतिः । 'असद्वा इदमग्र आसीत्ततो वै सदजायत', 'तदात्मानं स्वयमकुरुत' इति श्रुतेः । एवं सदसतः परं परतः स्थितं यत् एषु आनंदमयांतेषु अवशेषं ऋतं सत्यं 'ब्रह्मपुच्छं प्रतिष्ठा' इति श्रुतेरानंदमयस्यापि पुच्छत्वेन यदुपपाद्यते तत्केवलं मिथ्योपाधिसमन्वयधर्मशून्यत्वात् । एवमेष्ववशेषं यत्तव तत्त्वं यदि तेऽनुविधाः तेषां तु तदेव फलमित्यर्थः । यत्तदोर्नित्यसंबंधात्तर्हीति तदिति शब्दयोर्ग्रहणम् । अयमभिप्रायः । 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्' इति श्रुतेः । यमेव पुरुषं एष आत्मा निखिलात्मा वृणुतेऽनुगृह्णाति तेनैव लभ्यस्तदुपाधिना विद्याख्येन स एव केवलो लभ्यः निरस्तोपाधिना ज्ञातुं शक्य इत्यर्थः । नान्यैः । कुतः? तस्यैष आत्मा स्वां तनुं विद्याख्यां दधाति समष्ट्यानंदमयोपाधेस्तन्वा विद्यया यद्विद्याविद्योपाधिद्वयात्परं पुच्छत्वेनावशिष्टं निरुपाधि तदनुभवगम्यं भवतीति श्रुतेरर्थः । एवमीश्वरप्रसादैकगम्यं तत्त्वं तदपीश्वरोपाधिनैवेति वृणुते तनुं स्वामित्यादि । 'उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश'इत्यादिनिखिलश्रुतिसिद्धत्वात् तत्त्वत एव भगवदुपाधिनैव भगवत्प्रसादगम्यं तत्त्वं न केवलं पारमेश्वरं गौरवमात्रं किंतु द्वारं विना न गृहप्रवेश इति न्यायेन चरमकोश एव केवलापरोक्षसाक्षात्कारस्तस्य कोशस्य विद्यैकमात्रत्वात्तस्याश्चेश्वरस्य नित्यानंदानुभवोपाधिरूपत्वात् क्रमेणान्नादिकोशनिरासेन यदानंदमयं प्राप्नोति तत्र । 'यतो वाचो निवर्तंते अप्राप्य मनसा सह । आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' इति श्रुतिसिद्धं ब्रह्मसाक्षात्कारं लभते तदीश्वरस्य विद्योपाधिनैवेति सिद्धम् । तस्माद्ये तवानुविधाः स्युस्त एव तव विद्योपाधिना त्वन्निरुपाधि तत्त्वं विदुः, तच्च तत्त्वं आनंदमयकोशगम्यं, स चानंदमयकोशस्तव शरीरमित्यलमतिविस्तरैः ।

प्रकृतमनुसरति भगवान् श्रुतिकल्पलताकारः । ननु ब्रह्मादीनां मदभेदत्वात्तत्तदनुविधानां च तत्तत्प्रसादात्स्यादेव तत्त्वप्राप्तिस्तथा सति केन विशेषेण ममैवानुविधानां तत्त्वसिद्धिरित्युच्यत इति चेद्यथा तत्त्वरीत्या तवेश्वरस्य प्रसादादेव तत्त्वसिद्धिरित्युपपादितम्, तथैव तत्त्वतस्त्वमेकः सर्वेश्वरः ईश्वरोपाधिमत्त्वात् त्वमेव पूर्वपद्ये प्रसंगादुक्तपरमपदत्वादितरोपाधिशबलितानां त्वत्प्रतिबिंबत्वादित्यपि प्रतिपादयाम इत्याशयेनाहुः । महदहमादयोऽडमसृजन्यदनुग्रहत इति ।

१ ऋ. सं. ८।७।१०। २ तै. २।७। ३ तै. २।५। ४ मुं. ३।२।३। ५ तै. २।४।१।

महान् महत्तत्त्वं तदात्मा ब्रह्मा । अहं अहंकारस्तदात्मा रुद्रः । तदादयस्त्रिविधाहंकारसमुद्भूताशेषतत्त्वाभिमानिनो देवास्तत्तत्त्वदेहा इत्यर्थः । एते यदनुग्रहतो यस्य तवानुप्रवेशेनेत्यर्थः । अंडं व्यष्टिसमष्टिरूपं असृजन्निर्मितवंतः । प्रथमप्रादुर्भूतप्रधानतत्त्वोपाधेस्तवानुप्रवेशेन क्रमेणोत्पन्नानि महदादीनि तत्त्वानि त्वत्प्रतिबिंबैः सचेतनानि भूत्वा ब्रह्मादिरूपेणाविर्भूयांडं सृष्टवंत इत्यर्थः । अव्यक्तात् महान् महतोऽहंकारादीनि इति प्रसिद्धम् । तत्र महदादिषु प्रविष्टस्ततः पूर्वसिद्धस्त्वं । 'यत्पूर्वं[1] तपसो जातमद्भ्यः पूर्वमजायत । गुहां प्रविश्य तिष्ठंतं यद्भूतेभिर्विपश्यता' इति श्रुतेः । ततस्तु महदादीन् सृष्ट्वा 'तत्सृष्ट्वा[2] तदेवानुप्राविशत्' इति श्रुतेः यत्सृज्यं तत्सृष्ट्वा यत्सृष्टं तदेवानुप्राविशत् तस्मिंस्तस्मिन्ननुक्रमेणैव प्रकर्षेण चिद्रूपेणाविशदित्यर्थः । यत्तदोर्नित्यसंबंधात् तच्छब्दद्वयादेवकाराच्च । अनुप्रशब्दाभ्यां च श्रुत्यायमर्थः सूच्यते । अन्यथा सृष्ट्वा प्राविशदितिमात्रेण प्रवेशचारितार्थ्यात्तदादिशब्दानामप्रयोजकत्वादयमेव स्वरसोऽर्थः । मुख्ये सति गौणस्यान्याय्यत्वात् नान्योऽर्थः शोभनः । चित्प्रवेशं विना महदादेः शवतुल्यत्वात् तदुत्तरतत्त्वस्य शवादिव शवस्योत्पत्तेरसंभवादेवमर्थो व्याक्रियते । सा भृगुवरुणयोः शिष्याचार्ययोर्नाम्ना विख्यातेयं ब्रह्मविद्या । यथाच भृगुः 'अन्नं[3] ब्रह्मेति व्यजानात्' ततः प्राणाद्यानंदपर्यंतमधिगम्य क्रमेण कृतकृत्यो बभूव तेनैवानुक्रमेण ब्रह्मवल्ल्युपनिषद्यन्नादिकोशशिरःपक्षादिभिस्तस्या एव विद्याया उपपादितत्वादत्रोपपादितक्रमेण भृगुणाऽधिगतत्वादियमेव भार्गवी वारुणी विद्यात्र श्रुतिभिः स्फुटीकृता । या च भगवताऽनाद्यादिगुरुणा परमहंसरूपेण श्रीसच्चिदानंदनाम्नाऽविर्भूयानन्यशरणे मय्युपदिष्टा स एवेदानीं व्याकरोति भगवान् श्रुतिकल्पलताकारः । 'तस्माद्वा[4] एतस्मादात्मन आकाशः संभूतः' इत्यादि 'पृथिव्या ओषधयः । ओषधीभ्योऽन्नं...स वा एष पुरुषोऽन्नरसमयः' इत्यंतमन्नमयकोशमुपदेष्टुं सृष्टिक्रमो निरूपितस्तदग्रे व्याकरिष्यति । प्रस्तुतमन्नमयकोशमुपदिशति 'स वा एष पुरुषोऽन्नरसमय' इति । स इति तच्छब्देन पूर्वपरामर्शः । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्युक्त आत्मा स वा एषः । स एवायमित्यर्थः । 'असंगो[5] ह्ययं पुरुषः' इति श्रुतेः । एषोऽयमात्मत्वेन प्रतीयमानो यस्त्वहंप्रत्ययं पुरस्कृत्य स एवाहमिति न वेद तदर्थमारभ्यतेऽयमुपदेश इति तात्पर्यम् । स एवायमन्नरसमयः शुक्रशोणितप्रचुरो घटाद्युपाधिप्रचुर आकाश इवेत्यर्थः । किंतु अविद्यया तिरोहितविद्यैश्वर्य आत्मानं न वेद । ततस्तु तमुपाधेः पृथग्गंतुं

---

१ कांठ. ४।६। २ तै. २।६।१। ३ तै. ३।२।१। ४ तै. २।१।
५ बृ. ४।३।१५।

तस्यैव वेद्यत्वं स्फुटयितुं तत्प्रतीतिमेवांगीकृत्य सर्वं ब्रह्मेति सिद्धमनुसृत्य शिष्यमुपदिशति 'तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा' इति । तस्यान्नरसमयस्य । मयट् प्राचुर्ये । अन्नरसप्रचुरस्य आत्मन इदमेव शिरः यत्कंठादूर्ध्वमन्नरसप्राचुर्यात् । अयं दक्षिणः पक्षः दक्षिणबाहुः तथैवोत्तरश्च अन्नरसप्राचुर्यात् । अयमात्मा अयं देह एवास्य आत्मा आत्मत्वेन प्रतीयमानत्वात्, अहं गौरः श्याम इत्यादि । यथाच भृगुरप्यन्नं ब्रह्मेति व्यजानात् । ननु किं श्रुत्यात्र चार्वाकमतं श्रौतीक्रियत इति चेन्न । प्रत्यक्षमेकं चार्वाका मन्यंते न ते तदन्यत्प्रमाणमंगीकुर्वंति । अत्र श्रुत्युपपाद्यत्वान्न चार्वाकमतम् । न चायमात्मा जडत्वात् । किं तु वेद्यस्त्वहमेवात्मा योऽहं देह इति प्रतीतिमानस्मीति शिष्यस्य ज्ञेयज्ञातृत्वद्वैतनिरासाय तत्प्रतीतिमंगीकृत्यैवोपदिश्यते । ननु तर्हि श्रुतेरतत्त्वावेदकत्वं प्राप्तमिति चेन्न । 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः, गुण एव फणिरिति न्यायाच्च । ननु तर्हि अलं ब्रह्मज्ञानप्रयासैरिति चेद् दुःखनिवृत्त्यभावात्केवलतत्त्वज्ञानप्रयास इष्ट इत्येव तदन्यथा दुःखाद्यशेषं च ब्रह्मैव तत एवायमात्मेत्युपदेशादहमेव वेद्य इति सिद्धे दुःखमुक्तये पुनरत्रैवान्नमयकोशे चरमे कोशांगे तदनात्म्यं च ततोऽन्यमात्मत्वं च यथा तस्य प्रतीतिगोचरं स्यात्तथोपदिश्यते 'इदं पुच्छं प्रतिष्ठे'ति । अस्यान्नरसमयस्येदमेव तत्रास्य लांगूलाभावादयं देह एव पुच्छमिति व्याख्येयत्वे प्राप्ते पक्षिपुच्छस्याप्रयोजकत्वान्मरणादूर्ध्वमवशिष्यतेऽयं देहस्तत्पुच्छं तच्चरमावस्था चरमांगत्वेनोत्प्रेक्षितेत्यर्थः । तच्चोपदेशकाले तस्मिन्जीवति सत्यपि तदेव तत्पुच्छमित्युपदिष्टत्वादधुनैव शवमिदमित्युपदिष्टमित्यधिगंतव्यम् । यतस्तस्यान्नरसमयस्य प्रतिष्ठा चान्नरसमय एव, मरणादूर्ध्वं च तदेव स्थास्यति तथैवाधुनापि शश्वन्मृतकत्वेनैव प्रकर्षेण तिष्ठतीति सावस्थितिः प्रतिष्ठा । किंच श्रुतेः सूत्रप्रायत्वादयमर्थः सूच्यते । अयमात्मेत्यंगीकृतत्वादहमित्याद्यशेषवृत्तिप्रत्यया ये ज्ञानरूपास्ते देहस्यैव, स च देह एवाहमिति जानन् योऽसौ स्थितस्तेन लोके मृतशरीराणां च दृष्टत्वात्तेषु जीवत्स्वहं देहो मदन्येऽन्ये देहा इमे इत्यादिस्थिता ये प्रत्ययास्तेषामदर्शनादस्य देहस्येदमेव पुच्छं अंतेऽप्यस्यैव विद्यमानत्वादिति श्रवणात्तदानीमहमित्यादिप्रतीतिमतो ममादर्शनमप्येवमेवास्मिन्देहे मया त्वधुनैव चिंत्यते । तस्मादहमादिप्रत्यया नास्य देहस्य किंतु कस्यचिदन्यस्य सोऽस्मादन्नरसमयादन्य इति शिष्यस्य कृतोऽत्रोपदेशस्ततोऽन्नरसमयोऽयमुपाधिर्जड इति शिष्येणाधिगतत्वात् चिज्जडविवेकेनाधिगम्यात्मेत्यपि

१ तै. २।५। २ छा. ३।१४।१।

च ज्ञातत्वात् स चात्मा स्वयमहमेवेति बोधो जात आद्ये कोशेऽस्मिन्नित्यधिगंतव्यम् ॥

इति श्रीश्रुतिकल्पलतायां श्रुतिस्तुतिप्रकरणे चतुर्थश्लोकव्याख्यायां भार्गवीवारुणीविद्यायामन्नमयकोशो नाम नवमोऽध्यायः ॥ ९ ॥

॥ इति नवमोऽध्यायः ॥

---

# दशमोऽध्यायः।

अथ शिष्यप्रतीत्यैव जडो देहोऽप्यात्मेत्यंगीकृत्य पुच्छत्वोपदेशान्नायमात्मेति प्रतीतिं विपर्यीकृत्य देहात्पृथगात्मेति कृतो बोधस्तथैवाधुना तत्प्रतीत्यैव यत्रात्मत्वं प्राप्तुमर्हति तमात्मत्वेनांगीकृत्य चिदचिद्विवेकपूर्वको द्वितीयकोश उपदिश्यते **'तस्माद्वा एतस्मादन्योऽतर आत्मा प्राणमय'** इत्यादि। तस्मादन्नमयादेतस्मात्केवलाच्चिदात्मनः अन्योंऽतर आत्मा आत्मत्वेन प्रतीयमानः प्राणमयः प्राणप्रचुरः प्राणोपाधिरात्मेत्यर्थः। अयं प्राणान्वय एव न केवल आत्मा प्राणेऽप्यात्मनोऽन्वयात्। अत्र तस्मादन्य इत्यनेन शिष्यप्रतीतिः, मृतके प्राणाभावाद्देहो ज्ञातं मया प्राण एव आत्मेत्येवम्। न च वाच्यं **'अन्नमयप्राणमयमनोमयविज्ञानमयानंदमयाश्च मे शुध्यंताम्'** इति श्रुतेरानंदमयो जीवकोश इति। एते मे शुध्यंतां नाम पंचकोशावशेषं ब्रह्म पुच्छं तदात्मनस्तत्त्वं तदविद्याविद्योपाधिद्वयमुक्तम्। तत्रान्नप्राणमयौ द्वावपि जीवकोशावविद्यामयौ च मनोमयविद्यामयौ च विज्ञानानंदमयौ च। एते सर्वेऽपि शुध्यंतां तद्व्यतिरेके पुच्छत्वेन विहितं तदेव चावशिष्यतामित्यर्थः। अत्रेत्थं क्रमः। अन्नमयकोशे पंचभूतमात्रनिषेधः स्थूलोपाधित्वात्। तत्र **'अयमात्मे'**ति श्रुतेः शिष्यप्रतीतिमंगीकृत्य चिदात्मनः स्थूलान्वयात् **'सर्वं खल्विदं ब्रह्मे'**ति सिद्धांतमनुसृत्य **'अन्नं ब्रह्मेति व्यजानादि'**ति श्रुतेः भृगुणा चानुभूतत्वात्स एवात्मेत्युक्त्वा **'तस्माद्वा एतस्मादन्योऽतर आत्मा प्राणमयः'** इत्यत्र तदनात्म्यं स्फुटीकृत्य **'तस्माद्वा एतस्मादन्योऽतर आत्मा मनोमयः'** इत्यत्र प्राणमयात्मत्वं च निरस्तं। तत्र लिंगदेहस्य प्राणप्राचुर्याद्दशेंद्रियाणि तन्मात्रा मनश्चेति प्राणमये निरस्तमपि मनसोंऽतःकरणवृत्तिरूपत्वाच्चित्तबुद्धिमनोऽहंकार इत्यंतःकरणस्य भेदचतुष्टयत्ववन्मयोमयकोशं पृथक्कृत्य तत्रांतःकरणप्रकाशकस्य चिदात्मनोऽधिगम इति श्रुत्यात्र सूच्यते।

---

१ तै. २।१।१। २ महाना. २०।१५। ३ बृ. २।५।१९। ४ छा. ३।१४।१। ५ तै. ३।२।१। ६ तै. २।२।१।

'तस्य[1] यजुरेव शिरः । ऋक् दक्षिणः पक्षः । सामोत्तरः पक्षः' इति 'आदेश आत्मेति । अथर्वांगिरसः पुच्छं प्रतिष्ठा' इत्यन्नादिकोशान्वय-व्यतिरेकरूपाया विद्यायाः साकल्येनात्र विहितत्वात् 'अन्नं[2] ब्रह्मेति व्यजानात्' इत्यादि भृगुणा वरुणादनेनैव क्रमेण तत्त्वस्याधिगतत्वात् 'सैषा[3] भार्गवी वारुणी विद्या परमे व्योमन्प्रतिष्ठिता' इति श्रुत्यात्र अस्या ब्रह्मविद्याया एवो-रीकृतत्वादस्य कोशस्य यजुरेव शिरः प्रधानांगमित्यर्थः सूत्रितः। अत्र 'तस्मा[4]-द्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिसृष्टिक्रमेणान्नादिकोशान्वयव्यति-रेकेण मनोमयकोशे चिदचिद्विवेकज्ञाने सिद्धे श्रवणद्वारा यजुर्वेदनिषेधशेषचिदा-त्मन्यधिगते ऋग्वेदे 'नासदासीन्नो[5] सदासीत्' इत्यादिलयशेषस्यावशिष्टस्य केवलनिर्विशेषतया कुंडलादिविकृतिविहीनस्य कनकस्य तत्कारणत्वमिव ब्रह्मणो जगत्कारणत्वमुपपाद्यते । तथाच 'को[6] अद्धा वेद क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टिः' इति जगज्जन्मादिरूपाया विकृतेरहरहः सूर्यकिरणेषु मृषा-सलिलवदुद्भव इत्यादिज्ञानसाधनानामुपपादितत्वात् दक्षिणपक्ष ऋग्वेदः । यजु-र्वेदेऽत्र मनोमयकोशे जडांशनिषेधपूर्वकस्य चिदात्मनः श्रवणानंतरं ऋक्साम-वेदयोर्मननसाधनत्वं सूच्यते । एतद्वेदद्वयस्य सृष्टिसंहारमननहेतुकत्वमभिधाय साम्नः स्थितिकाले ब्रह्माद्वैतज्ञानसाधनत्वं विधत्ते सामोत्तरः पक्ष इति । तत्र 'स[7] आत्मा तत्त्वमसि' इत्यादिजीवेश्वरयोरैक्याभिधानात् तयोः प्रलये ब्रह्मणि निरुपाधावप्रतीयमानत्वात् सृष्टिकाले जीवेशयोराविर्भाव एव विधीयते । तत्र सृष्टिक्रमेण द्वैतमेवोपपाद्यते, तथाप्युपदेशक्रमेण तयोरैक्यस्योपपादितत्वात्, तत्त्व-मसीति नवकृत्व उपदेशादुपाधिनिषेधेन स्वरूपैक्यस्योपपादितत्वात् । ततो जीवे-शोपाधिनिरासे ज्ञातेऽपि ब्रह्मणि ब्रह्मैकमात्रं जगदित्यधिगतेऽपि प्रपंचस्तु दृश्यत एव । चक्षुषा मृदेकमात्रे घटेऽधिगतेऽपि करनिर्मितो घटः करकृतध्वंसमपेक्षते न तावदाद्यंतयोरविद्यमाना घटविकृतिर्विलीना भवतीति न्यायेन कालकृतप्रपंचा-काराद्यंतयोरविद्यमानोऽपि संप्रति ब्रह्मैकरूपोऽपि विकारनामधेयाभ्यां वाचारंभणक-मात्रोऽपि तत्त्वतो ज्ञातोऽपि कालकृतध्वंसमपेक्षते । ततः साम्नि प्रपंचाकारत्वेऽपि नास्त्येव प्रपंचः, किंतु तस्य मिथ्याविकृतिरूपत्वात् ब्रह्मैवेदं सर्वं तच्चाविकृतं सत्यमि-त्युपपादितत्वात् स्थितिकालाद्वैतज्ञानोपयोगित्वात् 'सामोत्तरः पक्षः' इति सूत्रितम्। तथा च श्रुतयः । 'यथा[8] सोम्यैकेन मृत्पिंडेन विज्ञातेन सर्वं मृन्मयं विज्ञातं भवति वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' । 'यथैकेन[9] लोह-

१ तै. २।५। २ तै. ३।२।१। ३ तै. ३।६। ४ तै. २।१। ५ ऋ. सं. ८।७।१७। ६ ऋ. सं. ८।७।१७। ७ तै. २।३।१। ८ छा. ६।१।४। ९ छा. ६।१।५।

मणिना सर्वं लोहमयं विज्ञातं स्यात्'। 'यथैकेन नखनिकृंतनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्' इत्यादिद्रव्यविकल्पानां तत्तद्द्रव्यैक्यमात्रत्वेऽपि तत्त्वतस्तस्मिन्विज्ञातेऽपि विकृतेर्यथावद्दृश्यमानत्वेऽपि द्रव्यैक्यवत्सर्वं ब्रह्मेत्यधिगते यद्यपि प्रपंचो दृश्यत एव तथापि ब्रह्मैवेत्यर्थः। एवमेव 'यथा मधु मधुकृतो निस्तिष्ठंति' इत्यादि सुपुप्त्याद्यवस्थास्वद्वैततत्त्वाभिधानात्। एवं यजुषस्तत्त्वाधिगमश्च सृष्टिकाले द्वैताभासस्य जगत उद्भवोऽप्यद्वैततयैव तदुद्भवो न तत्र भेदः कश्चन वास्तविक इति सिद्धम्। ततः प्रागप्येवमेव दैनंदिनलयादाविव कारणानि स्थितानीति संशयो माभूदिति ऋग्वेदेन तन्निरस्तम्। स्थितिकाले ज्ञानानंतरमपि प्रपंचो दृश्यते तथाप्यद्वैतमेवेति त्रिभिरेव तत्त्वस्य मननरीत्या साधयितुं वेदत्रयमंगत्रयमुपपादयतीत्यादि यजुरादिलिंगानामन्योन्यव्यभिचारोऽपि दृश्यते, तथाप्युक्तलिंगानां साकल्यादिदमंगत्रयं श्रुतिर्विधत्त इत्यधिगंतव्यम्।

ननु 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इत्यादिश्रुतिसिद्धं गुर्वेकगम्यं तत्त्वम्, तथासति किमित्युच्यते–यजुरादिवेदैस्तज्ज्ञानोपायो विधीयत इति? सत्यम्, अत्रोपक्रमे 'ब्रह्मविदाप्नोति परम्। तदेषाऽभ्युक्ता' इति श्रुतेः ब्रह्मविदा ब्रह्मजानता तत्साक्षात्कारसंपन्नेन गुरुणा हेतुभूतेन परमाप्नोतीति विहितत्वात् सर्वत्रात्र गुरुक्रमेणैवेत्यधिगंतव्यम्। नच वाच्यं 'ब्रह्मविदाप्नोति परं' इति 'आचार्यवान्पुरुषो वेद' इतिवत्तटस्थरीत्या तत्त्वस्य गुर्वेकवेद्यत्वमुपपद्यत इति, 'तदेषाऽभ्युक्ता' इति श्रुत्या प्रतिश्रुतत्वात्। ब्रह्मविदा कथं परमाप्नोतीत्यपेक्षायां तत् तदेव एषा हि उपनिषत् अभि सर्वत्र उक्तेति प्रस्तुत्य 'सत्यं ज्ञानमनंतं' इत्यारब्धोऽत्र गुरूपदेशक्रमः। अत्र ब्रह्मविद् इति पदच्छेदेन आर्या एवं व्याकुर्वंति तन्न घटते। ब्रह्मसाक्षात्कारे स्वयमेव ब्रह्म यः सोऽपि ब्रह्मविच्चेत् परमाप्नोति तर्हि प्रबुद्धः प्रबोधमाप्नोतीति सिद्धं स्यात्। तस्मान्नायमर्थः। यद्यपि बहुप्रयत्नैरिममर्थं साधयंति, तथापि मुख्ये सति गौणस्यान्याय्यत्वादयमेवार्थः। 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इत्यादिश्रुतेस्तत्त्वस्य गुर्वीश्वरयोरभेदेनोपासितयोरनुग्रहैकगम्यत्वादत्र तृतीयाविभक्त्यर्थेन गुरुहेतुकत्वमुक्त्वा 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इति सगुणसर्वज्ञहेतुकत्वमुपपाद्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्याद्युपदेशक्रमस्यारब्धत्वात्। ननु श्रुतिवर्णितगुरूपदेशेन यदि तत्त्वार्थसिद्धिस्तर्हि 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति नियमो न स्यादिति चेत्सत्यम्। 'ब्रह्मविदाप्नोति

१ छा. ६।१।६। २ गर्भ. ६।१।१। ३ मु. २।१२। ४ तै. २।१।१। ५ छा. ६।१४।२। ६ तै. २।१। ७ तै. २।१। ८ तै. २।१। ९ मु. २।१२। १० तै. २।१।१।

परम्' इति श्रुतेश्चेदमेव तात्पर्यं, किंतूद्दालकयाज्ञवल्क्यप्रभृतिभिः श्वेतकेतुमुखेभ्य उपदिष्टं तत्त्वम् । तत्रान्वयव्यतिरेकस्य साकल्याभावेऽपि तेषां प्रौढत्वात् शिष्याणां तत्त्वावगमो जातोऽपि न सर्वसाधारणोपदेशसुगमास्ते क्रमास्ततोऽत्र प्रकृतभागस्य पंचकोशविभागेनान्वयव्यतिरेकसाकल्येन गुरुणैवमुपदेश्याः शिष्या इत्यत आत्मज्ञानसाधनतमत्वात् 'यजुरेव शिरः' इति तदंगभूतावृक्सामवेदाविति च प्रतिपाद्य तत्किं वेदोक्तगुरूपदेशेनैव तत्त्वसिद्धिरित्यपेक्षायां जीवात्मानं विना यथा शिरआद्यंगानि तथा साक्षाद्गुरूपदेशं विना यजुरादयस्तत्सद्भावे यथांगानां साकल्यं, तथात्र गुर्वादेशेन वेदानां सार्थक्यमिति सूच्यते 'आदेश आत्मा' इति । आदेश उपदेशः सोऽस्य कोशस्यात्मेत्यर्थः । अस्मिन्नेव कोशे निरस्तोपाधेश्चिदात्मन उपाधिगम्यत्वात् । 'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषामनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवंति' इति श्रुतेः । न संदृशे तिष्ठति रूपमस्येति दृष्टिगोचरत्वनिषेधे कृतेऽपि 'न चक्षुषा पश्यति कश्चनैनमि'ति पुनरुक्तिपरिहारेऽपि देहद्वयगोचरत्वनिषेधोऽधिगम्यते । न संदृशे तिष्ठति न स्थूलशरीरदृष्टिविषयं भवतीत्यर्थः । स्थूलदेहदृष्टेः यदृच्छया दृष्टिपथं गतस्य दर्शनोपपत्तेर्न संदृशे तिष्ठतीत्युक्तं तन्निषिध्यते । चक्षुषा पश्यति घटादिविकृतिवन्मनोमयलिंगदेहचक्षुषा मनसि किमपि रूपं कल्पयित्वा कश्चन कोऽपि तं केवलं न पश्यतीत्यर्थः । एतावता त्वन्नप्राणमयकोशयोरात्मा ज्ञातुं न शक्य इति सिद्धम् । स्थूलस्यान्नमयत्वाल्लिंगस्य प्राणप्राचुर्यात् । अथ मनोमये साक्षात्कारत्वं विधत्ते । 'हृदा मनीषामनसाभिक्लृप्त' इति । हृत् मनस्तेन मनसाऽभिक्लृप्तः । ननु मनः सर्वेषामस्ति किमिति मनोमयकोशेनात्मानं पश्यंतीत्यपेक्षायां गुरुशास्त्रसंस्कृतमनसैवाभिक्लृप्त इति विधत्ते । मनीषामनसेति द्वंद्वसमासः । मनीषायुक्तेन मनसा मनीषामनसैवेत्यर्थः । अत्रार्या मनीषाशब्दं बहुयत्नैस्तृतीयांतं व्याकुर्वंति तदसिद्धम् । मुख्ये सति गौणस्याप्रयोजकत्वात् । मनीषामनसेत्येकपदमेवात्र युक्तम् । हृन्मनःशब्दयोश्च पौनरुक्त्यदोषपरिहारात् । एवं मनोमये चिदचिद्विवेकेन चिदात्मनि श्रुतेऽपि चित्तवृत्तिनिरोधेन सम्यक्साक्षात्कारस्य विहितत्वान्मनसाभिक्लृप्त इत्युक्त्वा 'य एनं विदुरमृतास्ते भवंती'त्यानंदमयकोशो विधीयते । तस्मादत्र मनोमये चिदात्मन उपलभ्यत्वाद्वेदानां कोशांगत्वं गुर्वादेशस्यात्मत्वं च विधीयते । अत्रेमामुपनिषदं बहवो बहुधा व्याकुर्वंति तत्तन्मतानुवादे ग्रंथविस्तरः

१ तै. २।५। २ तै. २।३।१। ३ का. ६।९। ४ ६।९। ५ का. ६।९।
६ महाना. १।११।

कालव्ययश्चास्य लेखकस्य माभूदिति भगवानंतर्यामी न प्रकाशयति । नहि करकंकणस्य दर्पणापेक्षेति न्यायेन रसज्ञैर्ब्रह्मानुभवकोविदैस्तत्त्वसिद्धपदार्थौ मुख्यत्वेन ग्राह्य इत्येव किं बहुनोक्तेन?।

मया तु श्रीसच्चिदानंदनाम्नाविर्भूय कृततत्त्वोपदेशप्रसादत्वाद् भगवानेव स्वयं व्याकरोति, स एव प्रकृतमनुसरति । मनोमयकोशस्यात्मोपलब्धिस्थानत्वात् । वेदत्रयमंगत्वेनोपपाद्य प्रतिकोशस्य सुपर्णरूपकत्वेन वर्णितत्वादवशिष्टमंगमवशिष्टोऽथर्वणवेद इति विधीयते 'अथर्वांगिरसः पुच्छं प्रतिष्ठा'[1] इति । पुच्छस्य विहगांगत्वेऽपि शिरःपक्षौ यथा प्रयोजकान्यंगानि न तथा पुच्छम् । तद्विनापि खगाः सुखेन जीवंतीति दृश्यत्वात् । किंतु पुच्छं शोभावहमेव । एवं यजुरादिवेदैः गुरूपदेशेन ज्ञाते चिदात्मनि वेदानामनुपयोगित्वेऽपि तस्याधिगततत्त्वस्याचार्यत्वयोग्यत्वाद्वेदास्तस्य शिष्यादिषु तच्छोभावहा इत्यतोऽथर्वणवेदस्य वेदत्रयोद्धृतमंत्ररूपत्वाद्यजुरादीनामुपलक्षणार्थमथर्वांगिरसः पुच्छं प्रतिष्ठेत्युक्तम् । तावता यजुराद्यास्तस्यानुपयोगिनोऽपि शोभावहा इत्यर्थः । एतावता स्त्रीशूद्रादिजातीनां तत्त्वज्ञानेऽधिकारेऽपि पुच्छहीनमयूरस्येवाचार्यपदं न शोभत इति च सूच्यते । एवं मनोमयकोशेऽधिगतात्मतत्त्वस्य बहुजन्मसंस्कृतबुद्धेस्तु निवृत्तवृत्तिप्रवाहं शुद्धं सत्त्वं तदानीमेव स्वरूपाकारेण परिणतं भवतीति कोशांते 'यतो[2] वाचो निवर्तंते अप्राप्य मनसा सह । आनंदं ब्रह्मणो विद्वान्न बिभेति कदाचन' इति श्रुत्या तस्यानुभवः प्रकाश्यते । एवंच सति 'आनंदं ब्रह्मणो विद्वान्' इत्यनेन चित्तवृत्तिशून्यत्वात्स एवानंदमयः कोशश्च यस्मिन्निरुपाधौ ब्रह्मणि चित्तं तदात्मतां लभते । तदेव ब्रह्मपुच्छं प्रतिष्ठेति वक्ष्यमाणं बृहच्चेति विधीयते । यदि मध्यमाधिकारी तर्हि मनसाधिगतत्वेऽपि चिदचिद्विवेकज्ञानमात्रत्वसिद्धिर्न सम्यक्साक्षात्कारश्चित्तस्य ब्रह्माकारपरिणामसिध्यभावात्, यतो वाचो निवर्तंते तस्यानंदस्याविदितत्वादिति चानयैव श्रुत्या सूत्रितत्वात् । तदानीमस्य मध्यमाधिकारिणोऽत्र मनोमयकोशव्यतिरेकेणाधिगतात्मा विज्ञानमय इत्यभिधीयते । विशिष्टं वृत्तिभिर्युक्तं ज्ञानं ज्ञानसाधनं सत्त्वम् । तदुक्तं भगवता 'सत्त्वात्[3]संजायते ज्ञानम्' इति । तद्वृत्तिविशिष्टमिति विज्ञानं तद्विज्ञानप्रचुर आत्मा विज्ञानमयः तस्मिन्नधिगतेऽप्यात्मनि चित्तस्य वृत्तिनिरोधाभावान्मनोमयकोशव्यतिरेकगम्यः सोऽप्येकः कोशः तत्कोशगतस्य सम्यगपरोक्षज्ञानस्याभ्याससाध्यत्वात्कोशश्च साधनानि च विधीयंते । 'तस्माद्वा[4] एतस्मादन्योऽतर आत्मा विज्ञानमयः' इति । तस्य श्रद्धैव शिर इति, ऋतं दक्षिणः पक्ष इति, सत्यमुत्तरः पक्ष इति, योग आत्मेति,

१ तै. ३।१। २ तै. २।४।१। ३ भ. गी. १४।१७। ४ तै. २।१।

महः पुच्छं प्रतिष्ठेति। एवं वृत्तिविशिष्टेन चित्तेनाधिगते स्वात्मनि 'यतो वाचो निवर्तंते'[1] इति श्रुत्युक्तक्रमेण वाङ्मनोवृत्तिनिरोधाभावाच्चित्तस्य स्वरूपाकारपरिणामं विना सुखानुभवराहित्यादसंभावनायाः संभावितत्वादत्र शिष्यस्य श्रद्धा कारणमिति सूच्यते 'तस्य श्रद्धैव शिरः'[2] इति। तस्य कोशस्य श्रद्धा नाम अयमात्मा ब्रह्मेत्यास्तिक्यबुद्धिः सैव शिरः प्रधानांगं यावदानंदमयत्वसिद्धिः। ततः परं तु 'तस्य प्रियमेव शिरः'[3] इति श्रुतेरानंदानुभवे सति योगभ्रंशाभावात्। तदुक्तं भगवता 'सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतींद्रियम्। वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः'[4] इति। अयमेवार्थः श्रुतेश्च। 'यतो वाचो निवर्तंते अप्राप्य मनसा सह'[5] तं ब्रह्मण आनंदं विद्वान् कदाचन न बिभेति ब्रह्माहमस्मीति संशयाभावात् कदाचन जीवोऽहमिति मत्वा न बिभेति। 'उदरमंतरं कुरुते। अथ तस्य भयं भवति'[6] इति श्रुतेरित्यत आनंदमयकोशप्राप्तिपर्यंतमयमात्मा ब्रह्मेति दृढतरविश्वासो मुख्यमंगमस्य कोशस्येति तात्पर्यम्। एवं श्रद्धा शिर इत्युक्तमपि विनापक्षौ खगशिरसो रक्षा न स्यादिति ब्रह्माहमस्मीति विश्वासमात्रस्य वक्ष्यमाणतदुत्तरानुभावसाधनक्रमं विना पूर्वसंस्कारोपहतस्य विश्वासोऽपि नश्येदित्यतस्तद्विश्वासरक्षार्थं पक्षावभिधीयेते। ऋतं दक्षिणःपक्ष इति, सत्यमुत्तरः पक्ष इति ऋतसत्ययोः शब्दमात्रवैलक्षण्यं नार्थभेदोऽत्र, तस्मादुपाधिभेदेऽपि वस्त्वैक्यं ययोस्तौ जीवेश्वरावत्र पक्षावित्यर्थः। तथाच पक्षयोः सव्यासव्यनामरूपभेदेऽपि द्वयोरेकजातित्वं, तथा समानवस्तुत्वं व्यष्टिसमष्टिजगति सर्वत्रगम्यत्वं च। एतावता मनोमये यदात्मज्ञानसिद्धिस्तावता त्वंपदमात्रशुद्धिरेव। अत्र तत्त्वंपदयोश्चैक्यमधिगम्य सर्वत्र तयोरैक्यमन्वीक्षणीयम्। तावता ब्रह्मास्मीति श्रद्धा दृढा निश्चला च स्यादिति पक्षशब्दतात्पर्यम्। तदुक्तं भगवता 'यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति। तस्याहं न प्रणश्यामि स च मे न प्रणश्यति'[7] इति। यद्यपि शिरःपक्षौ च सिद्धौ तथापि जीवात्मानं विनांगानि यथा तथा ज्ञातेऽपि तत्त्वंपदैक्येन यावदभ्यासो न तावत् श्रद्धारक्षकौ पक्षौ न च श्रद्धेत्यतोऽभ्यासो विधीयते 'योग आत्मे'[8]ति। योगस्तरंगसमुद्रयोरिव चित्तात्मनोः संयोगस्तथापि चिदधिष्ठानस्य चित्तस्य नित्यचित्संयोगान्नित्ययोगत्वात्सिद्धस्य साध्यत्वं घटते इति योगशब्दस्य नायमर्थ इति व्याकृतं भगवता गीतायाम् 'तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्'[9] इति। दुःखस्य वृत्तिरूपस्य संयोग इति दुःख-

१ तै. २।४।१। २ तै. २।४। ३ तै. २।४। ४ भ. गी. ६।२१। ५ तै. २।४।१। ६ तै. २।७।१। ७ भ. गी. ६।३०। ८ तै. २।४।१। ९ भ. गी. ६।२३।

संयोगस्तस्य वियोगो वृत्तिप्रवाहोपरमस्तं दुःखसंयोगवियोगं योगसंज्ञितं विद्यादित्यर्थः। तथा च पातंजलसूत्रं 'योगश्चित्तवृत्तिनिरोधः'[1] इति। तस्माद्यस्मिन्नित्ययुक्तं चित्तं यस्मात्सचेतनं तस्मिन् वृत्तिशून्यं सत्तदाकारं भजते। संयोगोऽस्य कोशस्यात्मा किंतु यदात्वेवं स्थैर्यं तदानीं स एवानंदमयकोशो 'यतो वाचो निवर्तंते अप्राप्य मनसा सह आनंदं ब्रह्मणो विद्वान्'[2] इति श्रुतेस्ततोऽत्र तदभ्यास एव विधीयते। यथा त्वष्टांगस्य योगसंज्ञितत्वमतो विज्ञानमयसंज्ञितः कोशः। तत्र तावता त्वभ्यासे क्रियमाणे ब्रह्माहमस्मीति विश्वासस्य श्रद्धाशिरस्त्वोऽर्थं विहितस्य सर्वत्र जीवेशयोरैक्येन ब्रह्मनिरीक्षणस्थैर्यं स्यादिति तात्पर्यम्। एतद्रूपानुभवत्वादेव विज्ञानमयो विशिष्टज्ञानमयः कोश इत्यभिधीयते। जीवेशयोरुपाधिनिषेधशेषं चिदेकरसं ब्रह्माधिगम्य तंत्वेकमात्रः पटो वाचारंभणमात्रोऽपि यथा तंत्ववलोकनं विना न दृष्टिगोचरो भवति, तथा चैतन्योपादानको विषयेंद्रियसंयोगरूपः प्रपंचश्चैतन्यं विना न बुद्धिगोचरो भवतीति निश्चित्य तंत्वेकमात्रपटवच्चिदेकमात्रो जडोऽपि प्रपंच इति सततावलोकनं ऋतसत्यपक्षवाच्यं न योगाभ्यासं विना संभवतीति योग आत्मेत्युक्तः। यथात्मना सतत एव विज्ञानमयः कोशः दृशिजीवनपक्षाभ्यां च पतंगस्य सर्वत्र गमनमेवं समाधिस्थैर्याभावेऽप्यभ्यासमात्रतः सर्वत्र ब्रह्मनिरीक्षणं संभवतीति तात्पर्यम्। तदुक्तं भगवता 'असंशयं महाबाहो मनो दुर्निग्रहं चलम्। अभ्यासेन तु कौंतेय वैराग्येण च गृह्यते'[3] इति। अभ्यासो योगाभ्यासः नतु समाधिः। किंतु दुर्निग्रहं चंचलं मनस्तु गृह्यते सर्वत्र ब्रह्मनिरीक्षणे तत्स्थिरीक्रियत इत्युत्तरम्। नच वाच्यमत्र निर्विशेषसमाधिस्थैर्यार्थमभ्यासेन मनो गृह्यत इति तद्विषयप्रश्नासंभवात्तदर्थप्रश्नाभावाच्च। तथाचार्जुन उवाच 'योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन। एतस्याहं न पश्यामि चंचलत्वात्स्थितिं स्थिराम्।'[4] 'चंचलं हि मनः कृष्ण'[5] इत्यादि। तत्र योयं योग इत्यनेन भगवता द्विविधयोगस्योक्तत्वादादौ 'सुखेन ब्रह्मसंस्पर्शमत्यंतं सुखमश्नुते'[6] इत्यंतग्रंथेन निर्विशेषयोगमुक्त्वा 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि। ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥'[7] इत्यादि 'स योगी परमो मतः'[8] इत्यंतेन ग्रंथेन विज्ञानमयकोशरूपस्य सर्वत्र समत्वेन ब्रह्मनिरीक्षणस्योक्तत्वात्। 'योऽयं योगस्त्वया प्रोक्तः'[9] इत्यर्जुनप्रश्नात्सन्निहितोक्तसविशेष एव योगस्तथा च 'साम्येन

---

१ योगसू. १।१। २ तै. २।४।१। ३ भ. गी. ६।३५। ४ भ. गी. ६।३३। ५ भ. गी. ६।३४। ६ भ. गी. ६।२८। ७ भ. गी. ६।२९। ८ भ. गी. ६।३२। ९ भ. गी. ६।३३।

मधुसूदने'ति साम्यविशेषणाच्च । सविशेषयोग एव न निर्विशेषो न वाऽभ्यासेन मनो गृह्यत इति निर्विशेषप्रश्नोत्तरं भवितुमर्हति । तत्र मनश्चांचल्यमभ्यासे क्रियमाण एव भवतीति प्रश्नो व्याख्येयस्तावता पुनरभ्यासेन गृह्यते इत्युत्तरं न स्यात्, 'अभ्यासेन तु कौंतेय वैराग्येण च गृह्यते' इति द्वयोः साधनत्वेन विहितत्वात्। तथा सति वैराग्येणेत्येवोत्तरमलमुचितम् । तस्मात्सविशेषयोगस्य विज्ञानमयकोशरूपस्य निर्विशेषयोगाभ्यासोऽतरंगं साधनं ततोऽत्र योग आत्मेति विहितं द्रष्टव्यम् । गीताव्याकृतामप्यत्र केषांचिद्भ्रमस्तदर्थमेवं व्याकृतमलं विस्तरेण ।

प्रकृतमनुसरति व्याख्याकृद्भगवान् । एवं श्रद्धाशिरसापि ऋतसत्यवाच्यजीवेश्वरयोरैक्येन ब्रह्मणः सर्वत्र निरीक्षणेनापि योगाभ्यासेनात्मनापि सुपर्णोऽयं विज्ञानमयकोशसंज्ञो मयूर इव पुच्छं विना न शोभत इत्यतः सगुणं भगवदाख्यं ब्रह्मास्य पुच्छमिति भक्तियोगः सूच्यते 'महः पुच्छं प्रतिष्ठा' इति । महःशब्देन पारमेश्वरं महत्त्वं 'महसि महीयसेऽघ्रगुणितेऽपरिमेयभगः' इत्यत्र वक्ष्यमाणत्वात् । तदस्य पुच्छं शोभावहं तदेव प्रतिष्ठा च प्रकर्षेण स्थितिस्तस्येति प्रतिष्ठा । ज्ञातेऽपि निर्गुणे सगुणस्य भक्तिः कर्तव्येत्यर्थः । एतावता योगेनात्मना जीवेश्वराभ्यां पक्षाभ्यां सर्वत्र ब्रह्मनिरीक्षणेन सुरक्षितायाः ब्रह्माहमस्मीति कोशप्रधानांगरूपायाः श्रद्धायाः शोभावहत्वं तदभावे पुच्छविहीनमयूर इव कोशोऽयमिति तात्पर्यम् । तदुक्तं द्वादशस्कंधे । 'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनं' इति । न शोभते नाम अच्युतभाववर्जितं ज्ञानं सुखसाधनं न भवति । सनकादयः परिपक्वयोगिनोऽपि भक्त्यैव जीवन्मुक्तावपि शोभंते, तथा भगवद्भक्तिहीनो ज्ञानवानपि न शोभत इत्यभिप्रायः । तदुक्तं भगवता । 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥' 'ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायंत उपासते ॥' 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥' किं च 'महःपुच्छं प्रतिष्ठा' इत्यनेन समाधियोगप्राप्तस्य तत्साधकस्य चास्मिन्नेव कोशे भगवतो भक्तियोग इति सूच्यते । तत्र साधकविषयः क्रमप्राप्तो व्याकृत एव । सिद्धस्य प्राप्तानंदमयकोशरूपसमाधेस्तदितरावसरे त्वस्मिन्नेव विज्ञानमयकोशे वर्तमानत्वात् साधकस्य श्रद्धादिसाधनफलरूपैः शिरआदिभिर्विहरतोऽपि मह एव पुच्छं प्रतिष्ठा च सगुणभक्तियोगेन विराजमान-

१ भ. गी. ६।३५। २ तै. २।४।१। ३ भा. १०।८७। ४ भा. १२।१२।५२। ५ भ. गी. १२।५। ६ भ. गी. १२।६-७। ७ तै. २।४।१।

त्वात् सगुणमेव तत्पुच्छं शोभावहं तदेव महःशब्दवाच्यो भगवानस्य विज्ञानमयकोशात्मनः प्रतिष्ठा प्रकर्षेण तिष्ठति यस्यामिति प्रतिष्ठा स एव प्रकृष्टस्थितिरूपश्चेत्यर्थः । महःशब्दवाच्यस्य विद्योपाधित्वाद्योगिनोऽपि विद्यया तदुपाधिनैव सर्वस्य जगतो ब्रह्मत्वेन निरीक्षणात् ब्रह्माहमस्मीति श्रद्धाफलरूपत्वात् योगात्मत्वात् । अत एव कोशांते श्रुत्यापि पक्वयोगिनोऽत्र विज्ञानमयकोशे वर्तमानकालानुभव एवमेवाभिधीयते । **'विज्ञानं[१] यज्ञं तनुते कर्माणि तनुतेऽपि च'** इति विज्ञानत्वात् । मुमुक्षोः साधनरूपोऽयं कोशः प्राप्तसमाधियोगस्य प्रारब्धभोगाय वर्तमानकाले त्वनेनैव कोशेन लोके संचार इति श्रुत्याभिव्यज्यते । **'विज्ञानं[२] यज्ञं तनुते कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते'** इति श्रुतेः । कर्माणि तनुतेऽपि च विज्ञानं यज्ञं तनुते इत्यन्वयः । प्राप्तसमाधियोगः प्रारब्धशेषावशिष्टदेहत्वात् कर्माणि तनुतेऽपि च विस्तारयत्यपि च स विज्ञानं यज्ञं तनुते विस्तारयति । विशिष्टं ज्ञानं वृत्तियुक्तं ज्ञानमित्यर्थः । तं यज्ञं तनुते यज्ञं कृत्वा विस्तारयति । अग्नौ द्रव्यहोमो यज्ञस्तत्र द्रव्यसद्भावेऽप्यग्नौ हुतस्य दाहानंतरमभावस्य दृष्टत्वात् । तं योगिनो वर्तमानकाले घटपटादिवृत्तिभिर्दृश्यादित्रिपुटिभिर्वर्तमानत्वेऽपि घटादौ मृदिव पटादौ तंत्वादिवद्वृत्तिषु यदा वृत्तिप्रकाशकं ब्रह्मैव पश्यति तदानींतनवृत्तीनां ब्रह्माग्नौ हविषामिव हुतत्वात् स तु कर्माणि तनुतेऽपि च विज्ञानं यज्ञमेव तनुते न कर्माणीत्यर्थः । ततोऽयं सिद्धविषयो विधिः । न श्रद्धाप्रधानसाधकस्यैवमभ्यासलब्धोऽनुभव ईश्वरस्य नित्यमुक्तत्वात् स्वतःसिद्धोपाधिरेवेति तदुपाधिमंतं भगवंतं सर्वे समुपासत इति महःपुच्छमित्यत्रोक्तसगुणब्रह्मणः स्पष्टतया सर्वोपास्यत्वं विधीयते । **'विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते'** इति । कथंभूतं विज्ञानं ? ब्रह्मज्येष्ठं ब्रह्मादिजगत्कारणमित्यर्थः । **'यो ब्रह्माणं[३] विदधाति पूर्वं'** इत्यादिश्रुतिसिद्धत्वात् । भगवान्विष्णुरेव मुक्तमुमुक्षूपास्य इत्यर्थः । नन्वेतादृशे विज्ञानकोशे स्थितस्य निर्विशेषसमाधिना विज्ञानयज्ञदीक्षितस्य कृताशेषकर्मणां ब्रह्मत्वेन पर्यवसायित्वादिति चेत् प्राप्तानंदमयकोशसमाधेरेवायमनुभवो नान्नादिकोशक्रमेण प्राप्तविज्ञानात्मनः । तस्यापि यद्येवमनुभवः स्यात्सोऽपि तादृश एव किंत्वानंदमये समाधौ न यावद्ब्रह्मसुखानुभवो न तावन्निःशेषतया वासनाक्षयः संभवतीति पूर्वत्र सिद्धत्वात् । तथाप्येवमभ्यासे प्रवृत्तस्यापि समाधिसुखानुभवंविना स्वस्येव प्रमादस्तथापि यदि प्रमादो न स्यात् भवत्येव जीवन्मुक्त इत्यसंभावनामुखेनायमर्थोऽभिधीयते । **'विज्ञानं[४] ब्रह्म चेद्वेद तस्मा-**

१ तै. २।५।१। २ तै.२।५।१ ३ श्वे.६।१८। ४ तै. २।५।१।

चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते' इति श्रुतेः। चेद्वेदेत्यनेन वृत्तिशून्येन चित्तेन वक्ष्यमाणं ब्रह्मपुच्छमित्यवशिष्टं निर्गुणमविदित्वा विज्ञानमेव चेद्वेदेत्यर्थः सूच्यते । सोऽपि तादृशोऽपि तस्माच्चेन्न प्रमाद्यति तर्हि शरीरपातात्प्राक् जीवति शरीर इत्यर्थः । पाप्मनो वासनारूपस्य सर्वान्कामानश्नुते वासनासमुद्भूताशेषकामान्भुंक्त इत्यर्थः । किं कृत्वा ? हित्वा तं पाप्मानं हित्वा त्यक्तवासनः सन्नित्यर्थः । सर्वकामभोगस्य सहैवासंभवात् 'एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति' इति श्रुतेः । सर्वकामोपलक्षितं ब्रह्मानंदशरीर एवाश्नुत इत्यर्थः । 'सोऽश्नुते सर्वान् कामान् सह' इत्युपक्रमेऽप्युक्तत्वात् । किंतु प्राक्षानंदमयकोशस्यायमनुभवस्तथापि विज्ञानमात्रं चेद्वेद तस्माच्चेन्न प्रमाद्यति । निर्विशेषे सुखानुभवपर्यंतं प्रमादस्य संभावितत्वान्न संभवतीत्यर्थः । तथा च श्रुतिः 'यदा पंचावतिष्ठंते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ॥ तां योगमिति मन्यंते स्थिरामिंद्रियधारणाम् । अप्रमत्तः सदा भवति योगो हि प्रभवाप्ययौ' इति । अप्रमत्तो भवतीति विहितत्वादत्र चेन्न प्रमाद्यतीति प्रमादस्य संभावितत्वादस्त्येव प्रमाद इत्यर्थः । 'आनंदं ब्रह्मणो विद्वान्न बिभेति' इति च श्रुतेस्तावद्बिभेतीत्यर्थः । तस्मात् प्राक्षानंदमयकोशसमाधिरेव शरीरे पाप्मानं हित्वा सर्वान्कामान्समश्नुत इति सिद्धम् । तस्मान्निर्विशेषसमाधिरेव जीवन्मुक्तिहेतुरित्यत आनंदमयकोशोऽभिधीयते । तेनाधिगतत्वात् । तथा च भृगुः । 'प्राणो ब्रह्मेति व्यजानात्' इति श्रुतेः । 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः। न च श्रुतेरतत्त्ववेदकत्वं पूर्ववत् । अत्र शिष्यप्रतीत्या समन्वयोऽयं सूत्रितः । अथ व्यतिरेकः । एतस्मादिति गुरुप्रतीतिः । प्राणोपाधिविशिष्टत्वान्नायं केवल आत्मेति । भो छात्र, त्वया ज्ञातोऽपि प्राण आत्मा स च समन्वयादात्मैव किंतु यस्तु सकलप्रत्ययज्ञस्त्वं स तस्माच्चान्य एवेत्युभयप्रतीत्यै तस्य प्राण एव शिर इत्यंगत्रयेण शिष्यप्रतीत्या कोशात्मत्वमुक्त्वा तदात्मप्राणयोर्वैलक्षण्यात् 'आकाश आत्मा पृथिवी पुच्छं प्रतिष्ठे'ति श्रुत्यायमुपदेशः । 'आत्मन आकाशः संभूतः। आकाशाद्वायुः' इति श्रुत्या आकाशस्यात्मसंभूतत्वान्न प्रत्यक्ष आत्मा । यतो यत्र परमकारणत्वं तत्रैवात्मत्वम् । तस्मान्नायमात्मा प्राणस्ततः प्राणमयो न तु वेद्यः केवल आत्मेत्यर्थः सूच्यते । एवं प्राणस्य वेदविरुद्धत्वादात्मत्वं निरस्यानुभवतोऽपि निरसनं सूच्यते 'पृथिवी पुच्छं प्रतिष्ठा' इति ।

१ बृ. ४।३।२२। २ तै. २।१। ३ काठ. ३।१३। ४ तै. २।९। ५ छा. ४।१०।५। ६ तै. ३।१४।१। ७ तै. १।७।१। ८ तै. २।१। ९ तै. १।७।१।

पृथिवी पार्थिवो देह इत्यर्थः । तदस्य पुच्छमवशिष्टमंगं यत्र खगस्तत्र पुच्छमितिवद्यत्र प्राणस्तत्र देहः स्वप्ने स्वाप्नः मृतस्य दिव्यो यातनामयो वा, तत्र स्वप्ने स्वाप्नशरीरेण विहरतः प्राणः सुप्ते देहेऽपि विद्यत इति प्रसिद्धं, तथापि तं देहं ममेदं शरीरमिति न वेद तस्मान्नायमात्मा किंतु जडः । प्रत्यभिज्ञत्वाभावात् । किंच परमप्रकाश्यत्वाच्च जडोऽयं प्राण इत्युपदिशति प्रतिष्ठेति । पृथिवी प्रतिष्ठेत्यनुषंगः । पार्थिवो देह एवास्य प्रतिष्ठा तत्रैवास्य प्रकर्षेण विद्यमानत्वदर्शनात् । अपक्वखगांडे प्राणस्यादर्शनान्न यावच्छिरःपादाद्यवयवा न तावत्प्राणस्य प्राणत्वं गर्भादौ प्रतीतिविषयं भवतीति चानुमीयते । तत्र चात्मनस्तदंडादिवृद्ध्युपलक्षितस्य विद्यमानत्वात् क्वचित्प्राणत्वेन प्रतीतस्य क्वचिदप्रतीतस्य नात्मत्वं घटत इत्यर्थः । नच वाच्यं वृक्षादिषु प्राणस्य विद्यमानत्वेऽप्यदर्शनत्ववदपक्वांडादावपीति स्थावराणां चक्षुरादींद्रियाणां प्राणस्य च स्थूलदेहे क्वचिदप्यप्रतीयमानत्वात्, क्वचिद्भावतां गतत्वादात्मवत् शश्वदनपायित्वाभावादात्मवैलक्षण्यं सूच्यते । न हि दृष्टांते सर्वसाम्यमिति न्यायाच्च । किंच तर्वादिषु प्राणेंद्रियाणां सतामप्यप्रतीयमानत्वमात्मवैलक्षण्यात् । तस्मान्नात्मा प्राण इति सिद्धम् । अत्र प्राणात्मत्वनिषेधे विषयेंद्रियाणां च निषेधः सूच्यते । प्राणस्य लिंगदेहप्राचुर्यात् तस्य च षोडशकलात्मकत्वात् । एतावताऽन्नमयनिषेधे पंचभूतानात्मत्वे सिद्धे सिद्धमधिभूतानात्मत्वं प्राणमयलिंगदेहस्य तन्मूलकानामिंद्रियाणामनात्मत्वे तदभिमानिनां देवानां चैवमेवोपाधिजडत्वादनात्मत्वादधिदेवानात्म्यं सिद्धम् । तत्र लिंगदेहे मनसो निषेधे जातेऽपि तस्यांतःकरणचतुष्टये संकल्पात्मकमेकरूपं निषिद्धमपि बुद्ध्यहंकारचित्तानामनिषेधितत्वाद्ध्यात्मानात्मत्वस्याऽनिषेध्यत्वात् शिष्यप्रतीत्या तत्र प्राप्तमात्मत्वमन्वयतयांगीकृत्य गुरुप्रतीत्या व्यतिरेकतो मनसोऽप्यधुना निषेध उपदिश्यते । **'तस्माद्वा एतस्मादन्योऽतर आत्मा मनोमयः'**[1] इति । तस्मात्पूर्वस्मात्प्राणमयात् एतस्माच्चिदात्मनः केवलात् । तत्राद्या शिष्यप्रतीतिः । अहो सत्यमेव सुप्तस्य प्राणानां देहे विद्यमानत्वेऽपि यद्यहमादिप्रतीतयो न संति तर्हि नात्मा प्राणस्तथा सति स्वप्ने स्वप्नदेहं जागरे जाग्रद्देहं सप्रपंचं मन एव जानाति तस्मान्मन एवात्मेत्यंतेवासिना मन आत्मेत्यधिगतत्वात्समन्वयतया मनोमयोऽप्यात्मा भवितुमर्हतीत्यंगीकृत्योपदेशः कर्तव्य इत्यत्र सूच्यते । भो शिष्य, त्वया प्राणमयादन्यो मन आत्मेत्यधिगतं तत्तथैव । यथा च भृगुरपि **'मनो ब्रह्मेति व्यजानात्'**[2] किंतु सर्वावशेषं तत्त्वं केवल इदं न भवति । एतस्मात्केवलाच्चान्यस्तथापि तव प्रतीत्यापि मन एवात्मा भवितुं नार्हति किंतु तन्मयस्तत्प्रचुर

१ तै. २।१। २ तै. ३।४।१।

एव मन एवात्मेति स्वप्नजागरयोस्तथा प्रतीयमानत्वात् । तथापि न केवलः सुषुप्तौ तददर्शनात्मनो मनोविलक्षणस्य सुषुप्तावपि विद्यमानत्वात् । उत्थाय मनसा संयुज्य सुखमहमस्वाप्समित्यात्मानमनुसंधत्ते । तस्मान्नात्मा मनः सुषुप्तौ तदभावात् । एवमेव प्रलयेऽप्यात्मन एव विद्यमानत्वान्मनसोऽन्यात्मा इत्येतस्माच्चान्य इत्युच्यते । ननु तर्हि सर्वेषां सुषुप्तिसद्भावात्तत्र केवलत्वेनावशिष्यमाणत्वादलं ज्ञानप्रयासैरित्याशंकितस्य सुषुप्तौ केवलत्वेनावशिष्यमाणस्यापि संसारनिवृत्त्यभावस्यानुभूतत्वान्मनस आत्मत्वाभावेऽपि मनसैव तत्सुषुप्त्यवशेषमात्मत्वेनाधिगंतव्यमिति शास्त्रं '**मनसैवानुद्रष्टव्यम्**'[1] इति श्रुतेः । तच्च वेदैकगम्यम् । '**नावेदविन्मनुते तं बृहंतम्**' इति श्रुतेः । तस्माद्यन्मनस्त्वयात्मत्वेनाधिगतं तेनैव तद्वेदितव्यं, तच्च वेदांतवाक्यैरित्येवमुपदेशोऽत्र सूच्यते । यतोऽस्य मनोमयकोशस्य यजुरादिवेदा आचार्योपदेशश्च शिरआद्यंगान्यात्मा चेति विधीयते, तत्र तस्य यजुरेव शिर इत्यस्य कोशस्य प्रधानांगमत्रान्वयव्यतिरेकसाकल्येन भृगुवरुणसंवादेनाविर्भूताया ब्रह्मविद्यायाः सर्वविद्योत्कृष्टत्वात् '**सैषा[2] भार्गवी वारुणी विद्या परमे व्योमन्प्रतिष्ठिता**' इत्यस्याः महत्त्वस्य वर्णितत्वात् आत्मनोऽस्मिन्नेव वेदेऽधिगम इति सूच्यते । यथा त्वमुकोऽयमिति निश्चयं शिरसा कुर्वंति । तत्र मुखस्य विद्यमानत्वात् । तथा यजुषो भार्गवीविद्याया विद्यमानत्वादत्र यजुर्वेदे निजात्मत्वस्य निश्चय इत्यर्थः । स च निश्चयः परोक्षापरोक्षभेदेन द्विविधस्तत्रादौ परोक्ष एव शिरआदित्रिभिरंगैः सूच्यते । तदनंतरमादेश आत्मेत्याद्यपरोक्षस्य गुर्वेकवेद्यत्वस्य स्फुटीक्रियमाणत्वात् । प्रस्तुते परोक्षत एव यजुषान्नमयकोशादारभ्यायमात्मेत्यादि शिष्यप्रतीत्यंगीकारात् । अहं ज्ञातैव ज्ञेयं ब्रह्मेत्येतावदेव तत्त्वनिश्चयो जातस्तत्र ब्रह्मणो जगत्कारणत्वादयमात्मा जगत्कारणं न भवतीत्यस्य संदेहो माभूदित्यतो जडत्वादनात्मत्वेन निषेध्यानां तत्त्वानां तस्मादेवात्मन उत्पत्तिरित्याद्य एव कोशे निरूपितम् । '**स[3] वा एष पुरुषोऽन्नरसमयः**' इति । अयमन्नरसप्रचुरः पुरुषोऽन्नरसरूपायां पुर्युषतीत्यन्नरसमयः पुरुषः स वा एष इति वाशब्द एवशब्दार्थे । यद्वा वा इति निर्धारणे । तथाप्येवकारपर्यवसायित्वात् स एवात्मेति तच्छब्देन पूर्वपरामर्शः । '**त[4]स्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम्**' इति श्रुतेः । तस्माद्वा इति जगत्कारणत्वेनोपपादित एवैषोऽन्नरसमयोऽयमित्येतावता प्रतिबिंबात्मनः सुषुप्तिसिद्धकूटस्थैक्यान्न पृथक्त्वम् । जाग्रत्स्वप्नयोर्भोगार्थं प्रतिबिंबत्वं तत्त्वतः कूटस्थ एवात्मेत्यतो जगत्कारण

---

१ बृ. ४।४।१९ २ तै. ३।६। ३ ते. २।१। ४ तै. २।१।

आत्मैवायमात्मा ततस्तत्त्वमसीति महावाक्योपदेशोऽत्र सूचितस्त्वंपदशुध्यर्थम् । अविद्याकार्यस्योपाधेः कोशभेदेनान्वयव्यतिरेकेणारब्धोऽयमुपदेशस्तत्रात्मनः सृष्टि-क्रमेण जगत्कारणत्वमिति सिद्धम् । नच वाच्यमविद्योपाधेर्जगत्कारणत्वमनुपपन्न-मिति । विद्याविद्ययोर्मायाया एव द्वैविध्यादुपाधिभेदस्यावस्थाभेदसाम्यात् स्वप्न-जागरयोरेकस्यैव मनसोऽवस्थाद्वयप्रतीतिवन्मायाया अविद्याविद्यामयत्वम् । यथाच जागरे मनःकल्पितं प्रपंचं बुद्धिर्मिथ्यात्वेन जानाति, तथा ईश्वर इमं प्रपंचम् । किंच सैव बुद्धिः स्वप्ने तमेव मनःकल्पितं स्वाप्नं प्रपंचं सत्यत्वेन स्वीकरोतीत्येवं जीव इत्येवमेको नित्यप्रबुद्धमुक्त एको नित्यसुप्तो बद्धोऽप्युपाधिद्वैविध्येऽपि न मायाद्वैविध्यम् । तत्रायमविद्यया न जानाति सुप्तो यथा मनःकल्पितं स्वदेहा-द्यशेषं स्वकृतं जगत् तत्रैकं देहमात्मतया स्वीकृत्य तदन्यानन्यत्वेन जानाति, वस्तुतः स्वाप्नमशेषं जगदृश्यं स्वप्नमनोमयकृतं च तेषु चैतन्यं तत्तद्देहप्रवर्तकं चात्मचैतन्यमेव, तथापि जाग्रद्देहस्यादर्शनान्न तत्किमप्ययं जानाति तथेश्वरोपाधि-भूतायाः शुद्धविद्याया अप्राप्तत्वादस्मिञ्जगत्ययं नात्मनः सकलकारणत्वमधिगच्छति । निरुपाधित्वेत्वात्मनो जगत्कारणत्वे न कोऽपि विवादस्पर्शः ईश्वरोपाधेश्च कारणत्वादि-त्यलं विस्तरैः । तस्माज्जगत्कारणं ब्रह्मैवायमात्मेति यजुर्वेदेऽधिगतत्वात्कोशस्य प्रधानांगं यजुरित्युक्तम् । द्वितीयांगप्रदर्शनायायं पूर्वपक्षः । किं मातृगर्भे स्थितः सुत इवोत्पत्तेः प्रागात्मन्ययं प्रपंचः स्थितस्तथा सति कथमद्वैतमिति शंकापरिहाराय ऋग्वेदे '[1]ना-सदासीन्नो सदासीत्तदानीम्' इत्यादि 'तस्माद्धान्यन्न परः किंचनास' इति प्रलयशेषे ब्रह्मणि किमपि नासीदिति साकल्येनोपपादितत्वात् स वेदोऽस्य दक्षिणः पक्ष इति विधीयते '[2]ऋग्दक्षिणः पक्षः' इति । तस्माद्ब्रह्मणि जगदुत्पत्तेः प्राक् किमपि नासीत्, किंतु '[3]यथोर्णनाभिः सृजते गृह्णते च' इति श्रुतेः सूर्यकिरणेषु मृषासलिलावभासिका कापि शक्तिः, साप्यतिक्रांते मध्यंदिने मिथ्यांबुभासतत्कार्यसहिता तेषु न दृश्यते, तथा ब्रह्मणि तदानीं न किमप्यासीन्न च तदानीमिति पदोपलक्षितः कालोऽपि द्वितीय आसीत् । नासदासीन्नो सदासी-दित्युपक्रमविरोधात् । तर्हि सदसच्छब्दयोः कालेतरवाचकतया व्याख्यानात्का-लोऽस्तीति वक्तव्यम् । तदानीमिति पदस्य कालवाचकत्वादिति चेत्तदपि न घटते । 'तस्माद्धान्यन्न परः किंचनास' इत्युपसंहारे तदन्यमात्रस्याभावाभिधानान्न तत्र तदन्यः कालः । ननु तस्मादन्यत्किमपि नासेति श्रुत्या यदुच्यते तत्कदेत्यपेक्षायां यदि ब्रह्मणीति चेदुपपादितं स्यात्तदानीमिति पदात्काल इति पृथग्वक्तुमवसरः स्यात्, न तथा, किंतु तदानीमिति तर्हीति कालवाचकशब्दाभ्यां तस्मिन्नवशिष्टे काल एव सर्वस्य

१ ऋ. सं. ८।७।१७। २ तै. २।३।१। ३ मु. १।१।७।

लयः स एव निर्विशेषः कालो यस्मिन्नशेषलय उच्यते तल्लयशेषस्यैव कालशक्तिबीजरूपत्वादिति । 'सामोत्तरः पक्षः' इति तृतीयांगप्रतिपादनायायं पूर्वपक्षः नन्विति । तथा चेद्वूर्णनाभिमुखबहिर्निर्गततंतोः पृथग्वस्तुत्ववज्जगतो वस्तुत्वे स्थितिकाले द्वैतमंगीकर्तव्यम् । तथा सति नात्यंतिकमद्वैतमिति संशये प्राप्ते सामवेदे स्थितिकालाऽद्वैतस्य साकल्येन न्यायोपबृंहिताभिः श्रुतिभिरुपपादितत्वात् सामवेदोऽस्य कोशस्योत्तरः पक्ष इति विधीयते 'सामोत्तरः पक्षः' इति । तत्र प्रपंचस्य प्रपंचाकारत्वेन दृश्यमानत्वेऽपि ब्रह्मैकमात्रत्वस्य साधितत्वात्साम्नः स्थितिकालाद्वैतसाधकत्वमुपपाद्यते । तथाच श्रुतयः '**यथा सोम्यैकेन मृत्पिंडेन ज्ञातेन सर्वं मृन्मयं विज्ञातं भवति**' तथा '**वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यं**' इति श्रुतेः, प्रपंचोऽयं दृश्यते तथापि मिथ्यैव मृत्पिंडाद्याकाराणां यथा वाचारंभणमात्रत्वं तथा प्रपंचस्य किं तर्हि तत्त्वम् ? । तथा च श्रुतयः । मृत्तिकेत्येव सत्यम् । इतिशब्द इवशब्दार्थः । मृत्तिकेत्येव यत् तत्सत्यम् । घटादिविकृतीनां मृदितरवस्त्वभावान्मृद एव वस्तुत्वाद्यद्वस्तु तत्सत्यं यदवस्तु तद्वाचारंभणं परप्रकाश्यत्वाद्गुणफणिवन्मृषा फणेर्गुणं विना प्रतीत्यभावात् । एवं मृदं विना घटविकृतेरदर्शनाद्यथा मृदेव लोके सत्यत्वेन व्यवस्यते । तथाचायं चैतन्यं विना मृदाद्यशेषः प्रपंचो न दृश्यते घटे मृत्तिकेव प्रपंचे तदेव वस्तु मृदि घट इव ब्रह्मणि प्रपंच इत्यर्थः । तथापि गुणफणिवज्ज्ञाते गुणे फणिर्यथात्यंताभावं गच्छति तथा ज्ञातायां मृदि न घटस्यात्यंताभावाभावात् स्थितिकालाद्वैतमेतत् । न च वाच्यं निवृत्तायां गुणाविद्यायामदृश्यगुणफणिवन्निवृत्तायां मृदविद्यायां घटादिविकृतेरभावाभावान्न मृषा घटादिविकृतिरिति । गुणफणेश्चक्षुर्मात्रकृतत्वाच्चक्षुषाधिगते गुणे फणिर्नश्यति । घटस्य करकृतत्वात् चक्षुषाधिगतत्वेऽपि करकृतध्वंसमपेक्षते । संहारस्योत्पत्तिक्रमव्युत्क्रमरूपत्वात् । पृथिव्यादीनां गंधादिद्वारा सलिलादिषु प्रलयश्रवणात् । घटादिविकृतेर्दृश्यमानत्वेऽपि मृदितरवस्त्वभावान्नास्त्येव घटस्तथापि दृश्यते तन्मृषा तदवस्तुत्वात् । एवं घटाभावोऽपि घटविकृतेः करकृतत्वात्करकृतध्वंसवत् कालकृतप्रपंचो ज्ञातेऽपि तत्त्वे कालकृतध्वंसं प्रतीक्षत इत्यत एव साम्ना स्थितिकालद्वैतं साध्यते । जीवन्मुक्तानामपि प्रपंचस्य पूर्ववदेव प्रतीयमानत्वात् । तथाच श्रुतिः '**अनादिमायया सुप्तो यदा जीवः प्रबुध्यते । अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा । प्रपंचो यदि विद्येत निवर्तेत न संशयः । मायामात्रमिदं द्वैतमद्वैतं परमार्थतः**' इति । जागरगम्यप्रपंचस्येश्वरमनःकल्पितत्वात् स्वप्नवत् । मातृगर्भप्रवेशं विना जागरदेहस्योत्पत्तेरभावादजमित्यनेन जागरावस्थातीतं चानिद्रं सुषुप्त्यतीतमस्वप्नं

१ तै. २।३।१। २ छा. ६।१।४।

चेति अवस्थात्रयातीतमद्वैतं तत्त्वं यदा बुध्यते तदा तत्साक्षात्कारे 'यतो वाचो निवर्तंते'[1] इति श्रुतेः प्रपंचो न विद्यत एव, तथापि पंचेंद्रियगम्यप्रपंचस्य प्रारब्धशेषवशेन देहेन दृश्यमानत्वाद्यदि विद्येत निवर्तेत कालकृतत्वात् कालकृतध्वंसे न निवर्तेत तर्हि दृश्यते तावता तु द्वैतमिति चेत्तत्राऽभिधत्ते न संशय इति । 'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यं'[2] इति न्यायोपबृंहितश्रुतेः । तत एव 'मायामात्रमिदं द्वैतमद्वैतं परमार्थत'[3] इत्यनुभव इति श्रुत्यर्थसंग्रहः ।

प्रकृतमनुसरति भगवान् श्रुतिकल्पलताकारः । यत एवं ब्रह्मणि जगदाकारविकृतेर्मायामात्रत्वेऽपि स्थितिकालत्वाज्ज्ञातेऽपि तत्त्वे यथापूर्वंदृश्यमानत्वात् साम्नि द्रव्यविकारैरुपमीयते । ततः स्थितिकालाद्वैतं सामवेदगम्यमित्युच्यते । एवमन्याश्च तत्रत्याः श्रुतयः । 'यथैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्, यथैकेन नखनिकृंतनेन सर्वं कार्ष्णायसं ज्ञातं स्यात्' इत्यादिद्रव्यविकल्पानां तत्तद्द्रव्यैकमात्रत्वेऽपि तत्त्वतस्तस्मिन्ज्ञातेऽपि द्वैते संशयनिरासेऽपि द्वैतस्याद्वैतत्वेनानुभूयमानत्वात् । तथाच । 'यथा मधु मधुकृतो निस्तिष्ठंतीत्याद्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपत्स्याम'[4] इति मुखाभिः श्रुतिभिः स्थितिकालाद्वैतस्य साधितत्वात् । 'यथेमा नद्यः स्यंदमानाः समुद्रेऽस्तं गच्छंति'[5] इति नदीसागरसंगमदृष्टांतेन मुक्तेरुपपादितत्वान्नदीनामैक्येऽपि पृथक्स्पंदमानत्वास्थितिकाले जीवन्मुक्तानां यथापूर्वदेहानां मुक्तिरित्यादिलिंगैः स्थितिकालाद्वैतपरः सामवेदः स उत्तरः पक्ष इत्यर्थः । एवं यजुषा तत्त्वाधिगमश्च । जगत्सर्गकृतद्वैताभासनिरासश्च ततस्ततः प्राग्दैनंदिनलयादाविव जगत्कारणानि सर्वदा महाप्रलयादावपि विद्यंते इति संशयो माभूदिति 'नासदासीत्'[6] इत्यादिना ऋग्वेदेन तन्निरस्तम् । स्थितिकाले ज्ञाते तत्त्वेऽपि प्रपंचो दृश्यते तथाप्यद्वैतमिति सामवेदेन निरस्तत्वाद्वेदत्रयमंगत्रयत्वेनोपपादितम् । यद्यपि यजुरादिषु लिंगानामन्योन्यसंचारो दृश्यते, तथापि यजुरादिषु सृष्ट्यादीनां साकल्यादिदमंगत्रयं श्रुत्या विधीयते । तत्र यजुषः श्रवणांगत्वात्प्रथमं शीर्षोदय इव प्रधानांगत्वम् । तथा च कोशस्य सुपर्णाकारत्वेन वर्णितत्वाद्विहगपोतस्यादौ शिर एव दृश्यते ततः पक्षाविति मनननिदिध्यासनरूपावृक्सामवेदावभिहितौ । ततः प्रलयस्थितिकालाऽद्वैतमनननिदिध्यासनोपयोगिनौ तावित्यधिगंतव्यम् । प्रलयशेषस्य च केवलस्य चराचरालंकारकनकरूपत्वेन श्रुतत्वादाद्यंतयोः प्रलयशेषमेकं केवलसुवर्णमिति ऋग्वेदेन मननम् । तदेवालंकाररूपमिति द्रव्यविविधाकारदृष्टांतैः सर्वत्र ब्रह्मनिरी-

---

१ तै २।९। २ छा. ६।४।१। ३ गर्भ. १।१७। ४ छा. ६।१।५। ५ छा. ६।९।१। ६ ऋ. सं. ८।३।१७।

क्षणरूपं निदिध्यासनं साम्ना सूत्रितमिति द्रष्टव्यम् । परोक्षनिश्चयानंतरमपरोक्षनिश्चयार्थं तदित्यवगंतव्यम् । ततः 'आदेश आत्मा' इति साक्षात्कारस्य गुरूपदेशगम्यत्वविधानात् । नन्वेवं चेत्तत्त्वं वेदैकगम्यमिति सिद्धम् । तन्न घटते । 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इत्यादिबहुश्रुतिविरोधादितिचेत्सत्यम् । किंत्वयमपि गुरूपदेश एव श्रुतिभिरुपवर्ण्यते । ब्रह्मवल्ल्युपक्रम एवं विहितत्वात् । 'ब्रह्मविदाप्नोति परं । तदेषाऽभ्युक्ता' इति श्रुतेः । ब्रह्मविदा ब्रह्मजानता गुरुणा हेतुभूतेन परं केवलं ब्रह्माप्नोतीत्यर्थः । तदस्य कीदृगुपदेशेन परमाप्नोतीति चेदादौ तन्मुखतः परोक्षश्रवणं तन्मननप्रकारस्यार्थविवक्षयाऽऽविर्भूतेयमुपनिषदित्याभिधत्ते 'तदेषाभ्युक्ते'ति । तच्छब्दो यच्छब्दमपेक्षते । यद्यथा गुरूक्तेन परमाप्नोति तथा एषा उपनिषत् अभि सर्वत्रोक्तेति प्रतिश्रुत्य निगममुखोऽनादिगुरुरनादिनिजवचोरूपाभिः श्रुतिभिर्गुरुणैवमुपदेष्टव्यमिति प्रारिप्सुः किं तत्तत्त्वं, किं तदुपलब्धिस्थानं, कथं वाधिगंतव्यं, किं तदधिगमफलं, केन हेतुना ज्ञाता तमधिगच्छतीत्यभिधत्ते । 'सत्यं ज्ञानमनंतं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते'ति श्रुतेरयमर्थः—सत्यादिलक्षणत्रयज्ञेयं निर्गुणं गुहायां बुद्धौ निहितं घटे आकाश इवेत्यर्थः । अतः परमे व्योम्नि तत् घट इव गुहायां निहितं परमे महाकाश इवैक्येन यो वेद 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुतेः स सह सर्वान्कामानश्नुते । एकदैवाखिलभोगासंभवात्तदुपलक्षितमानंदमेकं सोऽश्नुत इत्यर्थः । किंतु 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः' इति श्रुतेः, यस्य देवे परा भक्तिर्गुरौ च परा भक्तिः यथा देवे तथा गुरावित्यैक्येन च यस्य परा भक्तिः तस्यैव कथिता ह्यर्था उपदिष्टास्तत्त्वप्रापकाः श्रुत्यर्थाः प्रकाशंत इति नियमात् 'ब्रह्मविदाप्नोति परम्' इत्याचार्यहेतुभूतात्मगतिरित्युक्त्वा देवता हेतुभूततत्त्वमत्राभिधत्ते ब्रह्मणा विपश्चितेति । विपश्चिता सर्वज्ञत्वादिधर्मैः सगुणेन हेतुभूतेनेत्यर्थः । एवं सत्यादिलक्षणं वेद्यं च तज्ज्ञानहेतू गुरुदेवाविति चोपपाद्य गुरुणैवमुपदेष्टव्यमिति प्रतिश्रुतमुपदेशमारभते । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादि । केचित् 'ब्रह्मविदाप्नोति परं' इत्यत्र ब्रह्मविदिति आप्नोति परमिति पदं छिंदंति तन्न घटते । यदा ब्रह्मवित्तदानीं परं प्राप्त एव सोऽपि चेत्परमाप्नोतीति सिद्धं तदा द्वैतं वैकुंठस्थं ब्रह्म श्रीवत्सादिचिह्नैर्ज्ञात्वा तदुपासनया शनैस्तं परमाप्नोति इति भेदवादिनामुचि-

१ तै. २।३।१। २ मु. २।१२। ३ तै. २।१।१। ४ तै. २।१। ५ छा. ७। २४।१। ६ तै. २।१।१। ७ तै. २।१। ८ तै. २।१।१।

तोऽयमर्थो नास्माकम्। अनादिमायया सुप्तो यदा जीवः प्रबुध्यते स ब्रह्म विदित्वैव प्रबुध्यते सोऽपि परमाप्नोतीत्यर्थो न घटते। ननु '**अनादिमायया सुप्तो यदा जीवः प्रबुध्यते। अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा**' इति श्रुतेर्यत्तच्छब्दाभ्यां प्रबोधानंतरमेव प्रबुध्यते चेन्नायमर्थोऽस्याः श्रुतेः सिद्धांतानुपयोगित्वात्, न्यायाविरुद्धत्वात्, किंत्वजादिलक्षणमद्वैतं बुध्यते स जीवोऽनादिमायया सुप्तो यदा प्रबुध्यते तदा तस्य '**प्रपंचो यदि विद्येत निवर्तेत न संशय**' इत्युत्तरवाक्ये तच्छब्दस्यान्वयात्समंजसोऽर्थस्तस्मात् ब्रह्मविदा गुरुणेत्येवमेवार्थः समुचितः। यद्यपि ब्रह्मविदिति पदच्छेदादर्थं बहुक्लेशैः साधयंति तथापि मुख्ये सिद्धे सति गौणोऽन्याय्यः।

प्रकृतमनुसरति। गुरूपदेशगम्यं तत्त्वमिति सतां मतमेव किंत्वयं गुरूपदेश एव योऽत्र श्रुतिभिरुपपाद्यते। ननु तथा चेत् '**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्**' इति नियमो न स्यात्, वेदोक्तगुरूपदेशैस्तत्त्वाधिगमादितिचेत्सत्यम्, किंत्वस्यापरोक्षत्वेन यद्यद्गुरुणोपदेष्टव्यं तदेव शिरआद्यंगत्रयेण श्रवणमननिदिध्यासनं चोक्तम्, सम्यक्साक्षात्कारः केवलगुर्वेकगम्य इति सूच्यते '**आदेश आत्मा**' इति। आदेश उपदेशः। स तस्य मनोमयकोशस्यात्मा, शिरआद्यंगानां यथा जीवात्मा तथा यजुरादिवेदानां गुर्वादेश आत्मा। तदभावे ते सर्वे जीवं विना शरीरमिवेति तात्पर्यम्। '**नायमात्मा प्रवचनेन लभ्यः**' इति श्रुतेः। एतावता त्वपरोक्षसाक्षात्कारोऽत्र मनोमयकोश इति सूत्रितम्। '**न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्। हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवंति**' इति श्रुतेरन्नमय-प्राणमय-कोशद्वये साक्षात्कारनिषेधपूर्वको मनोमयकोशसाक्षात्कारो विधीयते। श्रुतेरयमर्थः—न संदृशे तिष्ठति रूपमस्येत्यनेन दृग्गोचरत्वे निराकृतेऽपि न चक्षुषा पश्यति कश्चनैनमिति पुनरुक्तिपरिहारे स्थूलसूक्ष्मदेहद्वयदृग्गोचरनिषेधः सूच्यते। न संदृशे तिष्ठति अकल्पितानां पटादीनां स्वत एव स्थूलदृष्टिगोचरत्वेन स्थितत्वात्तथा न संदृशे तिष्ठतीत्यर्थः। संदृश इति छांदसम्। संदृशीत्यर्थः। यद्वा दृगर्थं दृग्गोचरीभवितुं न घटादिवत्तिष्ठतीत्यर्थः। एतावताऽन्नमयगोचरो न भवतीति सिद्धम्। तर्हि कश्चनेंद्राद्यदृष्टरूपमिव तं मनसि कल्पयित्वा लिंगदेहचक्षुषा साक्षात्कुर्यादिति चेत्तन्निवार्यते '**न चक्षुषा पश्यति कश्चनैनं**' इति। एतावता प्राणमयेऽपि न साक्षात्कार इति सिद्धम्। प्राणस्य लिंगप्राचुर्यात्। मनःकल्पितरूपस्य लिंगदेहनिष्ठचक्षुरिंद्रिय-

१ गरुड १।१५। २ गरुड १।१७। ३ मु. २।१२। ४ तै. २।३।१। ५ का. २।२३। ६ का. ६।९। ७ का. ६।९।

गम्यत्वात् । तस्मान्मनोमयकोशेऽधिगंतव्य इति विधत्ते । '**हृदा मनीषा मनसाभिक्लृप्त**' इति । हृदा मनसा । कथंभूतेन हृदा । मनीषामनसा गुरुशास्त्रसंस्कृतया मनीषया युक्तेन मनसेति द्वंद्वसमासः । साधारणमनसामगम्यत्वात् । अत्र केचिन्मनीषेति पृथक्पदं प्रथमांतं तृतीयांतं कृत्वा व्याकुर्वंति तथावाऽस्तु । किं तु मुख्ये सति गौणस्यान्याय्यत्वादयमेवार्थो युक्तः । शेषं स्फुटम् ।

प्रकृतमनुसरति । मनोमये साक्षात्कारस्य विहितत्वाद्यजुराद्यंगानि श्रवणादिसाधनानि साक्षात्काराय गुर्वादेश आत्मेति व्याक्रियते । इमामुपनिषदं बहवो बहुधा व्याकुर्वंति तत्तन्मतानुवादे ग्रंथविस्तरः कालव्ययश्चास्य लेखकमात्रस्य वामनाख्यस्य माभूदिति व्याकर्ताऽनादिविद्याविग्रहः श्रीभगवान्नानुवदति । एतच्च श्रीसच्चिदानंदतीर्थभगवत्पादाचार्यवर्यरूपेणाविर्भूय सूत्रप्रायोपदेशसंस्कृतां बुद्धिमधुना यथा यथा प्रकाशयति तथा तथा व्याकरोति । ततः स एव व्याकरोति स एव प्रकृतमनुसरति । मनोमयकोशस्यात्मोपलब्धिस्थानत्वात् वेदत्रयमंगत्रयत्वेनोपपाद्य कोशानां सुपर्णोपलक्षितत्वादवशिष्टमंगं पुच्छं तदवशिष्टश्चतुर्थो वेद इति विधत्ते '**अथर्वांगिरसः पुच्छं प्रतिष्ठे**'ति । '**अथर्वणे यां प्रवदेत ब्रह्मा अथर्वांगिरसे प्राह ब्रह्मविद्याम्**' इति श्रुतेरुभयनाम्ना विख्यातस्तुरीयो वेदोऽस्य पुच्छम् । अयमर्थः सूच्यते । वेदास्त्रय एव, तत्रत्यैरेव मंत्रैरयं चतुर्थस्तस्माद्वेदत्रयरूपत्वात् साक्षात्कारानंतरं सर्वेऽपि वेदा नास्य प्रयोजकाः पुच्छस्य शिरआद्यंगवत्प्रयोजकत्वाभावात् । पुच्छविहीनाः खगाश्च विहरंतः सुखेन जीवंतीति दर्शनात्, किंतु पुच्छं शोभावहम् । तथा साक्षात्कारसंपन्नस्याचार्यपदयोग्यत्वात्परोपदेशार्थं लोके शोभावहा वेदा इति तात्पर्यम् । ततः स्त्रीशूद्रादीनां नाचार्यपदयोग्यत्वं पुच्छहीनमयूर इव वेदाभावे न तद्गुरुत्वं शोभत इत्यर्थतः प्राप्तं द्रष्टव्यम् । शुचा गुरुं द्रावयतीति शूद्रः । तत्त्वज्ञोऽपि वेदविद्याविहीनो नाचार्यपदार्ह इति गुरोर्नातिसंतोषकरः शूद्रः शिष्य इति कैश्चिदार्यैर्व्याक्रियते । एवं मनोमयकोशेऽधिगतात्मतत्त्वः शिष्यो द्विविधः । तत्र बहुजन्मसिद्धस्य प्रागभ्याससंस्कृतबुद्धेः सकृदधिगते चिदात्मनि निवृत्तवृत्तिप्रवाहं शुद्धं सत्त्वं तदानीमेव स्वरूपाकारेण परिणतं भवतीति कोशांते '**यतो वाचो निवर्तंते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचन**' इति श्रुत्या तस्यानुभवः प्रकाश्यते । एवं च सति मनोवचसां निवृत्तत्वात् वृत्तिशून्येन चित्तेनानंदानुभवस्य विहितत्वादयमेवानंदमयकोशश्च यस्मिन्निरुपाधौ आत्मनि चित्तं तदाकारं भजते यत् तदेव ब्रह्म यदानंदमयपुच्छत्वेन विधीयते ।

१ का. ६।३।९। २ मुं. १।१।२। ३ मुं. १।१।२। ४ तै. २।४।१।

यदि मध्यमाधिकारी तर्हि मनोमयेन मनसाधिगते तत्त्वेऽपि चिदचिद्विवेकज्ञानमात्रसिद्धिर्न सम्यक्साक्षात्कारश्चित्तस्य ब्रह्माकारतया परिणतत्वाभावात् । यतो वाचो निवर्तंते तस्यानंदस्याविदितत्वाच्च तदानीं समाधिरूपानंदमयकोशप्राप्तिरित्यनयैव श्रुत्या सूच्यते । यतो वाचो निवर्तंते अप्राप्य मनसा सह तमानंदं विद्वानित्यनेन ब्रह्मसुखं तु तदेव यत्र चित्तं निवृत्तवृत्तिरूपं तदेकाकारं परिणमते । '[1]यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति श्रुतेः । अन्यथा तु '[2]एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति' इति श्रुतेः सर्वस्य ब्रह्मसुखमात्रत्वादसाधारणं त्विदमेव सुखं यत्र चित्तं रजस्तमोरूपविक्षेपलयशून्यविक्षेपाभावजाग्रत्स्वप्नातीतं लयसहित्यात्सुषुप्त्यतिक्रांतं शुद्धं तुरीयं स्वरूपरूपं भवति, एवं न यावत्सुखानुभवो न तावदानंदमयकोशाख्यसमाधियोगारूढोऽयं शिष्यस्ततस्तदनुभवाभावात्तदानीमस्य मध्यमाधिकारिणोऽत्र मनोमयव्यतिरेकेणाधिगतात्मविज्ञानमय इत्यभिधीयते । सुषुप्तौ मनआत्मनो विश्लेषस्य जागरानुमेयत्वान्नात्मा मन इत्यधिगतस्य मनोमयकोशे शाखाचंद्रन्यायेन मनआदिवृत्तिचतुष्टयांतःकरणनिषेधमुखेन गुरुणोपदिष्टे केवले चिदात्मन्यस्य चित्तं वृत्तिविहीनं न भवति । तत्रायं केवलात्मेति प्रतीयमानेऽपि चिदात्मनि चित्तं वृत्तिविशिष्टं नोपरतं भवति तदेव विज्ञानं सत्वस्य वृत्तिज्ञानसाधनरूपत्वात् । वृत्तिविशिष्टं ज्ञानं विज्ञानं चित्तसंज्ञितं तन्मयस्तत्प्रचुर आत्मा विज्ञानमयः । न च वाच्यं स तु पूर्वमप्येवमेव विज्ञानमयः प्रतीतिविषयः स्थितः कोऽत्र विशेष इति । अविद्यानिवृत्तिरेव विशेष आत्ममनोवृत्तिषु प्रकाशक एव । स च चिदात्मायं कापि वृत्तिर्न भवतीत्यनुभवस्य विद्यात्मकत्वात्, किंतु वृत्तिसद्भावाद्विज्ञानमय इत्युच्यते । ततस्तु मनोमयकोशव्यतिरिक्तोऽयमेकः कोश इति विधत्ते । '[3]तस्माद्वा एतस्मादन्योऽतर आत्मा विज्ञानमयः' इति । तस्मात्पूर्वस्मादेतस्मात्केवलात् ब्रह्मपुच्छं प्रतिष्ठेत्युत्तरकोशे वक्ष्यमाणात्ततो मध्य एवायं विज्ञानप्रचुर इत्यर्थः । तदेतच्छब्दाभ्यां शिष्यगुरुप्रतीतिरित्यादि पूर्ववत् । शिष्यस्यानंदानुभवाभावादस्य कोशस्योपदेशस्ततस्त्वसंभावनाऽवसरत्वात्तन्निरसनमत्राद्यं प्रधानमंगमिति विधत्ते '[4]तस्य श्रद्धैव शिरः' इति । तस्य कोशस्य श्रद्धा नामास्तिक्यबुद्धिर्विश्वास आचार्योपदिष्टोऽयं चिदात्मैव ब्रह्मेति दृढबुद्धिरित्यर्थः । तच्च यावद्वृत्तिविरहितं चित्तमात्मनि सुखं नानुभवति तावत् । तदुक्तं भगवता । '[5]सुखमात्यंतिकं यत्तद् बुद्धिग्राह्यमतींद्रियम् । वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः' इति ।

---

१ बृ. २।४।१३। २ बृ. ४।३।३२। ३ तै. २।१। ४ तै. २।५।
५ भ. गी. ६।२१।

तस्य योगभ्रंशाभावात् । 'आनंदं ब्रह्मणो विद्वान्न बिभेति कदाचन' इति श्रुतेश्चायमेवार्थः । कदाचन न बिभेति क्वचिदपि भयमूलां द्वैतबुद्धिं नानुसरति । ब्रह्मसुखानुभवात् । 'द्वितीयाद्वै भयं भवति' इति श्रुतेः । अस्यामेवोपनिषद्युत्तरत्रा-स्यैवार्थस्याभिधीयमानत्वात् । 'उदरमंतरं कुरुते अथ तस्य भयं भवति' इति श्रुतेः । उत् अरं ईषदपि अंतरं कुरुते अथानंतरमेव तस्य भयं भवति । तत 'आनंदं ब्रह्मणो विद्वान्न बिभेति कदाचन' । अतस्तस्य तावत् श्रद्धैव शिरः प्रधा-नांगमिति विधीयते । एवं श्रद्धाख्यशिरसा खगपोतस्यांडादाविर्भावमिव विज्ञा-नमयकोशत्वं सिद्धमपि न यावत्पक्षौ न तावत्पक्षिशिशोः सर्वत्र संचारः शिरउप-लक्षितदेहस्योपजीवनं च संभवतीति न्यायेन न यावदस्य सर्वत्रात्मतत्त्वनिरीक्षणं न तावद्ब्रह्माहमस्मीति श्रद्धाख्यशिरसो निर्वाह इत्यतः कोशानुरूपं पक्षद्वयं विधत्ते । 'ऋतं दक्षिणः पक्षः सत्यमुत्तरः पक्षः' इति ऋतसत्ययोः शब्दमात्रवैलक्षण्यं नार्थभेदोऽत्र । तस्मादुपाधिभेदेऽपि वस्त्वैक्यं ययोस्तौ जीवेश्वरावत्र पक्षस्थानीया-वित्यर्थः । यथा च पक्षयोः सव्यासव्यनामद्वयं पृथक् रूपभेदेऽपि द्वयोरेकजातित्वं, तथा जीवेश्वरत्वेनैक आत्मैवेति यन्निरीक्षणं तदस्य कोशस्य पक्षिणः पक्षाविव जीव-नमूलं तदन्यथा तु श्रद्धाशिरस्त्वाभावात् प्राप्तः कोशोऽपि नश्यति । पक्षौ विना खगशिरसो व्याधादिभ्यो रक्षा यथा न स्यात्तद्वदसंभावनादिभ्यः श्रद्धाशिरसो निर्वाहो न स्यादिति तात्पर्यम् । एतावतात्र तत्त्वंपदयोरैक्यस्य सर्वत्र निरीक्षणं विहितमिति च द्रष्टव्यम् । न यावदेवं न तावच्छ्रद्धास्थैर्यं, न यदा श्रद्धा न तदा श्रुतं ज्ञानं, तस्मादात्मनि विज्ञाते यदा सर्वत्र पक्षाभ्यां गमनमिव निरस्ततत्त्वं-पदोपाधिब्रह्मनिरीक्षणं न तदा ज्ञानभ्रंशः संभवति । तदुक्तं भगवता । 'यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि स च मे न प्रण-श्यति' इति । एवं यद्यपि शिरःपक्षौ रक्षकावित्यंगत्रयं सिद्धं, तथापि जीवात्मानं विना यथांगानि तथा सत्यामपि ब्रह्माहमस्मीति श्रद्धायां सति तत्त्वंपदयोरैक्य-ज्ञानेऽपि न यावदात्मसंयमयोगाभ्यासो न तावत्सर्वत्र ब्रह्मनिरीक्षणं संभवति, तदभावे तु न ब्रह्मात्मश्रद्धा स्थिरा भवतीत्यतोऽभ्यासो विधीयते । 'योग आत्मा' इति । योगस्तरंगसमुद्रयोरिव चित्तबिंबात्मनोः संयोगस्तथा सति प्रति-बिंबस्य बिंबैक्यं । तथापि चिदधिष्ठानस्य चित्तस्य नित्यचित्संयोगित्वात् सिद्धस्य साध्यत्वं न घटते । यतस्तु चित्तस्य बिंबप्रतिबिंबसंज्ञितयोरुभयोः प्रकाशेन प्रका-श्यत्वात्तत्र प्रतिबिंबस्य देहमात्रव्यापकत्वाद्देहाद्बहिश्चित्तसंचारस्तु बिंबचैतन्येनैव

१ तै. २।९।  २ बृ. १।२।४।  ३ तै. २।७।१।  ४ तै. २।९।  ५ तै. २।४।१।
६ भ. गी. ६।३०।  ७ तै. २।४।१।

तत्सर्वगतत्वात्। ततस्तु योगे यत्र चित्तस्य चिदाकारत्वं तद्विंबमेव। 'यत्र[१] नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति श्रुतेः। तत्र चित्तचैतन्ययोर्नित्यसंयोगात्तयोर्योग इत्यर्थो न घटते। तस्माद्योगशब्दस्यात्र नायमर्थ इति व्याकृतो भगवता गीतायां षष्ठाध्याये 'तं विद्याद्दुःखसंयोगवियोगं[२] योगसंज्ञितं' इत्यर्धेन। दुःखस्य वृत्तिरूपस्य संयोगो दुःखसंयोगस्तस्य वियोगो वृत्तिप्रवाहोपरमस्तं दुःखसंयोगवियोगयोगं योगसंज्ञितं विद्यादिति वाक्यार्थः। तथा च पातंजलसूत्रं। 'योगश्चित्तवृत्तिनिरोधः'[३] इति। चित्तचिदात्मनोर्नित्यसं-योगाद्वृत्तिनिरोध एव योग इति वाक्यार्थवदर्थः। एवमेव वृत्त्युपरमरूपोऽनुभव-सुखानुभव इति च। यद्वृत्तिग्रस्तं तद्दुःखमिति चाम्नातं छांदोगैः। तथाच श्रुतिः। 'यत्र[४] नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पं यो वै भूमा तदमृतं। अथ यदल्पं तन्मर्त्यम्' इति। एवं च वृत्तिशून्यत्वं यत्र स भूमा तत्र सुखमित्यर्थः। यत्र वृत्तयस्तदल्पं मर्त्यं दुःख-मित्यर्थः। 'यो वै भूमा[५] तत्सुखं नाल्पे सुखमस्ति' इत्युपक्रमश्रुतेः। भूमा अपरिच्छिन्नो यस्तत्सुखम्। अल्पे न सुखमस्ति वृत्तिषु दुःखमस्तीत्यर्थः।

अतो दुःखसंयोगवियोगो वृत्तिसंयोगवियोग इति सूच्यते भगवतेति व्याक्रियते च भगवता श्रुतिकल्पलताकारेण। अत्र गीताव्याकृद्भिः कैश्चिद्यथारुचि व्याकृतं तत्प्रौढ-त्वात्। प्रकृतमनुसरति। तस्माच्चित्तचिदात्मनो नित्यसंयोगात् वृत्तिनिरोध एव योगः स आत्मास्य विज्ञानमयकोशस्य। किं तु यदात्वेवं निष्पन्नो योगस्तदा तु स एवा-नंदमयः कोशः। 'यतो[६] वाचो निवर्तंते अप्राप्य मनसा सह। आनंदं ब्रह्मणो विद्वान्' इति श्रुतेः। ततस्तु तदभ्यास एतदित्यत्र व्याख्येयम्। कोशस्य विज्ञानमयत्वात्। यथा चाष्टांगयोगे सर्वांगानां योगत्वं शब्द्यते तद्वत्। तस्मादत्र योगशब्देन योगाभ्यासः स एवात्मास्य कोशस्य श्रद्धाशिरआद्यंगानां जीवनरूप-त्वात्। अत्रेत्थं क्रमः–मनोव्यतिरेकेण विज्ञातेऽप्यात्मनि चित्तवृत्त्युपरमाभावे तु विज्ञानमय आत्मेत्यभिहितः। तत्रानंदानुभवाभावादसंभावनावसरत्वात् ब्रह्माहम-स्मीति श्रद्धा प्रधानांगं विहितम्। सा च प्रागमंगलसंस्कृतबुद्धेर्न स्थिरा स्यादिति सर्वत्र तत्त्वंपदोपाधिनिरस्तब्रह्मावलोकनं विहितं पटे तंतुवत् घटे मृद्वत्। नहि तंतुं विना पटो दृश्यते न मृदं विना घटस्तथा न हि चिदात्मानं विना किमपि प्रतीतिविषयं स्यात्तस्मात्तंतुमृन्मात्रपटघटवच्चिदेकमात्रं जगत्। जडांशस्य पटघटवत्

---

१ बृ. ४।५।१५। २ भ. गी. ६।२३। ३ पातं. सू. १।१। ४ छां. ७।२४।१। ५ छां. ७।२३।१। ६ तै. २।९।

वाचारंभणमात्रत्वं चैतन्योपादानकत्वादित्येवं निरीक्षमाणस्य ब्रह्माहमस्मीति श्रद्धा-निर्वाहः स्यात्पक्षाभ्यां पक्षिशिरस इवेति । तच्च निरीक्षणं न योगाभ्यासं विना संभवति । अनारूढसमाधियोगोऽप्यभ्यासवत्त्वात्सर्वब्रह्मनिरीक्षणे क्षमः स्यादित्य-तोऽत्र योगाभ्यास एवात्मेति व्याक्रियते । तथा सति योगाभ्यासे विक्षेपपरि-हाराय प्रत्याहारप्रधानांगं स च वैराग्यैकसाध्यस्तस्माद्योगशब्देन योगाभ्यासः सवैराग्योऽत्र जीवानां विधीयते येन ब्रह्मात्मश्रद्धायाश्च सर्वब्रह्मनिरीक्षण-रूपपक्षयोश्च साचिव्यं संभवति यतस्तु सर्वब्रह्मावेक्षणयोगे मनसः स्थैर्यमघट-मानं मन्वानस्यार्जुनस्य प्रश्नमंगीकृत्य भगवताप्येवमेवोत्तरमुच्यते । '[1]असंशयं **महाबाहो मनो दुर्निग्रहं चलम् । अभ्यासेन तु कौंतेय वैराग्येण च गृह्यते**' इति । न च वाच्यमत्र निर्विशेषसमाधिस्थैर्यार्थमेतदुत्तरमिति, तद्विषय-प्रश्नाभावात् । '**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन । एतस्याहं न पश्यामि चंचलत्वात्स्थितिं स्थिराम्**' इति प्रश्नात् । योऽयं योग इत्यनेन द्विविधयोगस्योक्तत्वात् तयोर्यस्त्वयं सन्निहितः । '**[2]सर्वभूतस्थमात्मानं सर्व-भूतानि चात्मनि । ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः**' इत्यारभ्य '**[3]स योगी परमो मतः**' इत्यंतग्रंथेनोक्तः । ततः प्राक् '**सुखेन [4]ब्रह्मसंस्पर्शमत्यंतं सुखम-श्नुते**' इत्यंतग्रंथेन निर्विशेषयोगस्योक्तत्वान्न स योगः, किंतु योऽयं सर्वब्रह्म-निरीक्षणरूपो योग इत्यर्थः । अथ च '**योऽयं योगस्त्वया प्रोक्तः साम्येने**'ति साम्यविशेषणाच्च विषमसृष्टिदर्शनाभावे साम्यस्याघटनान्न निर्विशेषे विषमं किम-प्यस्ति यत्र साम्येन योगो विवक्षितः स्यात् । तस्मात्सर्वत्र समदर्शन इति विशेष-णाद्योऽयं योगस्तस्मान्न निर्विशेषविषयः प्रश्नः । अथ चोत्तरतश्च न निर्विशेष-विषयप्रश्नः । तथा च श्रीभगवानुवाच । '**[5]असंशयं महाबाहो मनो दुर्निग्रहं चलम् । अभ्यासेन तु कौंतेय वैराग्येण च गृह्यते**' इति । अभ्यासेन निर्विशेषयोगाभ्यासेन तस्य च विक्षेपनिरासाय प्रत्याहारस्य वैराग्यमूलत्वाद्वैराग्येण चेति चकारसमुच्चयात्सविशेषयोगसाधनद्वयस्योक्तत्वात् । यदि निर्विशेषविषयमुत्तरं तर्हि वैराग्यमात्रं साधनं विवक्षितं स्यात् । तत्राभ्यास-स्यैव मनश्चांचल्योपहतत्वात्कृतः प्रश्नः इति व्याख्येयत्वात् । तस्य प्रश्नस्याभ्या-सेन वैराग्येण च तन्मनो गृह्यत इत्युत्तरं न स्यात् । अभ्यासे चंचलं मनोऽभ्या-सेन गृह्यत इत्युत्तरस्यानौचित्यात् । उत्तरस्य प्रश्नानुरूपत्वात् । तथा सति वैराग्येण गृह्यत इत्येवोत्तरमलं व्याकर्तुमुचितं च । येन वैराग्येण गृहीतं मनः अभ्यासे

---

१ भ. गी. ६।३५। २ भ. गी. ६।३३। ३ भ. गी. ६।३२। ४ भ. गी. ६।२८। ५ भ. गी. ६।३३।

निश्चलं स्यादिति न च वाच्यं सविशेषयोगाभ्यासेनेति । तस्य च मनश्चांचल्यहतत्वात्तद्विधित्सुत्वे तत्र मनोनैश्चल्यहेतुशुश्रूपुरेवं पृच्छति । ततस्त्वभ्यासविघ्नपरिहारोपायप्रश्नस्याभ्यास एव साधनमित्युत्तरं न स्यादित्यलमतिविस्तरैः ।

केचिन्निर्विशेषे योगविषयप्रश्नोत्तरत्वमत्र व्याकुर्वंतीत्यतस्तन्न घटत इति दर्शयित्वा प्रकृतमनुसरति उत्तरस्य प्रश्नानुरूपत्वात् श्रुतिकल्पलताकारो भगवान् । तस्मादनारूढनिर्विशेषसमाधियोगस्यापि तदभ्याससंस्कृतमनः सर्वत्र ब्रह्मनिरीक्षणक्षमं भवतीति योगशब्देन योगाभ्यासोऽस्य विज्ञानमयकोशस्यात्मा विहितः । एवं श्रद्धाशिरसा ऋतसत्यपक्षाभ्यां योगात्मना च संपादितोऽपि विज्ञानमयकोशाख्यः सुपर्णोऽयं पुच्छं विना न शोभते । ततः सगुणं ब्रह्मास्य पुच्छमिति विधीयते '**मह[१]ः पुच्छं प्रतिष्ठा**' इति । महःशब्देन पारमेश्वरं महत्त्वं तदत्रोत्तरत्र श्रुतयो व्याकरिष्यंति महसि महीयसेऽष्टगुणितेऽपरिमेयभग इति । तस्माद्यन्महःशब्दवाच्यं अपरिमितमैश्वर्यं स ईश्वरोपाधिरित्यर्थः तत्पुच्छं शोभावहम् । अयमर्थः—ज्ञाते निर्गुणे सगुणभक्तिरेव तज्ज्ञानमलंकरोतीति विवक्षया सगुणोपाधिरेव सगुणं ब्रह्मेत्यभिधीयते ऋतसत्यपक्षाभ्यां जीवेश्वरसंज्ञिताभ्यां तयोस्तत्त्वैक्यस्याधिगतत्वादात्मत्वेन तदुपासनायां क्रियमाणायां तदुपाधिरेवोपास्य आत्मैक्यसामान्यात् । ततो मह एवात्र पुच्छं तस्मात्तदुपाधिरेव महःशब्देन सूत्रितः । तत्र चेश्वरस्योपाधिर्द्विविधः । योगरूपश्चैश्वर्यरूपश्च तैलधारावदविच्छिन्ननिजानंदानुभवयोगः । '**यो[२]गो हि प्रभवाप्ययौ**' इति श्रुतेः । नित्ययोगरूपोपाधिरेव नित्यमुक्तोपाधिः स एव प्रभवश्चाप्ययश्च सृष्टिप्रलयावीश्वरोपाधिरित्यर्थः । तदुक्तं भगवता '**अ[३]हं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा**' इति । तस्माद्यत्र नित्ययोगस्तत्रैव जगज्जन्मादिसामर्थ्यं । '**प[४]रास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च**' इति श्रुतेः । तत्र '**यो[५]ग आत्मा**' इत्यनेन योगाभ्यासस्योक्तत्वाद्योग एव तदाराधनं तदेव तदभ्यासोऽपि, तथापि न तावता योगसिद्धिः केवलाव्यक्तोपासनापर्यवसितत्वात् । तदुक्तं भगवता '**क्ले[६]शोऽधिकरस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते**' इति । तर्हि किं निर्विशेषविषयं ज्ञानं सत्यं अद्वैततया गुणोपासनया सिद्धिः स्यादिति चेत्तदुत्तरत्राह भगवान् । '**ये [७]तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायंत उपासते ॥ तेषामहं समुद्धर्ता मृत्युसंसारसागरात्**' इति तस्मादनन्येनैव योगेन निर्वि-

१ तै. २।४।१। २ का. ६।११। ३ भ. गी. ७।६। ४ श्वे. ६।८
५ तै. २।४।१। ६ भ. गी. १२।५। ७ भ. गी. १२।६।

शेषयोगेनेत्येवकारेण पुनरव्यक्तोपासनयैव ते मामुपासत इत्युक्तम् । 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' इति श्रुतेः। किंतु सर्वाणि कर्माणि मयि संन्यस्य समर्प्य मामुपासत इति विशेषः । मयि सर्वकर्मसमर्पणं कृत्वा मत्पराः, सगुणोऽहमेव परो ज्ञानप्रदस्तत्प्रकाशको योगसिद्धिकर इति भावो येषामित्यर्थः । न तु केवलाव्यक्तोपासका इव किमस्माकं ब्रह्मात्मनां सगुणभजनेनेति मन्यमाना इत्यर्थः । तत एव सर्वसमोऽप्यहं 'ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहम्' इति न्यायात्तेषामहमेव समुद्धर्ता नचिराद्भवामीत्यत आत्मनि ज्ञाते सगुणोपासनयैव योगसिद्धिस्तदेव मृत्युसंसारसागरसमुद्धरणं चेति योग आत्मेत्युक्त्वा महः पुच्छमित्युक्तम् । अत्र गीतावाक्येषु केवलाव्यक्तोपासनाभिमानिनो व्याकुर्वंति तदेवम्–'अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते' नाम देहवद्भिर्देहाभिमानिभिर्न तु निरभिमानिभिरित्यतः केवलाव्यक्तोपासनयैव सिद्धिरिति स्थापयंति । तन्न घटते । कुतः । देहवद्भिरितिपदेन ये देहाभिमानिन इत्युच्यंते ते निरस्तजडोपाधयः समाधिगतचिदात्मानो वा, उत चिदचिद्विवेकशून्या वा । आद्ये निरस्ताभिमानास्पदोपाधयः समधिगतनिरभिमानमूलचिदात्मानोऽव्यक्तोपासका अपि यदि देहात्ममानिन एव तर्हि सगुणोपासनाराहित्यादिति सिद्धम् । 'तत्त्वेव भयं विदुषो मन्वानस्य' इति श्रुतेः । अहं ज्ञानवानिति मन्वानस्य तु तदेव भयमिति तच्छब्देन पूर्वपरामर्शः । 'उदरमंतरं कुरुते अथ तस्य भयं भवति' इति पूर्ववाक्येनोक्तम् । उत् अरं ईषदप्यंतरं द्वैतबुद्धिं यः कुरुते तस्य यत्तदस्य भयमिति श्रुत्यर्थः । तस्मादहं ज्ञानवानिति मनःस्फुरणस्य दुर्वारत्वात् केवलाव्यक्तोपासकानां वयं ज्ञानिन इति मानः स्यादेव स्वब्रह्मात्मत्वाधिगतत्वादधुना किमस्माकं सगुणोपासनयेति मानित्वस्य दृश्यमानत्वात् । ये सगुणपरास्तेषां तु भगवानेव ज्ञानप्रद इति बुद्धिनिश्चयदार्ढ्यादहं ज्ञानवानिति स्फुरणाभावात् । अतो भगवानेव नित्यविद्योपाधिः अनन्यात्मास्माकं समुद्धर्तेति विश्वासवतां कल्पतरुस्वभावस्तेषामहं समुद्धर्तेत्याह । ननु किमुच्यते चिदचिद्विवेकसंपन्नानां देहाभिमान इति । 'अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते' इति ये भगवता देहवंत इत्युक्तास्ते त्वनिरस्तजडोपाधयो नाधिगतचिदात्मान इति द्वितीयः पक्षो यदि चेन्नात्र तेषां वार्तापि श्रूयते । चिदचिज्ज्ञानशून्यानामनधिगतचिदात्मनामव्यक्तोपासनाया अघटमानत्वाच्च उपक्रमोपसंहारविरोधाच्च नायमर्थो घटते । तस्मादत्रोक्ता अव्यक्तोपासका आत्मज्ञानिन एव । तदुक्तमुपक्रमे–

१ बृ. १।४।१०। २ भ. गी. ४।११। ३ भ. गी. १२।५। ४ तै. २।७।१। ५ तै. २।७।१। ६ भ. गी. १२।५।

'ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते । सर्वत्रगमचिंत्यं च कूटस्थमचलं ध्रुवम् ॥ संनियम्येंद्रियग्रामं सर्वत्र समबुद्धयः' इत्युपास्योपासकविशेषणैरधिगतात्मान एवेति सिद्धत्वात् । ये त्वक्षरमित्यष्टभिरुपास्यविशेषणैरनधिगतात्मनामुपासनाया असंभवात् । अक्षरं क्षरभागातीतं तन्निरसनमुखेनानुभवैकगम्यम् । ननु शास्त्रश्रवणान्न क्षरतीत्यक्षरं तमुपास्महे इत्युपासत इति चेत्तन्न घटत इत्याह अनिर्देश्यमिति । न निर्देशार्हमिदमित्थमिति वक्तुमशक्यं किंतु शाखाचंद्रन्यायेनाधिगम्यं तमुपासते तावता त्वनुभवैकवेद्यमिति सिद्धम् । तदेवोपपादयति अव्यक्तमिति । व्यक्तिरहितमव्यक्तं श्रीवत्साद्यंकैः श्रुतं मनसि कल्पयित्वा परोक्षेण सगुणमिवोपासितुमशक्यमिति भावः । ननु किमिति न गृह्यते यदक्षरं यदनिर्देश्यं यदव्यक्तं तदुपास्महे इत्युपासितुं शक्यत इतिचेत्तथा च न घटत इत्याह अचिंत्यमिति । केनापि प्रकारेण चिंतयितुमशक्यमित्यर्थः । किंत्वात्मतयाऽधिगतमेवोपास्यं न तु परोक्षेण तच्चिंत्यमित्यभिप्रायः । 'अव्यक्तासक्तचेतसाम्' इत्यपि वक्ष्यमाणत्वात् । तत्र हेतुमाह कूटस्थमिति । निर्विकारं चैतन्यं सर्ववृत्तिप्रकाशकमपि वृत्तिभिरलिप्तं तस्य वृत्तिभिरेवैकगम्यत्वादेवमेवाचलं ध्रुवं चेति सप्तभिरुपास्यविशेषणैः साक्षादुपासनामुपपाद्य निर्विशेषयोगाभ्यासपरास्त इत्युक्त्वा सर्वत्रगमितिविशेषणेन सर्वत्र ब्रह्मनिरीक्षणाभ्यासपरा इत्यपि स्फुटीकृत्य, अथ वैराग्याभावान्न तेषां योगसिद्धिरित्यपि शंका मा भूत्, किंतु सगुणोपासनात्यागेनैवेति स्फुटीकर्तुमुपासकविशेषणैर्वैराग्यं द्वितीयेन सर्वत्र मानापमानयोः समबुद्धय इति । तस्माद्देहवद्भिरित्यनेन पदेनोक्ता उपासका अनात्मज्ञा इति यदुच्यते तन्न स्यात्, बहूनामनुग्रहो न्याय्यः । किं तु देहवद्भिर्देहाभिमानिभिरिति भगवदाराधनाभावात् ज्ञानिमानित्वात् तैर्देहवद्भिर्दुःखं यथा स्यात्तथा अव्यक्ता हि गतिरवाप्यते न तु सुखेनेत्यर्थः । ननु यथाकथंचिदव्यक्तां गतिं तु ते प्राप्नुवंतीति सिद्धम्, देहाभिमानिनां तदसंभवात् । तस्माद्देहवद्भिरित्यनेन देहाभिमानिभिरनधिगतात्मभिरव्यक्ता हि गतिर्नावाप्यते दुःखशब्दः परिवर्जनार्थ इति व्याख्येयमिति चेन्न । उपक्रमविरोधाद्बहुभिः पदैस्तेषां आत्मज्ञानित्वोपपादनादनात्मज्ञा इति न घटते । न च दुःखशब्दोऽत्र परिवर्जनार्थे, ये त्वक्षरमित्याद्युपास्योपासकविशेषणैर्ज्ञातात्मनां सविशेषनिर्विशेषयोगद्वयाभ्यासपराणां विरक्तानां द्वंद्वसमानां गत्यंतराविवक्षितत्वात् । तर्हि देहाभिमानिभिर्दुःखेन वा कथमव्यक्ता हि गतिरवाप्यत इति चेत् भगवदाराधनाभावाद्योगसिद्धिमप्राप्य पश्चात्तप्ताः पुनः सगुणं शरणं प्राप्य तदनंतरं अव्यक्तां गतिं प्राप्नुवंतीति दुःखेनाव्यक्ता गतिस्तैरवाप्यत इत्युक्तम् ।

---

१ भ. गी. १२।३। २ भ. गी. १२।५।

ननु किं युक्त्या कल्पयित्वा एतदुच्यत इति चेद्यद्यपि न्यायप्राप्तोऽयमेवार्थस्तथापि भगवतापि स्फुटमेवमेवाभिधीयते । 'ते[1] प्राप्नुवंति मामेव सर्वभूतहिते रताः' इति । ते पश्चात्तप्ताः संतो वयं ज्ञातब्रह्मात्मानः किमस्माकं सगुणोपासनयेत्यभिमानं परित्यज्य मामेव ते प्राप्नुवंति मां सगुणमेव यं ज्ञानाभिमानेन त्यक्तवंतस्तमेव मामित्यंगुल्या स्वां श्रीमूर्तिं दर्शयन्नेवकारेणेममर्थं सूचयन्नाह । ततस्त्वव्यक्तां गतिं प्राप्नुवंति । 'ये[2] तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायंत उपासते ॥ तेषामहं समुद्धर्ता' इति यथा तथैतेषामपि समुद्धर्ता अव्यक्तगतिप्रदः । अनन्येनैव योगेन मां ध्यायंत उपासत इत्येवकारादनन्ययोगेनोभयोरव्यक्तोपासनासाम्यात् । किंतु मदुपासकानामेवोद्धर्ता ततस्त्वेतैरपि तथाविधत्वस्य प्राप्तत्वात् दुःखं यथा स्यात्तथाऽव्यक्ता हि गतिर्देहवद्भिरवाप्यते इति । देहवत्त्वं तु ते प्राप्नुवंति मामेवेत्युक्तदशायाः प्राक्, ततस्तु तैरप्यव्यक्ता गतिरवाप्यते । यतो देहवत्त्वं त्यक्त्वा ते प्राप्नुवंति मामेवेति भावः । तच्च कुतस्त्वामेव प्राप्नुवंतीति चेत्तत्राह, सर्वभूतहिते रताः किमु वक्तव्यं स्वहिते रता इति । ननु तत्त्वश्रवणमात्रेण वयं कृतकृत्याः किमधुना योगसिध्येत्यदीर्घदर्शिनः किंतु स्वहिते रताः । आदौ मोहात् किमधुना सगुणेनेति मां त्यक्त्वापि योगसिद्ध्यभावात्स्वहिताशंसिनो मामेव प्राप्नुवंतीत्यभिप्रायो गूढः । ननु तर्हि किं दुःखं तावता तत्राह '[3]क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्' इति । अयमर्थः—आदावात्मज्ञानात्प्राक् सगुणोपासनयैव सामान्यतः सर्वेषां तत्त्वप्राप्तिरिति सर्वसंमतम् । ततो 'ये[4] तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायंत उपासते' इति । केचित्तु 'ये[5] त्वक्षरमनिर्देश्यम्' इत्याद्युक्ताः केचित् किमधुना सगुणेनेति ज्ञानमानिनस्तत्र मदुपासकानां तेषामहं समुद्धर्ता इत्युक्तत्वादनायासेन योगसिद्धिः । अथ केवलाव्यक्तोपासकानां ते प्राप्नुवंति मामेवेत्युक्तकालादूर्ध्वं मदुपासकतुल्यगतित्वात् ततः प्राक् योगसिद्धिहेतुकृतक्लेशवैयर्थ्यात् क्लेशोऽधिकतर इत्युच्यते । यतः पुनर्मां यदा शरणं प्राप्नुवंति तदा तूभयप्राप्तिसाम्यात् ततः प्राक् कृतक्लेशोऽधिकतर इत्यर्थः । ननु ते प्राप्नुवंति मामेवेत्यनेन मामव्यक्तमेव न सगुणं किं त्वव्यक्ता हि गतिर्दुःखं यथा स्यात्तथाऽवाप्यत इत्यर्थोऽस्त्विति चेद्देहवद्भिरव्यक्ता गतिरवाप्यत इति सिद्धं तन्न घटते । सगुणं प्राप्य देहाभिमानं त्यक्त्वा ततो व्यक्तां गतिं प्राप्नुवंतीत्येवार्थः । ननु देहवद्भिरपि तत्त्यक्त्वा

---

१ भ. गी. १२।४। २ भ. गी. १२।६। ३ भ. गी. १२।५। ४ भ. गी. १२।६। ५ भ. गी. १२।३।

गतिरवाप्यते ततो दुःखं यथास्यात्तथावाप्यत इति चेन्मैवम् । भवन्मते ज्ञातात्मनां देहाभिमानो न स्यात् । यदि स्यात्सगुणभजनत्यागादिति सिद्धम् । न चाज्ञातात्मन इति स्यादत्र ये त्वक्षरमित्यादिविशेषितत्वाज्ज्ञातात्मान एव ततस्तत्र घटते । ननु देहवद्भिरिति ज्ञानोत्पत्तेः प्राक् ये देहवंतस्तैरिति च केचित् । यदा अक्षरानिर्देश्योपासकास्तदा तु न देहवंत इति भवन्मते सिद्धम् । ननु तैरेव दुःखं यथास्यात्तथाऽव्यक्ता गतिरवाप्यत इत्युच्यते तेषां का कथाऽत्र । ननु देहवाद्भिर्नाम मनुष्यैर्नात्र देहाभिमानित्वं वयं व्याकुर्म इति चेदिष्टापत्तिः । मनुष्यैरव्यक्तोपासनया दुःखं यथा स्यात्तथा गतिरवाप्यत इति सिद्धत्वात् । ननु सगुणगतिसौलभ्यादव्यक्तगतेः क्लेशसाध्यत्वमुक्तम् । ततस्तु **'ये तु सर्वाणि कर्माणि मयि संन्यस्य'**[1] इत्याद्युक्ताः सगुणोपासका न ते ज्ञातात्मानस्तेषां सगुणगतिरेव । यच्च **'अनन्येनैव योगेन मां ध्यायंत उपासते'**[2] इत्युक्तं, तदनन्यत्वं नाम अन्यदेवताभक्तिराहित्यम् । ततस्तेषां नाव्यक्ता गतिस्ततोऽल्पक्लेशसाध्यत्वम् । यच्च क्लेशाधिक्यमस्माकं तत्फलाधिक्यादिति चेन्मुख्यफलं प्राप्य योगपरा मुख्या अन्ये अन्या इति सिद्धं । तथा सति उपक्रमविरोधः । **'एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते । ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः'**[3] इत्यर्जुनप्रश्नोत्तरं श्रीभगवानुवाच **'मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते । श्रद्धया परयोपेतास्ते मे युक्ततमा मताः'**[4] इति । ये नित्ययुक्ता मयि मन आवेश्य परया श्रद्धया मामुपासते ते युक्ततमा मे मम मताः संमताश्च । तर्हि के वा तवासंमताः के वा न युक्ततमा इत्यपेक्षायां **'ये त्वक्षरमनिर्देश्यं'**[5] इत्याद्युपास्योपासकविशेषणैरुक्तास्तत्र यदि द्वितीया मुख्यफलभाजस्तर्हि त एव मुख्या इति वाच्यास्तत्र तेषाममुख्यत्वोपपादनान्नायमर्थः । नच फलतारतम्यं वक्तुं शक्यते । **'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्'**[6] इत्युक्तत्वात् । केभ्योऽधिकतरः क्लेश इत्यपेक्षायां **'ये तु सर्वाणि कर्माणि मयि संन्यस्य'** इत्यादि **'तेषामहं समुद्धर्ता'**[7] इति । तेभ्य इति वक्ष्यमाणेभ्यः एतेषां क्लेशोऽधिकतर इति सिद्धत्वाद्यदि तेभ्यः फलाधिक्यं तर्हि भवतु नाम क्लेशाधिक्यं तावता न युक्ततमा न मे संमता इत्यवाच्याः स्युस्तस्माच्च नायमर्थः । यदा फलाधिक्येऽपि भगवतो न ते संमतास्तर्हि देवानामिव भगवतो ज्ञाननिष्ठा न प्रिया इति सिद्धम् । देवानां कर्मप्रधानाः स्वकिंकराः प्रियास्तथा भगवतोऽपि । तत एव न मन्यंते । न च सगुणोपासकत्वेऽप्यनात्मज्ञाः । तथा सति न भगवतो मता अपि युक्ततमा इति

---

१ भ. गी. १२।६। २ भ. गी. १२।६। ३ भ. गी. १२।१। ४ भ. गी. १२।२। ५ भ. गी. १२।२। ६ भ. गी. १२।५। ७ भ. गी. १२।७।

सिद्धत्वात् । अथ 'यो[1]ऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' इति श्रुतेः । तथा च 'आर्तो[2] जिज्ञासुः' इत्यादिचतुर्विधोपासकेषु ज्ञानी त्वात्मैवेत्युक्तत्वादत्राव्यक्तोपासकेभ्योऽप्याधिक्येनोक्ता नात्मज्ञानहीनाः, उपक्रमोपसंहारयोश्च तेषां ज्ञातात्मत्वोपपादनात्, तत्र नित्ययुक्ता मयि मन आवेश्य श्रद्धया परयोपासत इत्युपक्रमात्, आत्मज्ञानाभावान्नित्ययुक्तत्वासंभवात्, ज्ञाने जडातीते चिदात्मनि ब्रह्मैवाहमिति नित्ययुक्ता इति वक्तुं शक्यत्वात्सगुणमात्रस्य कदाचित् कथाश्रवणकीर्तनादिमात्रयुक्तस्य तदितरकाले तस्मिन्नयुक्तत्वान्नैतावत्, किंतु मयि मन आवेश्येत्यनेन निर्विशेषयोगपरा इति सूत्रयति । मनसः प्रवेशो नाम वृत्तिशून्यत्वम् । तदुक्तं पूर्वाध्याये '[3]भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप' इति मनसः प्रवेश एव प्रवेशः । एकात्मत्वस्य स्वतःसिद्धत्वात् । न च वाच्यं चिदाभासप्रवेश इति । मनसः कूटस्थात्मनि प्रवेशः तदा चिदाभासस्य विद्यमानत्वान्न यावन्मनसः प्रवेशो न तावच्चिदाभासप्रवेशः, तस्माद्यस्मिन् चिदाभासस्तस्यैव प्रवेशो वाच्यस्ततः प्रवेशो मनस एव वक्ष्यति, उपसंहारे च '[4]तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । भवामि नचिरात्पार्थ मय्यावेशितचेतसाम्' इति । मय्यावेशितचेतसामित्यनेन स एवार्थः । तदुत्तरश्लोकेनाप्यस्यैवार्थस्य वक्ष्यमाणत्वात् । वक्ष्यति च 'म[5]य्येव मन आधत्स्व मयि बुद्धिं निवेशय । निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः' इति । अर्जुनस्य एतावता त्वात्मानात्मविवेकश्च सगुणभक्त्या ज्ञानपरिपाकसिद्धिश्चेति निश्चये जाते मय्यावेश्य मन उपासते इत्याधाम्नराहित्यात्तदुपदिशति मय्येव मन आधत्स्वेत्यवतारितः श्लोकः । मयि मय्यात्मनीत्यर्थः । मन आधत्स्व दीपे दृष्टिमिवाधत्स्वेत्यर्थः । येन प्रकाशितं घटादिकं पश्यति तस्मिन्मय्येव मदितरविशेषमात्रमकल्पयन् मय्याधत्स्व घटादिष्वपि दीपप्रकाशस्यैव दृश्यमानत्वात् तत्रापि दृष्टिर्दीपं पश्यत्येव यथा मनः सर्वत्र चैतन्यं सृष्ट्वैव पदार्थं पश्यति तथा मास्त्वित्येवकारार्थः । ननु चंचलं कथमाहितं निश्चलं स्यात्तत्राह मयि बुद्धिं निवेशयेति । विषयचिंतनमेव मनश्चांचल्यं तत्र स्वरूपं निर्विशेषं सुगुप्तं युगलक्षितं न तत्र कश्चन धर्म इति संस्कृतां बुद्धिं मयि निवेशय साक्षादेवमनुभवस्वेत्यर्थः । बुद्धेर्निश्चयात्मकरूपत्वादेवमात्मतत्त्वं न तत्र कश्चन धर्म इति निश्चयानुसंधानेन मनो विषयाभिमुखत्वं त्यक्त्वा ततो निश्चलत्वं भविष्यति स एव मयि प्रवेश इत्याह

---

१ बृ. १।४।१०। २ भ. गी. ७।१६। ३ भ. गी. ११।५४। ४ भ. गी. १२।७। ५ भ. गी. १२।८।

'निर्वसिष्यसि मय्येव अत ऊर्ध्वं न संशय' इति । अत ऊर्ध्वं यदा मन्निर्धर्मैकत्वसंस्कृतां बुद्धिं चिदेकमात्रे मयि प्रवेशयिष्यसि तदुपरि मय्येव निवसिष्यसि वृत्तिशून्यं मनो भविष्यतीत्यर्थः । नात्र सगुणे मयि मन आधत्स्व, बुद्धिं च निवेशय, ततो निर्गुणे मयि निवसिष्यसीत्याद्यर्थकल्पनावसरः । उत्तरश्लोके निर्गुणे मनोधारणाया उक्तत्वात् । 'अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् । अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय' इति । यदि मयि चित्तं स्थिरं यथा स्यात्तथा आधातुं न शक्नोषि ध्रियमाणमेव यदा लीनं विक्षिप्तं वा भविष्यति, तदा बुद्धिरपि निर्धर्मैकत्वसंस्कृता निश्चला न भविष्यति । यत्र मनसः संकल्पस्तत्रैव सापि तत्तन्निश्चयरूपा परिणता भविष्यति तदा मयि प्रवेशो न संभविष्यति तर्हि अभ्यासयोगोऽष्टांगादिसाधनरूपस्तदानंतरं कुरु यदि निर्विशेषे चित्तं समाधातुं न शक्नोषीति चेत्तत एव 'अनन्येनैव योगेन मां ध्यायंत उपासत' इत्युक्तं, तस्माच्चित्ताधानासंभवाच्चाभ्यासयोगश्च निर्गुण एव । सगुणे मय्यावेश्य मन इत्यनेन सगुणोपासकानां चेन्निर्विशेषयोगनिष्ठत्वं च 'ये त्वक्षरमनिर्देश्यम्' इत्यादिकेवलाव्यक्तोपासकानां च तदभ्यासपरत्वं सामान्यतः स्फुटीकृत्य 'श्रद्धया परयोपेता' इति सगुणोपासकानां विशेषाद्भगवानेवास्माकमुद्धर्तेति श्रद्धायुक्तत्वात्तेषामहं समुद्धर्ता, ये चाव्यक्तपरास्तेऽपि यदा मामेव प्राप्नुवंति मामाराधयंति तत्तुल्याः श्रद्धावंतो भवंति तदा तेऽप्यव्यक्तां गतिमाप्नुवंति ततो दुःखं यथा स्यात्तथा आप्नुवंति । तत एव क्लेशोऽधिकतर इत्युक्तप्रकारद्वयेऽपि निर्गुणात्मज्ञानिन एवेति सिद्धम् । निर्गुणात्मज्ञानं विना भजनस्य पशुसाम्यान्न तेषामत्र वार्ताप्युचिता । तथा च श्रुतिः—'योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' इति । किंतु ज्ञानपरिपाकविषये विकल्पस्तत्राव्यक्तमात्रोपासकानां तदभावः सगुणोपासकानां सिद्धः । यदि ज्ञानपरिपाकस्तथापि सगुणोपासकानामपुनरावृत्तिः 'तेषामहं समुद्धर्ते'ति, 'न मे भक्तः प्रणश्यति' इति प्रतिश्रुतत्वान्निर्गुणमात्रोपासनायोगभ्रंशोऽमानित्वादिति प्रकरणार्थत्वादनन्येनैव योगेनेत्यनेन निर्विशेषयोग एवेति वाच्यम् । देवतांतरभक्तिराहित्यादनन्ययोगेनोपासत इति पूर्वपक्षोऽत्र न संगच्छते । 'अर्थाल्लिंगात्प्रकरणादौचित्यादर्थनिर्णय' इति शास्त्रम् । तत्र सगुणनिर्गुणमात्रप्रकरणं नात्र देवतांतरविषये प्रश्नस्तथापि 'ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः' इत्य-

---

१ भ. गी. १२।८। २ भ. गी. १२।९। ३ भ. गी. १२।६। ४ भ. गी. १२।३। ५ भ. गी. १२।२। ६ बृ. १।४।१०। ७ भ. गी. १२।७। ८ भ. गी. ९।३१। ९ भ. गी. १२।६।

नेनैव देवतांतरोपासनाराहित्ये सिद्धेऽपि यदि पुनरुक्त्या वा तदेवाहेति चेदेवका-रस्य नावसरस्तथाप्येवकारप्रयोगान्नात्र देवतांतरव्यावृत्तिप्रसंगावसरः, किंतु सगुण-परा अपि निर्विशेषयोगपरा एव यस्मिन्योगे नात्मानं विना बुद्धिः किमपि पश्यतीत्यनन्ययोगस्यार्थ एवमेव मुख्यस्तस्मान्निर्गुणयोगपराणां सगुणोपासनयैव योगसिद्धिरिति भगवन्मतम् । तथाच श्रुतिः । 'सत्यं ज्ञानमनंतं ब्रह्म । यो वेद निहितं गुहायां परमव्योमन् सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विप-श्चिता' इति । विपश्चितेतिशब्देन इतीतिशब्देन च सर्वान्कामान्सोऽश्नुत इति यत्सर्वकामोपलक्षितमानंदमश्नुते तद्विपश्चिता सर्वज्ञत्वादिधर्मयुक्तेन सगुणेन ब्रह्मणा हेतुभूतेनेत्यर्थः । आनंदानुभवस्य योगसिद्धिरूपत्वात्सगुणेन योगसिद्धिरित्यर्थः । सैव जीवन्मुक्तिः । 'यतो वाचो निवर्तंते अप्राप्य मनसा सह । आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' इति श्रुतेः । शेषं पूर्वं संग्रहतो व्याकृत-मेव । अतः श्रद्धया परयोपेता इति विशेषादहं तेषां समुद्धर्तेति भगवताप्यु-क्तम् । यथा च षष्ठाध्याये निर्विशेषसविशेषयोगद्वयमुक्त्वाऽध्यायांते 'योगि-नामपि सर्वेषां मद्गतेनांतरात्मना । श्रद्धावान्भजते यो मां स मे युक्त-तमो मतः' इत्युक्तम् । भगवानेवोद्धर्तेति श्रद्धावानित्यर्थः । स एवात्र द्वादशे स्मारितः 'श्रद्धया परयोपेतास्ते मे युक्ततमा मताः' इति । इत्यादि वेदवाक्येषु गीतायां च केवलाव्यक्तोपासका अव्यक्तमात्रोपासनाभिमानिनः सर्व-त्राभिमानतया पांडित्यबलादन्यथैव व्याकुर्वंति । तच्च वाक्येषु यथावदर्थस्फूर्ति-राहित्यं भगवति श्रद्धाराहित्यादेव । तथा च श्रुतिः 'यस्य देवे परा भक्ति-र्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः' इति । यस्य देवे परा भक्तिर्गुरौ च परा भक्तिर्यथा देवे तथा गुरौ च तदैक्येन परा भक्ति-स्तस्यैते कथिता ह्यर्थाः प्रकाशंते नान्यस्येत्यर्थः । तत्र गुरुभक्तिं कुर्वंति न देवस्य भगवतः । क्वचिद्ये देवेऽपि भक्तास्ते देवतांतरोपासकास्ततो न पक्वज्ञानिनो न च यथावदर्थज्ञास्तत्र केचिद्योगसिद्धिं तिरस्कुर्वाणाः केचित्साभिमानाः ज्ञाते तत्त्वे किं सगुणेनाधुनेत्याहुः । मुमुक्षूपास्यानादरादंतराभिमानिनां न योगसिद्धिर्न च यथाव-द्वेदाद्यर्थस्फूर्तिः । भगवत एव मुमुक्षूपास्यत्वात् । तथा च श्रुतिः । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धि-प्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' इति । यो ब्राह्मणो वेदविद्याप्रदः स एव गुरुः स एव देवश्च मुकुंदस्तदनादराच्चिदचिद्विवेकश्रवणमात्रेण साक्षादपरोक्षसंपन्ना वयमिति मानिनां न कापि सिद्धिः । तदुक्तं दशमस्कंधपूर्वार्धे गर्भस्तुतौ-

१ तै. २।१। २ तै. २।४।१। ३ भ. गी. ६।४७। ४ श्वे. ६।१८।

'येऽन्येऽरविंदाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः। आरुह्य कृच्छ्रेण परं पदं ततः पतंत्यधोऽनादृतयुष्मदंघ्रयः' इति। कृच्छ्रेण शास्त्राभ्यासादि-संन्यासग्रहणादि-क्लेशेन परं पदं जडनिषेधशेषं चिदात्मज्ञानाख्यं पदं आरुह्य ततः पतंति। कुतः। अनादृतयुष्मदंघ्रयस्ततः किमधुना भगवतः सगुणस्याराधनेनेति अनादरात्। अत एव त्वय्यस्तभावादविशुद्धबुद्धय इति। न च वाच्यं चिदचिद्विवेकज्ञानविषयेयं निंदेति। विमुक्तमानिन इत्युक्तत्वात्। न च भेदवादरता इत्यादिकल्पना। ननु चिदात्मज्ञानेन मामहं न जानामीत्यावरणभंगात्कथं परं पदमारुह्य पतंतीत्युच्यते। तथा सति मुक्तानां पुनरावरणसिद्धिरिति सिद्धमिति चेदेतावता आवरणभंग इति गर्भस्तुतावेव साधितत्वात्। '[2]सत्त्वं न चेद्धातरिदं निजं भवेद्विज्ञानमज्ञानभिदापमार्जनम्। गुणप्रकाशैरनुमीयते भवान् प्रकाशते यस्य च येन वा गुणः' इति। व्याकृतं च श्रीधरार्यैः सर्वत्र दर्शितः श्लोकश्च। कर्मफलं भक्तिं विना माभूत् मोक्षस्य ज्ञानैकसाध्यत्वात् किं भक्त्येति सानुशयान्प्रत्याहुः सत्त्वं न चेदिति। हे धातः, इदं सत्त्वं निजं तव वपुर्न भवेच्चेत्तर्हि विज्ञानं विशिष्टज्ञानं न भवेदित्यनुषंगः। कथंभूतं विज्ञानम्? अज्ञानभिदापमार्जनम्। अज्ञानं तत्कृता भिदा च उभयोरपमार्जनं निवर्तकम्। ननु जडानां बुद्ध्यादीनां यतः प्रकाशस्तद्ब्रह्मेति ज्ञानं भवेदेव। न। गुणप्रकाशैर्गुणावच्छिन्नैः प्रकाशैर्भवान् सर्वसाक्षी पूर्णः केवलमनुमीयते न तु साक्षात्क्रियत इत्यर्थः। अनुमानप्रकारमाहुः प्रकाशते यस्य च येन वा गुण इति। यस्य संबंधी अयं बुद्ध्यादिगुणः प्रकाशते यो गुणसाक्षीत्येवं येन बुद्ध्याद्यारूढेन प्रमात्रा निमित्तभूतेनायं बाह्यो गुणः प्रकाशते इत्यनुमीयत इत्यर्थः। शुद्धसत्त्ववपुषि त्वयि सेव्यमाने तु तदाकारेऽतःकरणे त्वत्प्रसादेन साक्षात्कारो भवेदिति भावः। इति श्रीधरार्यैरन्यथा व्याकर्तुमशक्यत्वादव्यक्तोपासनाभिमानिनामसंमत एवार्थो व्याकृतः। प्रायो यथावदेतैर्व्याक्रियत एव। क्वचिद्ब्रह्मण आत्यंतिकानिर्वाच्यत्वादिकं व्याकुर्वंति तन्न घटत इति दूष्य प्रायः समंजसमेव निरभिमानतया व्याकुर्वंति। क्वचिज्ज्ञात्वाप्यभक्ताभिमानिनोभयात्तत्सिद्धांतमनुसरंति। अत्र भगवतांतर्यामिणा तद्दूष्यते, तथापि श्रीधराचार्याः समा एव भगवद्भक्तिलेशकृतकृत्या नात्र संशयः।

प्रकृतमनुसरति भगवानंतर्यामी। नित्यविद्योपाधितयांतर्यामी वस्तुत आत्मैव प्रस्तुते चिदचिद्विवेकमात्रश्रवणस्यायं चिदात्मा सर्वप्रकाशक इति ज्ञानमात्रस्य न साक्षात्कारत्वं न चावरणभंगो यदा स्वरूपाकारं चित्तं वृत्तिशून्यं स्यात्तदानी-

१ भा. स्कं. १०।२।३२। २ भा. स्कं. १०।२।३५।

मेवावरणभंग इति सिद्धम् । न केवलमत्रैवायमर्थ उपपादित इति, किंतु भगवताप्येवमेव श्रवणमात्रस्य न साक्षात्कारत्वं घटत इति सूच्यते । तदुक्तं गीतायाम्— '¹आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित्' इति । यदा कश्चिदेनं श्रुत्वापि न वेद तदा श्रवणमात्रस्य न साक्षात्कारत्वमिति सिद्धम् । यदा श्रुत्वापि न वेद तदा नावरणं भग्नमिति सिद्धत्वात् । न च वाचं शृण्वन्नेव ज्ञातुं न शक्नोति बुद्धिमांद्यादिति श्रुत्वेति यथा बधिरस्येव श्रुत्वा न वेदेति वक्तुमनुचितत्वात् । तस्मादयं चिदात्मेति श्रुत्वाप्येनं न वेदेत्यनेन कश्चित्साक्षात्कारमप्राप्य भ्रष्टोऽपि भवतीत्यर्थः । मनननिदिध्यासनभगवदाराधनाभावादित्यभिप्रायः । '²आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः' इति श्रुतेरात्मश्रवणं त्वेवमेव यदनात्मनिषेधशेषत्वेनाधिगम्योऽयमात्मेति । तच्च जडप्रकाशकत्वेनानुमाने पर्यवसितं श्रवणमात्रं तत्तु धूमेनानुमितः पर्वताग्निरिव तत्र पर्वताग्नेरन्यत्वादनुमितो धूमादिति स्फुटं गम्यते । आत्मनोऽनन्यत्वात्साक्षात्कृत इति प्रतीयमानत्वादयमेव साक्षात्कार इत्युक्तस्तन्न घटते । यतस्त्वविद्ययापि मामहं न जानामीत्येवं यो वदति स एवात्मा स चायमेवात्मेति ज्ञातोऽपि तदितरवृत्तीनां सद्भावात्सत्त्वस्य तदेकाकारत्वपरिणामसिद्ध्यभावान्न सम्यगपरोक्षसाक्षात्कारः । यदा तु प्रकाश्यवृत्तीनां निरोधात्प्रकाशकमात्रस्य तदाकाराकारितेन सत्त्वेन साक्षात्कारस्तदैवात्मदर्शनम् । तदन्यथा तु श्रवणमात्रं, यतो वाच इति श्रुतेः । '³बुद्धिश्च न विचेष्टते तामाहुः परमां गतिं' इति च श्रुतेः । न हि करकंकणस्य दर्पणापेक्षेति न्यायेनात्र शास्त्रमपेक्षितम् । सकृच्छ्रवणमात्रेण श्रुतात्मनामस्माभिर्ज्ञातं साक्षात्कृतं ब्रह्मेति मानिनां सिद्धेरदर्शनात् । अत्राव्यक्तोपासनाभिमानिनो जडनिषेधशेषश्रवणं साक्षात्कारमित्युक्त्वा श्रोतव्यस्य मंतव्यस्य चिदचिद्विवेकश्रवणात्प्राक् परोक्षश्रवणे पर्यवसानं गमयित्वा चिदचिद्विवेकश्रवणं साक्षात्कारत्वेन व्याकुर्वंति तन्न घटत इति सिद्धम् । गुणप्रकाशैरनुमीयते भवानित्यादि । '⁴नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम्' इत्यादि श्रीमद्भागवते तत्र-तत्रोपपाद्यमानत्वात् । गीतायां च '⁵श्रुत्वाप्येनं वेद न चैव कश्चित्' इत्युक्तत्वात् । '⁶आत्मा वारे द्रष्टव्यः श्रोतव्यः' इत्यादिश्रुतेश्च । आत्मश्रवणं चिदचिद्विवेकमुखैरधिगम्यं न तदन्यथा श्रुत्युपक्रमविरोधाच्च । '⁷न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति' इत्याद्यात्मप्रकरणत्वात् । अत्रापि गीतावाक्ये केचित्काङ्क्षा श्रुत्वापि वेद न चैव

---

१ भ. गी. २।२९। २ बृ. २।४।५। ३ काठ. ६।१०। ४ भा. स्कं. १२।१२।५२। ५ भ. गी. २।२९। ६ बृ. २।४।५। ७ बृ. ४।५।६।

किम्, अपितु वेदैवेत्यादि व्याकुर्वंति तत्स्वसिद्धांताभिमानात् । श्रुत्वापि च नैव वेदेत्येवकाराद्राश्चर्यत्वमुक्तम् । यस्मादेवं तस्मात्प्रकृतेऽत्र श्रुत्या 'महः पुच्छं' इत्यनेन सगुणोपासना विधीयते 'महः पुच्छं प्रतिष्ठा' इति । मह एवास्य कोशस्य प्रतिष्ठा, अस्य कोशस्य प्रकृष्टा स्थितिरित्यर्थः । विज्ञानमयकोशतां प्राप्तस्य प्रतिष्ठा तु सगुणं ब्रह्मैवेत्यर्थः । महःशब्दवाच्यस्य विद्योपाधित्वाज्ज्ञातात्मनो निर्विशेषयोगपरस्य विद्ययैव वर्तमानत्वात् । तत्र ब्रह्माहमस्मीति श्रद्धाशिरसश्च ऋतसत्यवाच्यजीवेश्वरैक्येन सर्वत्र ब्रह्मनिरीक्षणायोत्प्रेक्षितयोः पक्षयोश्च जीवात्मोपमितस्य योगस्य च प्रतिष्ठा महःशब्दवाच्यस्योपाधिरूपा ब्रह्मविद्यैवेति भावः । यथा त्वानंदमयकोशे स्वविविधसंस्कारसहिता अविद्या निर्मूला भविष्यतीति द्रष्टव्यम् । न च वाच्यमानंदमयकोशसमाधिं प्राप्तस्य न सगुणभजनेन कृत्यमस्तीति । प्राप्तसमाधियोगस्य चास्मिन्नेव कोशे समाधीतरकाले वर्तमानत्वात् मुमुक्षोः साधनरूपोऽयं कोशः । प्राप्तसमाधियोगस्य प्रारब्धभोगाय वर्तमानकाले त्वनेनैव कोशेन लोके संचार इति श्रुत्याऽभिव्यज्यते । '**विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते**' इति श्रुतेः । कर्माणि तनुतेऽपि च विज्ञानं यज्ञं तनुत इत्यन्वयः । प्राप्तसमाधियोगः प्रारब्धशेषावशिष्टदेहत्वात्कर्माणि तनुते विस्तारयत्यपि च विज्ञानं यज्ञं तनुते विस्तारयति विशिष्टं ज्ञानं वृत्तियुक्तं ज्ञानमित्यर्थः । तं यज्ञं तनुते यज्ञं कृत्वा विस्तारयति । अग्नौ द्रव्यहोमो यज्ञः । तत्र द्रव्यसद्भावेऽप्यग्नौ हुतस्य दाहानंतरमभावस्य दृष्टत्वाद्योगिनो वर्तमानकाले घटादौ मृदिव पटादौ तंत्वादिवत् वृत्तिषु यदा वृत्तिप्रकाशकं ब्रह्मैव पश्यंति तदानीं तेन वृत्तीनां ब्रह्माग्नौ हविषामिव हुतत्वात्स तु कर्माणि तनुतेऽपि च विज्ञानं यज्ञमेव तनुते न तु कर्माणीत्यर्थः । ततो सिद्धविषयोऽयं विधिः न श्रद्धाप्रधानसाधकस्य, एवमस्याभ्यासलभ्योऽनुभव ईश्वरस्य नित्यमुक्तत्वात्स्वतःसिद्धोपाधिरेवेति, तदुपाधिमंतं भगवंतं सर्वे समुपासत इति महःपुच्छमित्यत्रोक्तसगुणब्रह्मणः स्पष्टतया सर्वोपास्यत्वं विधीयते '**विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते**' इति । कथंभूतं विज्ञानं? ब्रह्मज्येष्ठं ब्रह्मादिजगत्कारणमित्यर्थः। '**यो ब्रह्माणं विदधाति पूर्वं**' इत्यादिश्रुतिसिद्धत्वात् । भगवान् विष्णुरेव मुक्तमुमुक्षूपास्य इत्यर्थः । नन्वनुवेलमेतादृशे विज्ञानकोशे स्थितस्य निर्विशेषसमाधिना विज्ञानयज्ञदीक्षितस्य कृताशेषकर्मणां ब्रह्मत्वेन पर्यवसायित्वादिति चेत्प्राप्तानंदमयकोशसमाधेरेवायमनुभवो नान्नादिकोशक्रमेण प्राप्तविज्ञानात्मनः । तस्यापि यद्येवमनुभवः स्यात्सोऽपि तादृश एव, किं त्वानंदमये समाधौ न यावद्ब्रह्मसुखानुभवो न

१ तै. २।४।१। २ तै. २।५।१। ३ तै. २।५।१। ४ श्वे. ६।१८।

तावन्निःशेषतया वासनाक्षयः संभवतीति पूर्वसिद्धत्वात् । तथाप्येवमभ्यासे प्रवृत्तस्यापि समाधिसुखानुभवं विना त्वस्त्येव प्रमादः, तथापि यदि प्रमादो न स्यात् भवत्येव जीवन्मुक्त इत्यसंभावनामुखेनायमर्थोऽभिधीयते । '**विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते**' इति श्रुतेः । चेद्वेदेत्यनेन वृत्तिशून्येन चित्तेन वक्ष्यमाणं ब्रह्मपुच्छमित्यवशिष्टं निर्गुणमविदित्वा विज्ञानमेव चेद्वेदेत्यर्थः सूच्यते । सोऽपि तादृशोऽपि तस्माच्चेन्न प्रमाद्यति तर्हि शरीरे शरीरपातात्प्राक् जीवति शरीर इत्यर्थः । पाप्मनो वासनारूपस्य सर्वान्कामानश्नुते । वासनासमुद्भूताशेषकामान्भुंक्त इत्यर्थः । किं कृत्वा ? हित्वा तं पाप्मानं हित्वा त्यक्तवासनः सन्नित्यर्थः । सर्वकामभोगस्य सहैवासंभवात् '**एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति**' इति श्रुतेः । सर्वकामोपलक्षितं ब्रह्मानंदं शरीर एवाश्नुत इत्यर्थः । '**सोऽश्नुते सर्वान्कामान्सह**' इत्युपक्रमेऽप्युक्तत्वात्, किंतु प्राप्तानंदमयकोशस्यायमनुभवस्तथापि विज्ञानमात्रं चेद्वेद तस्माच्चेन्न प्रमाद्यति निर्विशेषसुखानुभवपर्यंतं प्रमादस्य संभावितत्वान्न संभवतीत्यर्थः । तथाच श्रुतिः-'**यदा पंचावतिष्ठंते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टते तामाहुः परमां गतिं । तां योगमिति मन्यंते स्थिरामिंद्रियधारणाम् ।** अप्रमत्तस्तदा **भवति योगो हि प्रभवाप्ययौ**' इति । तदा अप्रमत्तो भवतीति विहितत्वादत्र चेन्न प्रमाद्यतीति प्रमादस्य संभावितत्वात्तावदस्त्येव प्रमाद इत्यर्थः । '**आनंदं ब्रह्मणो विद्वान्न बिभेति**' इति च श्रुतेस्तावद्बिभेतीत्यर्थः । तस्मात्प्राप्तानंदमयकोशसमाधिरेव शरीरे पाप्मानं हित्वा सर्वान्कामानश्नुत इति सिद्धं, तस्मान्निर्विशेषसमाधिरेव जीवन्मुक्तिहेतुरित्यत आनंदमयकोशोऽभिधीयते । यद्वा न प्रमाद्यति शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते इत्येवार्थोऽस्तु । यथाह भगवान्वसिष्ठः-'**द्वौ क्रमौ चित्तनाशाय योगो ज्ञानं च राघव । योगो वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणम्**' इति अप्राप्तनिर्विशेषसमाधिरपि सम्यगवेक्षणरूपं '**विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च**' इत्येवं '**विज्ञानं ब्रह्म चेद्वेद तस्मान्न प्रमाद्यति**' चेद्यदि कश्चनैवं भवति चेत् स शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते इति । '**तेषामहं समुद्धर्ता**' इति । '**न मे भक्तः प्रणश्यति**' इति भगवता प्रतिश्रुतत्वात् । अत्र विज्ञानमयकोशेऽपि महःपुच्छमिति '**विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते**' इति विहितत्वात् सगुणोपासको यदि भगवदंगीकृतः कश्चनैवं वा यदि स्याद्भगवदनुग्रहान्न प्रमाद्यति चेत्सोऽप्येवं शरीरे पाप्मनो हित्वा

१ तै. २।५।१। २ बृ. ४।३।३२। ३ तै. २।१। ४ काठ. १।६।१०। ५ तै. २।९। ६ तै. २।५।११। ७ भ. गी. १२।७। ८ भ. गी. ९।३१। ९ तै. २।५।११।

कामानश्नुते इति द्रष्टव्यम् । न केवलाव्यक्तोपासकः स न यावत्सगुणं शरणं गच्छति न तावत्तस्य सिद्धिरिति सिद्धत्वात् । तथापि प्रमादस्य संभावितत्वात्सम्यगशुद्धचित्तस्य भगवतश्चरणकमलविश्लिष्टस्याप्यानंदमयकोशप्राप्तिरेव पूर्णप्राप्तिः सैव प्रमादशंकाराहित्याज्जीवन्मुक्तिरित्यत आनंदमयकोशो विधीयते '**तस्माद्वा एतस्माद्न्योऽन्तर आत्मानंदमयः**' इति । तस्मात्पूर्वोक्तात् वृत्तिविशिष्टज्ञानरूपाद्विज्ञानमयात्, एतस्मादस्य कोशस्य शुद्धविवेकमात्रस्य पुच्छत्वेनावशिष्यमाणाद्ब्रह्मणोऽप्यन्य इत्यर्थः । परिशिष्टनिरुपाधितत्त्वाकारपरिणतेनापि सत्त्वेन शबलितत्वादन्य इत्युच्यते । वस्तुत एकमेव तत्त्वमन्नमयादारभ्यैतत्पर्यंतं तत्तत्कोशसमन्वयेन तत्तदात्मेत्यभिधीयते, द्वितीयकोशे तद्व्यतिरेकेण ततोऽन्य आत्मेति विधीयते । तत्र '**तस्माद्वा एतस्मादन्यः**' इति श्रुतेस्तच्छब्दपंचम्यंतत्वेन पूर्वकोशव्यतिरेकश्च तत्राप्युपाधेः समन्वयात्तदपि शुद्धं तत्त्वं न भवतीत्येतस्मादिति पंचम्यंतशब्देन तदुपाधेरपि निरुपाधिव्यतिरेकश्च विधीयते, तथैवात्र पूर्वस्मात्कोशादन्यः कोशश्च पुच्छत्वेन वक्ष्यमाणत्वाच्चान्य इत्यभिधीयते । शुद्धसत्त्वस्य शुद्धे निरुपाधौ तन्मयत्वेन परिणम्य स्थितस्य पुनः प्रारब्धभोगाय दग्धपटायितेन रजस्तमोपाधिनाऽन्वीयमानत्वात्पूर्वकोशवदत्रापि ततोऽस्मादेतस्माच्चोभयवैलक्षण्यमभिधीयत इति द्रष्टव्यम् । अन्नादिविज्ञानांता आत्मनः सर्वेऽप्युपाधिमया इत्येवोक्ताः न तथायं चरमः कोशः किं त्वस्य कोशस्य शुद्धानुभवरूपत्वं सूच्यते '**आत्मा आनंदमयः**' इति । आनंदस्य वस्तुत्वान्निर्धर्मकत्वादात्मा सत्त्वेनानुभूयमानोऽत्र स्वस्वरूपमयः सत्त्वस्वरूपैकप्राचुर्यात् । मयट् प्राचुर्ये । स्वस्वरूपप्रचुरोपाधिरूप आत्मा एतत्कोशसंज्ञक इत्यर्थः । आनंदमयत्वात् । '**यो वै भूमा तत्सुखं नाल्पे सुखमस्ति**' इति श्रुतेः । अन्नादिविज्ञानांतानामुपाधिप्राचुर्यवन्नात्र किंतूपाधेः स्वप्राचुर्यं ततः पूर्णप्राप्तिरूपोऽयं कोशः । अयमेवार्थः सूत्रितो भगवता व्यासेन '**आनंदमयोऽभ्यासात्**' इति । एकैककोशव्यतिरेकेणावशिष्ट आत्मा विज्ञानमयकोशे योग आत्मेति श्रुतेरुक्तयोगाभ्यासानंद एव भवतीत्यर्थः । '**अथातो ब्रह्मजिज्ञासा**' इत्यादिसूत्रसूत्रितस्य जिज्ञासोरनुभवक्रमेण योजितेषु सूत्रेष्वेवमर्थसौकर्यात्, '**जन्माद्यस्य यतः**' इति सूत्रस्य '**यतो वा इमानि भूतानि**' इति श्रुतिमूलत्वात् श्रुत्युक्तजिज्ञासया भृगुणाऽन्नादिसमन्वयेन ब्रह्माधिगतत्वात् । '**तत्तु समन्वयात्**' इत्यन्नादिसमन्वयक्रमेणानंदमयोऽभ्यासादयं जिज्ञासुः स्यात्तदलमार्यैर्व्याकृत एवार्थो लौकिकप्रसिद्धो महाजनसंमतोऽपि ।

---

१ तै. २।५।१ २ तै. २।५।१ ३ तै. २।५।१ ४ छा. ७।२४।१
५ ब्र. सू. १।१।१२ ६ ब्र. सू. १।१।१ ७ ब्र. सू. १।१।२ ८ तै. ३।१।१ ९ ब्र. सू. १।१।३

ततः प्रकृतमनुसरति भगवानस्य व्याख्याव्याजभूतस्य कालक्षेपो माभूदिति । अथानंदमयकोशस्यांगानि च विधीयंते 'तस्य प्रियमेव शिरः' इति, स्वस्य यत्किमप्यात्यंतिकं प्रियं तदस्य शिरः प्रधानांगम् । यथा च बृहदारण्यके 'न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति' इत्यादिना 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति' इत्यंतश्रुतेः । तस्मात्प्रियमात्मतत्त्वं किंतु तदविद्यया तस्मिन्नध्यस्तो देह एव प्रियत्वेन प्रसिद्धस्तस्मात्तत्प्रीत्या संस्कृतस्य चित्तस्यानाद्यविद्यया न वस्तुतः प्रियस्यात्मनो ज्ञानमस्ति । तथा सति केनापि भाग्योदयेन ज्ञातेऽपि निजात्मनि पूर्वसंस्कारेणापहतस्यास्य न यावदव्यभिचारितया केवल आत्मा प्रियो भवति, न तावत्समाधिस्थैर्यं ततोऽस्य पूर्वकोशे योग आत्मेत्यभ्यासो विहितस्तत्र श्रद्धाद्यंगदार्ढ्येन ऋतसत्यपक्षाभ्यां सर्वत्र ब्रह्मनिरीक्षणेन यदात्मप्रियत्वव्यभिचारपदानि देहादीन्यप्रियाणि भूत्वा केवल आत्मैव प्रियो भवति, तदास्य सर्वत्र विरक्तस्यात्मैकप्रियस्य समाधिरूप आनंदमयकोशोऽभिव्यक्तो भवति । तस्मादस्य प्रधानांगं सहजनित्यनिर्व्याजात्मप्रियत्वमित्यर्थः । 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः' इत्यादिश्रुतेस्तस्यैवात्मनः साक्षात्कारस्य विहितत्वाज्जडनिषेधशेषचिदात्मश्रवणादिसंपन्नस्यायमेव साक्षात्कारः । किंचास्य प्रियं यदात्मतत्त्वं तदेव सुखं तदविद्यया विस्मृतत्वात्सुखं मे भूयादिति बाह्यसुखप्रियस्य, यदा तु वास्तवं प्रियं सुखं त्विदं त्वधिगतं स्यात्तदा बाह्यसुखविरक्तस्य समाधौ चित्तं निश्चलं स्यादतोऽस्यैवानंदावरणभंगस्तत इदमेव प्रधानांगं स्वरूपसुखानुभवरूपं, यदा त्वेवमनुभवस्तदानीमेवानंदमयः कोश इति तात्पर्यम् । अयमानंदमयकोशस्य प्रथम आनंदानुभव इत्युक्तम् । एतावता खगपोतस्येव शिरोमात्रत्वेऽपि न यावत्पक्षोद्गमो न तावत्खगत्वधर्मः । ततस्तु 'मोदो दक्षिणः पक्षः ।' ततोऽपि सुखातिशयरूपो द्वितीयः 'प्रमोद उत्तरः पक्षः' इति । प्रकृष्टो मोदः प्रमोदः । अत्रेत्थं चिंत्यम् । यथाच शिरःशब्दः प्रधानांगवाचकस्तथा मोदप्रमोदौ सुखातिसुखशब्दौ पक्षसंज्ञितौ उपाधेश्चिदाकारपरिणामवाचकाविति गम्यते । पक्षाभ्यां यथा पक्षिणो नभसि यत्र नभो दृग्गोचरं यावच्छक्ति तत्र गमनं संभवति, तथा चिच्छक्तिर्यावद्विस्तारं स्वरूपं पश्यति तावत्स्वरूपैकरूपासती सुखातिसुखं लभत इत्यर्थः । पूर्वकोशोक्त ऋतसत्यपदवाचकजीवेश्वरैक्योपलक्षितब्रह्मणः सर्वत्र निरीक्षणेन ब्रह्मविस्तारसंस्कृता बुद्धिरत्रापि बहु-

१ तै. २।५।१। २ बृ. ४।५।६। ३ बृ. ४।५।६। ४ तै. २।५।१।

विस्तृता सती ब्रह्माकारं भजत इत्यनुभवः सूत्रित इत्यनुभवकोविदैरत्राधिगंतव्यम्। तथा चास्यार्थस्य प्रमाणसिद्धत्वाच्च। तदुक्तं भगवता '**यदा भूतपृथग्भावमेकस्थमनुपश्यति। तत एव च विस्तारं ब्रह्म संपद्यते तदा**' इति। भूतपृथग्भावं यदा त्वेकस्थं पश्यति घटादिपृथग्विकारमेकस्थं मृदीवैकस्थं यदा पश्यतीति न्यायेन जीवेशोपाधिनिषेधशेषं तत्त्वमधिगम्य घटादिविकारा मृदं विना न प्रकाशंते, तथा तमात्मानं विना न चराचरविकाराः स्फुरंतीति मननोद्भूतनिजानुभवेन विकारमात्रं यदा तस्मिन्नेकस्थं पश्यति तदा तदानीं न ततः प्रागयं वक्ष्यमाणोऽनुभव इत्यर्थः। तदेवाह। तत एव तस्मादेवात्मा संस्काराद्विस्तारं यथा स्यात्तथा ब्रह्म च संपद्यते। समाधौ निरुपाधौ ब्रह्मणि च बहुविस्तारं यथा स्यात्तथा बुद्धिः परिणम्य तिष्ठतीत्यर्थः। तदुक्तं योगशास्त्रे–'**मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः। योऽसंप्रज्ञातनामासौ समाधिरभिधीयते**' इति। बृहत्वाद्ब्रह्म यदपरिच्छिन्नत्वेन बहुविस्तृतं पूर्णं तदाकारतया तरंगाब्धिन्यायेनेत्यर्थः। ननु समुद्रे तरंगस्य तदाकारत्वे कोऽसौ विस्तारत्वविशेषः विस्तृतत्वं विनापि विस्तृतत्वस्य सिद्धत्वादिति चेत्सत्यम्। तथापि प्रारब्धवायुवेगेन पुनस्तरंगत्वेन बुद्धेः पराग्वृत्त्यभिमुखत्वं झटिति माभूदिति यथा यथा बुद्धिर्विस्तारं प्राप्नोति तथा तथा सुखातिशयश्च चिरस्थैर्यं च लभते। बहुविस्तीर्णतया प्रसृतस्त तरंगस्य क्षिप्रं तरंगत्वं न संभवतीति न्यायात्। एवं प्रियमेव शिर इत्यनेन प्रियवस्तुप्राप्तिरूप एक आद्य आनंद उक्तः। ततो बहुविस्तारतया विस्तीर्णस्य सत्त्वस्य पक्षात्प्रेक्षया मोदः प्रमोदश्चेति सुखातिसुखरूपोऽनुभव उक्तः। एवं च सति वृत्त्यभावेऽपि सुखवृद्धिरूपधर्मत्वसंस्कृतत्वात् कश्चन धर्मो दृष्ट इति सिद्धम्। तथा सति ब्रह्मणो निर्धर्मकत्वान्न चायं शुद्धोऽनुभव इत्यतः प्रियमोदप्रमोदवाच्यस्यानंदत्रैविध्यस्य नात्यंतिकं समाधिस्थैर्यत्वम्। तस्माच्छिरसः पक्षयोश्च यथा जीवात्मानं विना वैयर्थ्यं, तथा निर्धर्मकब्रह्मानुभवरूपशश्वदानंदं विना न स समाधिरित्यतोऽस्य सुपर्णोत्प्रेक्षितस्य कोशस्यात्मा विधीयते '**आनंद आत्मे**'ति। यद्यपि सर्वेऽप्यानंदपर्यायशब्दा एव, तथापि प्रियवस्तुलाभोपलक्षितः प्रथमः। द्वितीयः केवलसुखवाचको मोदशब्दोऽपि प्रमोदेन तरतमभावस्य दर्शितत्वादनात्मपक्षशब्दाभ्यामुत्प्रेक्षितत्वात्कस्यचिद्धर्मस्य दृष्टत्वादत्रानंद आत्मेत्यात्मसादृश्येन ह्रासवृद्धिविस्तारसंकोचधर्मसंस्काररहितोऽयं चतुर्थ आनंद एव केवल आनंद इत्यर्थः। किंतु पूर्वोक्तैः शिरआद्यंगभूतैर्विना नास्य स्थितिर्यथा शिरआद्युपाधिं विना नात्मनोऽभिव्यक्तिः। प्रलयसुषुप्त्यादा-

---

१ भ. गी. १३।३०। २ तै. २।५।१।

विव निर्धर्मकत्वात् । न चात्मानं विना शिरआदिजीवनं शवस्येव जडत्वात् । एवमन्योन्यसापेक्षमत्र सूच्यते । प्रियशिरसा समाधेरुदय इत्येवानंदः शिरसायममुक इति प्रत्यभिज्ञेव कोशस्य प्रतीतिमात्रत्वं, मोदप्रमोदपक्षाभ्यां तु प्रियतरत्वाद्बुद्धेर्लब्धास्पदत्वात् । बुद्धेः स्वरूपाकारविस्तारश्च ततः स्थैर्यं च । एवं त्रयाणां मिथः सापेक्ष्यं सिद्धम् । तथैव शिरसा पक्षाभ्यां यथा खगजीवात्मनः प्रसिद्धिस्तथा प्रियमोदप्रमोदैरुक्तपर्यायैरानंदस्य केवलानुभवरूपस्याभिव्यक्तिरित्यपि । यथा च जीवात्मना शिरआदीनां साफल्यम्, तथा तुरीयानंदस्याभिव्यक्त्या शिरआदिभिः सिद्धस्य समाधेः पूर्णप्राप्तिरिति सिद्धम् । ततस्तु प्रियतरत्वाल्लब्धास्पदस्य सत्त्वस्य विस्तारं प्राप्तस्य सुखैकानुभवतया परिणतस्य तमेकं केवलं विना विस्तारतां गतत्वं च न स्फुरतीति रूपस्यानुभवस्यानंतत्वानुभव इति सद्भिरुच्यते स एवानंदानुभवश्च । स चानुभवो यावद्बुद्धिर्यथास्वशक्ति विस्तारतां न गच्छति न तावत्संभवति । विस्तारशक्तेर्मनोविस्ताररूपत्वाज्झटिति बहुविस्तारं गत्वा स्वत एव कुंठिता च भवति । तत्र वृत्तिशून्यत्वाद्यदा विस्तारगतत्वं च कुंठितत्वं च न स्फुरति तदा यत्स्वरूपाकारत्वं संभवति स एवानंतत्वानुभवरूप आनंद इत्युच्यते । यथा चेममर्थं छंदोगाः सनत्कुमारनारदसंवादेनामनंति । यथाह नारदः–'शोकस्य[1] पारं तारय' इति । सनत्कुमारः 'सुखं[2] त्वेव विजिज्ञासितव्यं' इति । नारदः 'सुखं[3] भगवतो विजिज्ञासे' इति । कुमारः 'यो वै भूमा[4] तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः' इति । नारदः 'भूमानं[5] भगवतो विजिज्ञासे' इति । कुमारः 'यत्र[6] नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यति यत्रान्यच्छृणोति यत्रान्यद्विजानाति तदल्पं यो वै भूमा तदमृतं अथ यदल्पं तन्मर्त्यम्' इति श्रुतिं व्याकरोति भगवान् । शोकस्य तन्मूलस्याज्ञानस्य पारं तारयेदित्यर्थः । तत्रोत्तरं सुखं त्वेव विजिज्ञासितव्यमिति विशेषेण जिज्ञासितव्यं सुखमेवेत्येवकारतुकाराभ्यामयमर्थः लोके जिज्ञासवः प्रायश्चिज्जडविवेकेन चिदात्मानमेव ज्ञातुमिच्छंति जानंति च, न तावता शोकपारतरणं संभवतीत्यर्थः । 'यतो[7] वाचो निवर्तंते अप्राप्य मनसा सह । आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' इति श्रुतेः । वृत्तिविरहितचित्तेनानुभूतस्य चिदात्मन एवानंदानुभवरूपत्वाज्जिज्ञासितव्यं तु सुखमेवेत्युक्तम् । तत्र नारदः पृच्छति 'सुखं[8] भगवतो विजिज्ञासे' इति । उत्तरमाह 'यो वै भूमा[9] तत्सुखं नाल्पे सुखमस्ती'ति । यस्तु

१ छा.७।१।३। २ सत्यंत्वेवेति लभ्यते नेयं। ३ छा.७।१६।१। ४ छा.७।२४।१। ५ छा. ७।२३।१। ६ छा. ७।२४।१। ७ तै. २।४।१। ८ छा. ७।१६।१। ९ छा. ७।२४।१।

भूमा अपरिच्छिन्नस्तत्सुखं, अल्पे परिच्छिन्ने न सुखं सुखेतरं दुःखमस्तीत्यर्थः। एतावता सुखदुःखयोरपरिच्छिन्नत्वपरिच्छिन्नत्वरूपवैलक्षण्यं निरूपितम्। तत्र दुःखरूपपरिच्छिन्नवृत्तिविशिष्टस्यापरिच्छिन्नसुखानुभवो न स्यादिति वृत्तिविरहितस्यैवापरिच्छिन्नानंत्यानुभवत्वात्सुखप्राप्तत्वमिति सूत्रयति 'भूमैव[1] सुखमि'ति एवकारेण परिच्छिन्नवृत्तिव्यावृत्तिः। तस्मादानंदस्यैवानंदत्वमिति सिद्धम्। तथा च प्रस्तुतेऽप्युपक्रमे 'सत्यं ज्ञानमनंतं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्सो[2]ऽश्नुते सर्वान्कामान्सह' इति श्रुतेश्चायमेवार्थः सूत्रितः। सत्यं कालत्रयाबाध्यं ज्ञानं चैतन्यमनंतमपरिच्छिन्नमित्येवं लक्षणत्रयं यो वेद स सहैकदैव सर्वज्ञो निरतिशयानंदमश्नुते। केवलं सत्यज्ञानलक्षणमात्रं वृत्तिविशिष्टचित्तेनानुभवगम्यं यो वेद स आनंदं नाश्नुत इति सिद्धम्। आनंदस्यानंतत्वलक्षणपरिचयार्थित्वात् च वृत्तिशून्यचित्तगम्यत्वात्। ततोऽत्र चरमे कोशे मोदप्रमोदाभ्यां पक्षाभ्यां पक्षिवद्ब्रह्मणामपरिच्छिन्नत्वानुभवो व्याख्यातः। 'तत[3] एव च विस्तारं ब्रह्म संपद्यते तदा' इति भगवदुक्तत्वाच्च पक्षाभ्यां नभसि पक्षिणो यावच्छक्ति नभोविस्तारस्यानुभव एवानंत्यानुभवः। नभसः परिच्छेदादर्शनात्। अत्र बुद्धेश्चानंत्यानुभवो यथाशक्ति ब्रह्मविस्तारानुभव एव स एवानंदानुभव भूमैव सुखमिति श्रुतेः। तस्मादत्र मोदप्रमोदशब्दाभ्यां स्वरूपे बुद्धेर्विस्तार एव व्याकर्तुमुचित इति व्याक्रियते भगवतांतर्यामिणा। भगवत इत्यनुभवरूपत्वात्। एवं मोदप्रमोदशब्दाभ्यां क्रमप्राप्तोऽनुभवः सूत्रितोऽपि स्वरूपे बुद्धेः प्रसरशक्तिस्फूर्तिधर्मस्तत्र यावत्स्फुरति तावत्तु न संपूर्णः समाधिरित्यतो बहुविस्तृतापि बुद्धिस्तत्र स्वप्रसरशक्तेः कुंठितत्वात्स्वरूपाकारा सती तदन्यं कमपि मोदप्रमोदवाच्यं सुखतारतम्यधर्मं स्वप्रसरशक्तिस्फूर्तिधर्मं वा यत्र न जानाति स आनंद आत्मेति तुरीयश्चरम आनंदानुभवो व्याख्यातस्तमानंदमुपदेष्टुकामः सनत्कुमार आह 'भूमा त्वेव विजिज्ञासितव्यः' इति। भूमा तु विजिज्ञासितव्य एव अपरिच्छिन्नत्वमनुभवितव्यमित्यर्थः। यद्यपि बुद्धिः स्वशक्त्या स्वरूपविस्तारं पक्षी नभो विस्तारमिवानुभवति तथापि तत्र बुद्धेः प्रसरणधर्मस्य विद्यमानत्वात् ध्येयध्यातृविशेषस्फुरणान्न स आनंत्यानुभवरूप आनंदः किंतु ततोऽप्यन्यः कश्चनानंदानुभवः स भूमा स तु विजिज्ञासितव्यो भवतीत्यर्थः। तथा पृच्छति नारदः 'भूमानं[4] भगवतो विजिज्ञासे' इति। यद्येवं तर्हि तं भूमानं ज्ञातुमनुभवितुमिच्छामीत्यर्थः। उपदिशति 'यत्र[5] नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति। नान्यत्पश्यति कमपि आकारम्। वृत्तिशून्यं चित्तं भवतीत्यर्थः।

१ छा. ७।२४।१। २ तै. २।१। ३ भ. गी. १३।३०। ४ छा. ७।२४।१। ५ छा. ७।२३।१। ६ बृ. ४।५।१५।

एतावता संकल्परूपस्य मनसस्तत्राभावमभिधत्ते । नान्यच्छृणोतीति श्रवणस्य शब्दविषयत्वाद्वाचां निषेधः । 'यतो वाचो निवर्तंते अप्राप्य मनसा सह'[1] इति श्रुतेः । नान्यद्विजानाति अनंतत्वानुभवजिज्ञासया प्रसृताया बुद्धेः प्रसरणधर्मादि किमप्यन्यन्न विजानाति स भूमा, एवमनुभवति यः स एव भूमानं विजानाति तस्यैवानंदानुभव इत्यर्थः । शेषं स्पष्टम् । इति छांदोग्यवाक्यार्थः ।

प्रकृतमनुसरति नित्यमुक्तो भगवान् । एवं प्रियादित्रिविध आनंद उक्तोऽपि तुरीय आनंद आत्मेत्युक्त एव । केवलस्यापरिच्छिन्नत्वानुभवो मुख्यः तदानीं संपूर्णः समाधिरिति सिद्धम् । तथाप्यनुभवधर्मस्य विद्यमानत्वाद्ब्रह्मणोऽनुभव एवायं न तु साक्षाद्ब्रह्ममात्रं तदिति वाच्यम् । तदाकारपरिणतमनसस्य पुनः प्रारब्धभोगवायुना सिंधुरूपेण परिणतस्य तरंगस्येव भूयस्तरंगत्वप्राप्त्यागत्वात् । तथा सति न यत्रानुभवधर्मोऽपि तत्कीदृशं ब्रह्मेत्यपेक्षानवोधं नास्तित्वस्यनुभवानुभूयमानयोर्व्यतिरेकेण केवलं यत्तदिदमित्यभिधत्ते 'ब्रह्मपुच्छं प्रतिष्ठे'ति[2] । बृहत्त्वाद्ब्रह्म पूर्णमपरिच्छिन्नमित्यर्थः । तदस्य कोशस्य पुच्छं अनुभवेऽप्यवशिष्टम् । यथा विहगस्यावशिष्टमंगं पुच्छं विहगशरीरादनन्यमपि प्रयोजनहीनमंगं शिरःपक्षवत् प्रयोजकत्वाभावात्, पुच्छहीनानां खगानां जीवनवृत्तिनिर्वाहस्य दृश्यमानत्वादिति दृष्टांतः । दार्ष्टांतिके यावत्स्वरूपे परिणता बुद्धिस्तावत्समाधावनुभवगम्यं प्रयोजकं तदग्रे यदपरिच्छिन्नमवशिष्टं तत्पुच्छं तस्य निर्धर्मकत्वात्तत्र बुद्धेरनुभवाभावाच्च पुच्छवत्प्रयोजनहीनमतः पुच्छं तदित्यभिधीयते । पुच्छं विनापि खगा जीवंति तद्वदनुभवे यावद्विस्तृता बुद्धिस्ततोऽग्रेऽवशिष्टं विनापि कोशस्य कोशत्वसिद्धेः पुच्छत्वेनोत्प्रेक्षितमिति द्रष्टव्यम् । ननु हेतुदृष्टांतवर्जितं कथमुपमीयत इति न शंकनीयम् । तदेतादृशमित्यनुक्तत्वादनुभवराहित्यम् । अत एव यावद्बुद्धेरनुभवस्तावच्च तदेव तस्यैवानुभवस्ततोऽस्य कोशस्य तदेव प्रतिष्ठा च प्रकर्षेण तिष्ठत्यस्यां स्थिताविति प्रतिष्ठा तस्माच्च आनंदानुभवः स एव ब्रह्मानुभवः । स च यावद्बुद्धिविस्तारस्तावन्मात्रः कोशस्तदग्रे केवलमानंदमात्रं ब्रह्म न तत्रानुभवरूपो धर्मः । अत्रायमनुभवः 'यो वै भूमा तत्सुखं'[3] 'अनंतं ब्रह्म यो वेद' इत्यादिश्रुत्युक्तप्रकारेण प्रियादिचतुर्विधानंदानुभवे यो भूमानुभूतस्तस्मिन् यथा यथा बुद्धिर्विस्तारतां प्राप्ता तथा तथा ब्रह्मचैतन्यानंतत्वे यावच्छक्ति विस्तीर्णाया बुद्धेः स्वात्मत्वेनानुभव उपपन्न एव ततस्तदानंत्यादकुंठितगतिः सती तदाकारेण परिणम्य स्थितापि समाधीतरकाले तदनुभवपरामर्शे तु यावद्बुद्धिर्विस्तृता सती तदेकरूपा परिणता ततोऽप्यग्रे पर्यवशिष्टमनंतं ब्रह्म न यत्र विस्तीर्णापि

१ तै. २।४।१। २ तै. २।४।२। ३ छा. ७।२४।१।

बुद्धिः प्राप्ता तदनुभवगोचरत्वाभावादनुभवधर्मरहितं परं ब्रह्मैव केवलं तत्पुच्छमिति निश्चीयते। न च वाच्यमेकत्रानुभवः स एवापरिच्छिन्नस्य सर्वस्यास्यानुभव इति। घटमठाद्यैः क्वचिद्व्याप्तोऽप्याकाशस्तदग्रेऽवशिष्यत इत्येव वाच्यम्। घटमठमहदाकाशा इति प्रसिद्धत्वात्। बुद्धिः कथं वा प्रसरति कथं वा प्रसृतायाश्च बुद्धेरग्रे तदवशिष्यत इति चेत्तत्रायमनुभवः। यदा तु बुद्धिः स्वदेहमात्रं जानाति तदा तावन्मात्रं चैतन्यमात्मतयावेदनं तदग्रे स्वतःसिद्धमात्मचैतन्यम्। यतस्तु यदा ग्रहादौ बुद्धिः प्रविशति तदानीं तावद्विस्तृता सती तावंतं देशं यच्च जानाति तदप्यात्मचैतन्येनैव किंतु न तदग्रे। यदा तु तदाग्रेऽपि बहुदूरतरदेशांतरं श्रुतं स्वर्गादिकं वा मनसा कल्पयति तदानीं तावद्विस्तीर्णा सती यद्यत्किमपि जानाति तत्तच्चात्मचैतन्येनैव ज्ञातृज्ञानयोरेकत्वात्। न च चैतन्यं बुद्धिवद्विस्तारं संकोचं च प्राप्नोतीति वक्तुं शक्यते तस्याचलत्वात्, किंतु बुद्धेर्मनसा सह तावद्विस्तारगमनात्प्रागेव तस्यानंतत्वेन सर्वत्र विद्यमानत्वमित्येव वाच्यम्। '**अनेजदेकं मनसो जवीयः**'[1] इति श्रुतेः। अकंपत्वेऽपि जवीय इत्येतावता मनसो जवातिशयत्वाद्यावन्मनो गच्छति तदग्रे ततः प्रागेव स्वतःसिद्धमित्यर्थः। तदुक्तमष्टमस्कंधे '**मनोऽग्रयाणं**'[2] इति। मनसोऽग्रे गमनमिव गमनं यस्य तत्स्वतःसिद्धमित्यर्थः। किंतु न यत्र बुद्धिर्गच्छति न तत्र तदात्मत्वेन प्रतीतिविषयं भवति। यथा सुषुप्तौ तमोविलीनायां केवलमात्मत्वप्रतीतिराहित्यं, तथा चैतन्येन यत्र बुद्धिः प्रसरति न तत्रानुभवः। यतस्तु या च बहुविस्तृता बुद्धिस्तावदात्मचैतन्येन यं कमपि विशेषं जानाति सैव यदा देहमात्रं पश्यति न तदा तदग्रे स्वतःसिद्धं चैतन्यमप्यस्या अनुभवगम्यं भवतीति सर्वानुभूतम्। एवमाकारविशेषकल्पनया यथा चैतन्यमेवाश्रित्य बुद्धिः मनो जवेन प्रसरति तथैव विशेषरहिते चैतन्ये बहुविस्तारं गत्वा ततः कुंठिता सती परिणता भवतीति स एवानंत्यानुभवः। '**यो वै भूमा**' इत्यादि '**यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा**'[3] इति श्रुतेः। तदग्रे न यत्र बुद्धिर्न चानुभवस्तदनुभवधर्मराहित्यात्तत्कोशस्य चरमांगमिति। ननु यद्यनुभवहीनं ब्रह्म तर्हि शून्यमिति पूर्वपक्षः। निर्धर्मकत्वात्स्थूलधियां तथा तर्कागोचरत्वात्। श्रुतयोऽप्यत्र वदिष्यंति '**न हि परमस्य कश्चिदपरो न परश्च भवेद्वियत इवापदस्य तव शून्यतुलां दधतः**'[4] इति। शून्यतुलां दधतः शून्यसाम्यं भजत इत्यर्थः। निर्धर्मकत्वात् शून्यवन्न शून्यम्। सुषुप्तौ बुद्धौ तमसि विलीनायां प्रतीत्यभावेऽपि सुखमहमस्वाप्समिति बुद्धिमाश्लिष्य तस्य सुखस्य स्मर्यमाणत्वात्सकलपुरुषार्थसाध्यं सुखमेव यदि शून्यं स्यात्तदा त्वनुभवधर्महीनं ब्रह्मशून्यमिति

१ ईश. ४। २ भा, स्कं. ८।५।२६। ३ छा. ७।२४।१। ४ भा. स्कं. १०।८७।२९।

शंकावसरः । न हि शून्यस्य तत्र सुखानुभवो वक्तुं शक्यते । ननु तत्रानुभवो न दृश्यत इति चेद्बुद्ध्यभावात् तर्हि शून्यमिति चेद्बुद्ध्याश्लेषकाले तत्सुखमिति प्रतीतिर्न स्यात् । ननु सुषुप्तौ द्वितीयाभावात्किं सुखं कस्तस्य भोक्तेति चेदवशिष्ट एकः स एव स्वयं सुखमात्रस्तत्र दुःखविश्लेषत्वात्सुखमेवावशिष्यते । पुनर्बुद्धेरा-श्लेषकाले तस्य सुखस्यानुभवरूपेण स्मर्यमाणत्वान्न शून्यं तत्सुखं भवितुमर्हति । न च सुषुप्तौ सुखं नास्तीति शून्यवादिभिरपि वक्तुं शक्यते । न च स्वतःशून्यं परप्रकाशकं च भवितुमर्हति । अत्र सुषुप्त्यवशिष्टस्य प्रतीतिधर्मरहितस्य बुद्ध्या-दिप्रकाश्यानां प्रकाशकत्वात् । ननु बुद्धिरेव स्वप्रकाशेति भवत्विति चेद्बुद्धेर्वृत्ति-रूपत्वाद्वृत्तीनां त्रिक्षणावस्थायित्वात् । न हि घटवृत्तौ पटो दृश्यते । न च पटवृत्तौ घटाकारः । चैतन्यस्य स्फटिकोपलवज्जपाकुसुमादिसन्निकर्षात्तत्तदाकारेण प्रतीयमान-त्वेऽपि तत्तद्वृत्तिमात्रप्रकाशकस्यैकरूपत्वात्तत्तदाकारेण प्रतीयमानत्वेऽपि नैर्मल्यस्य शाश्वतत्वात् । न च बुद्धिरेव स्वप्रकाशेति वक्तुं शक्यते । सुषुप्तौ तस्याः शून्यप्राय-त्वात् । अथ च तां विनाप्यात्मनः सद्भावस्य सुखमहमस्वाप्सं इत्यभिसंधीय-मानत्वात् । ननु सुषुप्तौ बुद्धौ तमसि विलीनायां प्रतीत्यभावात्तस्यां प्रबुद्धायां पुनरात्मनः प्रतीतिधर्मस्य दर्शनाद्बुद्धिरेवात्मानं प्रकाशयित्री भवत्वितिचेत् काष्ठ-मग्निं प्रकाशयतीत्यपि स्यात् । तदभावे तदभावः । यथा काष्ठादिकिमपि दाह्यं विना कार्ष्णायसादिकमप्युपाधिं विना नाग्निर्दृग्गोचरो भवति तथाप्यग्निः प्रकाशकः काष्ठादिकं सर्वं प्रकाश्यं यथा तथा बुद्ध्यादिभिः प्रतीयमानोऽप्यात्मैव स्वप्रकाशः प्रकाश्यप्रकाशको न काष्ठादिवद्बुद्ध्यादि । तत्र यथा काष्ठकुपीटायोगोलकादिविवि-धोपाधिष्वेक एव प्रकाशकोऽग्निस्तथा नानाकारासु वृत्तिषु चिदात्मा त्वेक एव ततोऽत्र न शंकावसरस्तस्मात् प्रतीतिहीनत्वादेव निर्धर्मकं ब्रह्मेति श्रुतिभिः प्रतिपाद्यते । किं त्वत्र शून्यवादशंकिता आर्याः साक्षित्वपर्यंतमेव ब्रह्म व्याकुर्वंति, यच्च सत्त्वैकमात्रेण चित्तेनानुभवविषयमात्मत्वं तावदेव ब्रह्म केवलमित्याहुस्तन्मते सुषुप्तावेवमात्मत्वानुभवाभावात् । तथैव लयशेषं च । तथा सति न साक्षित्व-धर्मविशिष्टं केवलं ब्रह्म किंतु तन्मात्रविशिष्टं सुषुप्तावनुभवाभावात् । यदि समाधिवदनुभवगम्यं सुषुप्तावपि चेदात्मानुभवरूपं ब्रह्म तर्हि न कस्यापि संसारः स्यात् । समाधिसुषुप्त्योरेकरूपत्वात् । समाधौ विद्यमाना बुद्धिः सुषुप्तौ नास्ति तमोलीनत्वात् ततो बुद्धेस्तत्र नानुभवस्तस्मादत्र परोक्षसाक्षात्कारे बुद्धिव्यतिरिक्तं सुषुप्त्येकसिद्धमित्येवाधिगम्यं तत्पुच्छत्वेनावशिष्टम् । नन्वेव-मपि बुद्धेरनुभवगम्यमिति सिद्धम् । किं ततोऽत्रावशिष्टमिति चेदपरिच्छिन्नमित्यपि ब्रह्म न बुद्धिगोचरं भवति बुद्धेः परिच्छिन्नत्वात्परिच्छिन्नं अप्रमेयस्यापरिच्छिन्नत्वा-संभवादनर्थसिद्धेर्नायमर्थः । किं तु बुद्धिविस्तारावशिष्टं तदेव केवलं ब्रह्म यत्रात्मत्व-

प्रतीत्याधिगम्यं तत्र तदेव बुद्धयानुभूयमानं न केवलं किं तु बुद्धेः केवलस्यानुभवः स इति वाच्यम्। तदेवानुभवात्मकं ब्रह्म सगुणं नित्यानंदानुभवस्वरूपं सगुणस्य योगैश्वर्यरूपत्वात्। तत्रेदं योगरूपं च 'स्वाभाविकी ज्ञानबलक्रिया च' इत्यादि शक्तियुक्तत्वात्तदैवैश्वर्योपाधिरूपम्। तत्र भगवदनुविधानां तद्योगात्मना केवल-ब्रह्मानुभव इति सिद्धम्। विद्याया अविद्यावदनेकत्वाभावात्तस्याश्चेश्वरत्वोपाधि-रूपत्वात्। 'उपस्थाय प्रथमजामृतस्यात्मनात्मानमभि संविवेश' इति श्रुतेः। 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वां' इत्यादिश्रुति-सिद्धत्वादीश्वरोपाधिभूतयैव विद्यया ब्रह्मात्मानुभव इति निखिलनिगमागमसिद्धांतः। ततः प्रस्तुते श्रुतिस्तुतिचतुर्थश्लोके 'यदि ते अनुविधास्तर्हि पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः सदसतः परं त्वमथ यदेष्ववशेषमृतमिति'। अन्नमयादिचरमकोशस्त्वम्। अथेत्यनंतरं तवानुविधत्वानंतरं तु यत्सदसतः परमवशेषं ऋतं सत्यं ब्रह्मपुच्छं प्रतिष्ठेति सर्वकोशावशेषं तदेव तदनंतरं फल-मित्यर्थः। तद्ब्रह्मपुच्छं त्वेवं यत्र बुद्धिविशेषानुभवोऽपि न संगच्छते। यत्प्रलय-सुषुप्त्यादौ सर्वात्मतत्त्वमवशिष्यते समाधौ तस्यानुभवरूपा बुद्धिर्भवतीत्यनुभव इत्युच्यते। बुद्धेश्च तच्छक्तित्वात्स्वशक्त्यानुभवरूपं तद्ब्रह्मेति वाच्यं न केवलम्। ननु यावत्प्रारब्धशेषं तावदेवमनुभवः ततः कैवल्ये को वा विशेषोऽस्ति यदर्थोऽयं प्रयासः सुषुप्तिसाम्यादनुभवराहित्यादिति चेत्। उपाधिप्रियाणामुपाध्यभिमानि-नामुपाधितादात्म्ये सुखमस्तीति मानिनामयं पूर्वपक्षः अदीर्घदर्शित्वात्। यावदुपा-धिस्तावद्दुःखं क्वचित्सुखाभासस्य दुःखैकमात्रत्वादुपाधिर्दुःखरूप इति दीर्घदर्शिनां सिद्धांतः। तन्नाशाय प्राप्तेऽपि ब्रह्मात्मत्वज्ञाने प्रारब्धशेषांतमनुभवरूपस्योपाधेर्विद्य-मानत्वाद्दग्धबीजप्रायत्वात्ततो दुःखांकुरोद्गमाभावो नान्यथा शश्वद्दुःखरूपत्वात्। ततः परिसमाप्ते प्रारब्धशेषे केवलसुखसमुद्रे तदनुभवरूपस्य सत्त्वकल्लोलस्य तदेक-मात्रत्वेनावशिष्टस्य सकलजीवन्मुक्तानामनुभववेद्यत्वेऽप्यहो केषांचिदुपाध्यभिमानिनां उपाध्यभावात्किं तत्र सुखं कः पुरुषार्थ इति संदेह उत्पद्यते। प्रारब्धशेषपर्यंतं यस्य सुखस्यानुभवस्ततः परं तत्सुखमात्रत्वेनावशेष इत्येव पुरुषार्थः। नृपसन्मानान्नृप-पदप्राप्तेर्लाभातिशयस्तत्र सर्वेषां मानार्हाणां स्वयमेव मानप्रदः, इदं सर्वेषां जीवन्मुक्ता-नामनुभवैकवेद्यं कस्ततः परो विशेषः? यदि नैवं तर्हि 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः अस्य जननमरणस्वर्गनरकविषयसुखदुःखं सर्वं च ब्रह्मैव। यद्युपाधिप्रियश्चोपाधि-रूपप्रतीतेरेवात्मत्वं मन्यमानस्तर्हि तत्र देहोपाधिश्च सर्वं तदेव तथा वा भवतु। तद्दुःखमिति मत्वा केवलं ब्रह्माधिगम्य दुःखमुक्तो दुःखबीजोपाधिवर्जितः सर्वे-

१ श्वेता. ६।८। २ मुं. ३।२।३। ३ छा. ३।१४।१।

जीवन्मुक्तानुभवगम्यो वा भवतु । तथा च श्रुतिः 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद संतमेनं ततो विदुः' इति । असद्ब्रह्मेति देहात्मत्वं चेद्वेदेत्यर्थः । तर्ह्यसन्नेव भवति पुनः पुनर्देहमेव प्राप्नोतीत्यर्थः । अस्ति ब्रह्मेति चेद्वेद किमपि धर्मवर्जितं वस्तुमात्रं केवलं सुखमनुभवातीतमनुभवैकवेद्यं यदस्ति तदस्ति ब्रह्म । 'अस्तीत्येवोपलब्धव्यः' इति श्रुतेरेवकारादस्तिमात्रं शून्यत्वरहितं सर्वप्रकाशकं किमपि अस्तीत्येवोलब्धव्यं तद्ब्रह्म चेद्वेद उपाधियुक्तप्रतीतिरूपात्मप्रीतिं त्यक्त्वा दुःखमुक्तिर्मे भूयादिति दीर्घदर्शी तदस्ति ब्रह्मेतिमात्रं चेद्वेद ततस्ततः परं तदात्वेन संतं विदुः जीवन्मुक्ता एवमेवानुभवेयुरित्यर्थः । अशेषदुःखराहित्यं चाशेषसुखैकबीजस्वरूपत्वं जीवन्मुक्तानुभवगम्यत्वं मुक्तिस्वरूपमिति न जानाति । उपाधिं विना स्वतःप्रतीत्यभावात् । यदि स्वतःप्रतीतिः काप्यस्तीति चेदुपाधियोगादेका प्रतीतिः स्वत एका प्रतीतिरिति सिद्धे देवदत्तप्रतीतेर्यज्ञदत्तप्रतीत्यसंभवात् । ब्रह्मैवेतिप्रतीतेरीश्वरत्वप्रतीतिर्न स्यात् । तत्र जीवत्वप्रतीतिः स्यात् । तस्माद्ब्रह्म प्रतीतिप्रकाशकं न स्वतःप्रतीतिमत् । तदस्य कोशस्य पुच्छम् । यस्मात्समाधिगम्यत्वं तदाकारपरिणतबुद्धियुक्तबुद्धेः तच्छक्तित्वात्स्वशक्तियुक्तयोगानुभवस्वरूपं न तत्केवलं सुषुप्तावनुभूयमानम् । न च तच्छून्यं सर्वप्रकाशकत्वात् 'यद्वै तं न पश्यति पश्यन्वै तद्द्वैतं न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते विनाशित्वान्न द्वितीयमस्ति ततोऽन्यद्द्वितीयं यत्पश्येत्' इति श्रुतेः । नन्वात्मनः सुषुप्तिसाक्षित्वादस्यैवानुभवरूपः कश्चन धर्म इति न च वाच्यम् । तदीश्वरोपाधेर्न केवलस्य साक्षित्वधर्मोऽपि संगच्छते । सुषुप्तौ जीवस्य चिदैक्यमात्रं न सुषुप्तिसाक्षिण ईश्वरोपाधेः केवलस्य साक्षित्वधर्मोऽस्य वक्तुं शक्यते । न च साक्षित्वराहित्यमेव विधीयते । यदि साक्षित्वैकस्वरूपं ब्रह्म तर्हि प्रलये स्वरूपहानिप्रसंगस्तस्मान्मायाशबलितस्यैव साक्षित्वं न केवलस्य यदेव लये तदेव सुषुप्तौ, किंतु तत्रेश्वरस्य योगनिद्राप्रसंगान्न साक्षित्वधर्मोऽवशिष्यते । सुषुप्तावीश्वरोपाधेः साक्षित्वं न केवलस्य तत्राविद्याशबलितस्य प्रतिबिंबस्य चिदैक्यमात्रत्वात्केवलस्य ब्रह्मणः साक्षित्वाघटनात्तस्मिन् लीनस्य न तत्र साक्षित्वादिप्रतीतिः किंतु प्रलयवदैक्यमित्येव । तथा च श्रुतिः 'यथा सौम्य मधु मधुकृतो निस्तिष्ठंति नानात्ययानां वृक्षाणां रसान्समवहारं गमयंति । ते यथा न विवेकं लभंतेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः प्रजाः सति संपद्य न विदुः सति संपत्स्याम' इति ।

---

१ तै. २।६।१। २ का. ६।१३। ३ छां. ३।१।२।

तस्माद्यस्य समाधौ निर्विशेषानुभवोऽस्ति न तस्य सुषुप्तिसाक्षित्वं वक्तुं शक्यते । न च वाच्यं समाधौ यदि निर्विशेषानुभवस्तदेव पुच्छत्वेनावशिष्टं च कोऽत्र विशेष इति । उपाधेर्जडत्वात् शुद्धस्य निर्धर्मकत्वात्तयोर्योगेनात्मत्वप्रतीतिस्तत्र समाधौ निर्विशेषस्यात्मत्वेनानुभवस्तदितरकाले ज्ञानिनो मृदेकमात्रो घट इव ब्रह्मैकमात्रः प्रपंचो दृश्यते । अज्ञस्य तथैवात्मस्फूर्त्या घटाकारमात्रवन्मृत्तिकाज्ञानं विनैव प्रपंचस्य च देहात्मत्वस्य च प्रतीतस्यापि बुद्धेर्यत्र सुषुप्तौ तमोलीना याऽनात्मत्वप्रतीतिस्तस्य स्वरूपस्य ज्ञानिनः समाधावनुभवस्तत्तु यावद्बुद्धिर्विस्तृता सती तदाकारेण तदेकानुभवरूपा परिणता तावदेव तदग्रे तं व्याप्यावशिष्टाकाश इव यदवशिष्टमपरिच्छिन्नं तत्रानुभवाभावात्तत्पुच्छं तत्र बुद्धिप्रकाशकमात्रं तत्वं न प्रकाश्यं सत्त्वमस्तीति तत्पुच्छं न च शून्यं 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते'[1] इति श्रुतेः । तस्माद्ब्रह्म साक्षित्वादिधर्मरहितं तदार्याः केचित्साक्ष्येकस्वरूपमित्याहुस्तन्न घटत इति सिद्धम् । प्रकृतेऽत्र श्रीधरार्यैरस्य चतुर्थश्लोकस्य व्याख्यानांते ब्रह्मपुच्छं प्रतिष्ठेति सर्वसाक्षिशुद्धस्वरूपनिरूपणमिति व्याकृतं तन्न घटते । साक्षित्वे शुद्धस्वरूपत्वस्य निरुपाधित्वस्याघटनात् । अलमतिविस्तरेण । प्रकृतमनुसरति भगवान् । अस्य चतुर्थश्लोकस्य ब्रह्मवल्ल्युपनिषत्सूत्रप्रायत्वादन्नादिकोशा व्याख्याता भगवता सर्वसाक्षिणा ॥ १७ ॥ (४) ॥

अन्नाख्ये तु गवीव यच्च पयसि प्राणाख्यकोशे स्थितं
छंदोनेत्रगुरूपदेशमथनाद्ध्नो मनःसंज्ञितात् ।
विज्ञाने नवनीतके समुदिते योगाग्निदग्धेतरं
स्वानंदात्मनि चावशिष्टममितं ब्रह्माख्यमाद्यं भजे ॥ १ ॥

इति श्रीश्रुतिकल्पलतायां श्रुतिस्तुतौ चतुर्थपद्यव्याख्यायां पंचकोशविवरणं संपूर्णम् ॥

वृथा दृतिवदुच्छ्वसंत्यफलजीविनो यद्यहो
त्वदंघ्र्यनुविधा भवान्निजतनुं स्वकान्यच्छासि ।
त्वमन्वयतदन्यतश्चरमकोशशेषोऽप्यतोऽ-
सृजन्महदहं मुखा इदमनुप्रवेशात्तव ॥ २ ॥

॥ इति दशमोऽध्यायः ॥

---

१ बृ. ३।४।२।

# एकादशोऽध्यायः ।

श्रीभगवते नमः ।

एवं जय जय जह्यजामित्याद्यपद्यमारभ्य संसारमूलभूताऽविद्यानिवृत्तेर्ब्रह्माद्वैतज्ञानैकहेतुत्वं तच्च भगवद्दास्यैकगम्यमिति प्रमाणैः सदाचारेण तत्त्वविचारेण च प्रतिपाद्य संसारसागरसमुत्तरणोपाय इत्येक एवेति प्रतिपादितम् । इदानीं केचिद्‌निवृत्ताऽविद्याः षडाधारनाडीमार्गैः प्राणं ब्रह्मरंध्रं नीत्वा संसारनिवृत्तिमिच्छंति, तेषां किंचित्कालं मृत्युतरणं संभवत्यपि न मुक्तिफलमिति । 'अन्य एवाहुर्विद्यया अन्य आहुरविद्यया । इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ विद्यां चाऽविद्यां च यस्तद्वेदोभय १ सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते'इत्याद्याः श्रुतयः केवलं ज्ञानमेवोररीकुर्वंत्यतस्तदितरोपाध्यालंबनोपासनां फलसहितां वदंत्योऽपि तथा नात्यंतिकं श्रेय इति दर्शयंत्यो भगवंतं स्तुवंति—

उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः
परिसरपद्धतिं हृदयमारुणयो दहरम् ।
तत उदगादनंत तव धाम शिरः परमं
पुनरिह यत्समेत्य न पतंति कृतांतमुखे ॥ १८ ॥ (५) ॥

ये ऋषिवर्त्मसु उदरं हृदयं दहरमुपासते ते कूर्पदृश इत्यन्वयः । यच्छब्दात्तच्छब्दग्रहणम् । ऋषयो ज्ञानिनस्तेषां वर्त्मसु मार्गेषु चित्तनिग्रहोपायेषु तप इंद्रियसंयमप्राणायामादिवायुधारणादिष्वित्यर्थः । इत्यादिबहुविधोपायेषु केचित् प्राणायामादिभिर्नाडीमार्गशोधनद्वारा प्राणं ब्रह्मरंध्रं नेतुं प्रथमं उदरमुपासते । तत्रस्थं मूलाधारं स्वाधिष्ठानं मणिपूरकमिति चक्रत्रयं पूरकरेचककुंभकैः शोधयंतीत्यर्थः । तत्र पूरकादीनां प्रणवावृत्त्या साधितत्वात्तैवोपासना । तदुक्तं-'इडया पिब षोडशभिः पवनं चतुरुत्तरषष्टिमथौदरिकम् । त्यज पिंगलया शनकैर्दशभिर्दशभिर्दशभिर्दशभिर्द्व्यधिकम्' इति । एवं कुंभकस्यौदरिकत्वादुदरमुपासत इत्युक्तम् । अथ त एव तदनंतरं हृदयं दहरमुपासते । हृदयमनाहतचक्रं दहरं तत्रस्थं सूक्ष्मं नभस्तदुपासते । तत्र प्राणस्य यत्स्थैर्यं सैवोपासना । यतो यत्र प्राणस्तत्र मनः ।

१ ईश. १० । २ ईश. ११ ।

**'प्राणबंधनं हि सौम्य मनः'** इति श्रुतेः । तस्मात् हृदयाकाशाकारितं मनस्तत्र कुर्वंतस्तेन पथा प्राणं ब्रह्मरंध्रं नेतुकामा एव उपासत इत्यर्थः । एवं ये उपासते ते कूर्पदृशः कूर्पं रजो विद्यते दृक्षु येषां ते तथा रजोव्याप्तदृष्टयः महाजनाः स्थाणुं पुरुषतया पुरुषं स्थाणुतया पश्यंति । तावता तस्मिन्नेव मार्गे तत्त्वतः किमपि न पश्यंति । तथा निर्विषयं चित्तं व्योमाकारं कृत्वापि यश्चित्ते स्वत एव सिद्धं येन सचेतनं चित्तं व्योमाकारं भवति तमेव तथा लक्षीकृत्य एवमेव तदाकाराकारितं कृत्वा कृतकृत्या न भवंतीत्यतः कूर्पदृशः, तत एव तेषां विशेषणांतरमाहुः आरुणय इति । अरुणो रजोगुणः । **'अजामेकां लोहितशुक्लकृष्णाम्'** इति श्रुतेः । अरुणस्येमे आरुणयस्तद्वशगा रागिण इति यावत् । एवं उपासतेऽपि न तेषां विषयरागनिवृत्तिरविद्यानिवृत्त्यभावादिति भावः । अत्राहुः श्रीधरार्याः उदरं ब्रह्मेति शार्कराक्षा उपासते तस्य प्रतिपदं कूर्पदृश इति । हृदयं ब्रह्मेत्युपासते ते आरुणय इत्यादि तथावास्तु, किंतु ऋषिवर्त्मसु उपासत इत्युक्तत्वाद्विरुद्धोऽयमर्थः । न हि ऋषीणामयं मार्गो भवितुमर्हति । जडमुदरं तथैव हृदयं तद्ब्रह्मेत्युपासनाया ऋषिमार्गत्वासंभवात् । **'असन्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद संतमेनं ततो विदुः'** इति श्रुतेः । न च वाच्यं ऋषीणां ऋषित्वसिद्धेः प्रागेवमुपासना स्यादिति । **'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्'** इति फलश्रुतेस्तादृगुपासनापरस्य ऋषित्वासंभवात् । इत्यादिबहुदूषणार्हत्वान्नायं कल्पितोऽर्थोऽप्यर्थत्वाय कल्पते ।

प्रकृतमनुसरति भगवान् । तस्मादुदरं हृदयं दहरं ये उपासते ते त्वनिवृत्ताविद्याः, अतः कूर्पदृशः अनपगतवासनारूपरजोगुणाः अत आरुणयस्तथापि प्राणायामादीनामष्टांगयोगसाधनांगत्वात् ऋषिवर्त्म भवितुमर्हति तत्र केषांचिदृषीणामाकल्पजीविनां जडोपाधेर्मरणाभावात्तत्साधनभूतोऽयमेव मार्गस्तदेतेषां हृदुदरोपासकानां कूर्पदृशत्वेऽपि संभवतीति वक्तुं **'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवंति'** इत्याद्याः श्रुतयः आदौ हृदयविशेषणमाहुः । कथंभूतं हृदयम् । परिसरपद्धतिमिति । परीत्य व्यवस्योपरीत्यर्थः । उकारोपसर्गराहित्येऽपि अव्ययानामनेकार्थत्वादुपरि सरति मूलाधाराद्ब्रह्मरंध्रं प्रति गच्छति सा सुषुम्ना तस्याः पद्धतिरुपरिप्रसरणमार्गो यस्मिन् तत्परिसरपद्धति हृदयं तस्मात् तदुपासत इत्यनुषंगः । श्रुत्यनुरूपः समासः । **'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका'** इति । प्रस्तुते शिरःप्रति निःसरत्येका

१ छा. ६।८।२। २ श्वे. ४।५। ३ तै. २।६। ४ छा. ८।६।६।

सुषुम्नैव तत एकनाडीग्रहणम्। किंच हृदुदरस्य सुषुम्नामार्गभूतत्वादुपासत इति। 'चक्षुर्गम्यं जगद्रूपं सूर्यस्तस्य प्रकाशकः। विष्णोस्तन्मंडलस्थस्य भर्गः सर्वप्रकाशकम्॥ पटस्य तंतुमात्रत्वात्तत्प्रकाश्यः पटो यथा। चित्प्रकाश्यं जगदिदं सवित्राद्यखिलं तथा॥ एतत्तदिति सावित्र्याः पादेनार्धेन सूच्यते। इदंकारास्पदं तत्त्वं तत्पदेनापि गम्यते॥ अयं कलश इत्युक्ते दृगीर्दर्शयते मृदम्। अधिष्ठानं विवर्तेऽपि तच्छब्दो दर्शयत्यतः॥ विवर्तेऽथ प्रयुक्तोऽपि तस्याधिष्ठानमास्पदम्। शुक्तिं स्पृशति तच्छब्दः प्रयुक्तो रजतेऽपि यः॥ अतस्तद्भर्ग इत्यस्माच्चराचरमिदं जगत्। बुद्धिः पश्यति संस्पृश्य गुणं स्पृष्ट्वा फणिं यथा॥' जीवान्यप्रतिबिंबं भर्ग इति तद्भर्गो वरेण्यं स्मृतम्। देवस्येतिविशेषणेन हृदयस्य सुषुम्नामार्गत्वादुपासते। तदुपासनया सुषुम्नामार्गशोधनत्वादुदरोपासनानंतरं हृदयं ब्रह्मेति शार्कराक्षा इति केचिदुपासते इति श्रीधरार्यैर्व्याकृतमसिद्धम्। न चात्र हृदुदरादीनां ब्रह्मत्वेनोपासनं श्रुतिभिर्निरूप्यते। यतः सिद्धस्य गतिश्चिंतनीयेत्यावश्यकत्वादेवं व्याख्येयमित्यलं विस्तरैः। एवं 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका' इति श्रुत्या परिसरपद्धतिमिति हृदयविशेषणेन सुषुम्नामार्गशोधनाय हृदयमुपासत इत्युक्तम्। अथ 'तासां मूर्धानमभिनिःसृतैका' इति श्रुतिः स्वहृदयस्थमर्थं सुषुम्णानिःसरणप्रकारमाहुः—तत उदगादनंत तव धाम शिरः परममिति। भो अनंत, तव पूर्वोक्तविशेषणविशिष्टाद्धृदयात्। शोधितमार्गाद्धेतुभूतादित्यर्थः। तव परमं धाम यत् शिरो ब्रह्मरंध्रमित्यर्थः। तत्प्रत्युदगात्। उत् ऊर्ध्वमगात् गतवदित्यर्थः। एवमेव श्रुत्यर्थश्च। हृदयस्य शतं चैका च नाड्यस्तासां नाडीनां मध्यादित्यर्थः। मूर्धानं ब्रह्मरंध्रं प्रत्येका सुषुम्णामूलाधारादभिनिःसृतेति। ततः किं फलितमित्यपेक्षायां तयोर्ध्वमायन्नमृतत्वमेतीति श्रुतिराह। पुनरिह यत्समेत्य न पतंति कृतांतमुख इति। यत्समेत्य यं प्राप्य तया सुषुम्णया प्राणेन सह ब्रह्मरंध्रं प्रति गत्वेत्यर्थः। तयेति श्रुतिपदात्संयोगे तृतीया। तत्रात्मनस्तदुपाधेर्मनसश्च सर्वत्र हृदुदरशिरआदिषु व्यापकत्वेऽपि 'प्राणबंधनं हि सौम्य मनः' इति श्रुतेर्यत्र प्राणस्तत्र मनः तत्रात्मनोऽभिव्यक्तिरतो यत्समेत्य न पतंति कृतांतमुख इत्युपासकविशेषणाद्ब्रह्मरंध्रं प्रति सुषुम्णया प्राणे गते सति तत्रात्मनोऽभिव्यक्तौ सत्यां कृतांतमुखे देहत्यागरूपः कृतांतो यमस्तस्य मुखे न पतंति मृत्युवशा न भवंतीत्यर्थः। 'यश्चादित्यगतो यश्च पुरुषोपाधिसंस्थितः। विध्वस्ते च

१ छा. ८।६।६। २ छा. ६।८।२।

तयोरैक्यं स यश्चायमिति श्रुतिः ॥ पुंल्लिंगं यत्पदं देव्या धियो यो न इति स्म यत् । प्रचोदयाद्धियो यो न इति भेदोऽत्र दर्शितः ॥' 'बिंबेन प्रतिबिंबानाममृतत्वमेति' इति श्रुतेश्चायमेवार्थः । न मृतत्वं अमृतत्वम् । मृत्युं न प्राप्नोतीत्यर्थः । न चामृतशब्देन मुक्तिरित्यर्थोऽत्र युक्तः । किंतु मृत्युराहित्यमात्रमविद्यानिवृत्त्यभावात् । न च वाच्यं अविद्यानिवृत्तिं विना मृत्युर्नापगच्छतीति । 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते'[1] इति श्रुतेः । तथाच वाक्यार्थः । कृतांतमुखे न पतंति । नतु मुक्ता भवंति । कूर्पदृशश्चारुणयश्चेत्यविद्यायाश्च तत्कृतविषयवासनायाश्चोपपादितत्वात् । एतावता तु केचिद्धठयोगान्मृत्युवंचकत्वान्मुक्तिरित्याहुस्तन्मतं निराकृत्य 'ज्ञानादेव तु कैवल्यम्'इति सिद्धांतः कृतो द्रष्टव्यः । एवमेव श्रुत्यर्थश्च । 'अन्य एवाहुर्विद्यया अन्य आहुरविद्यया । इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते'[2] इति । धीराणां विद्यया अमृतं 'ज्ञानादेव तु कैवल्यमि'ति । 'लक्ष्यांशमात्रमुदितं हि वरेण्यभर्गः सूर्यादिजीवनिकरप्रतिबिंबबिंबम्' । अन्ये व्यासादय आहुः 'नान्यः पंथा विद्यतेऽयनाय'[3] इति श्रुतेः ।

'प्रकृतमनुसरामः शास्त्रमेतच्च कुर्मो
मुहुरथ वयमत्र ब्रूम इत्यादिभिः किम् ।
तत इह हरिरेव व्याकरोतीति वाचं
विधिकरमतिसंस्थो नर्तयत्यब्जनाभः ॥' इति ।

अन्ये तूपाध्यालंबनेन वायुधारणादिमार्गैः प्राणं ब्रह्मरंध्रं नीत्वा मृत्युं वंचयित्वा तात्कालिकमृत्युराहित्यात्तदेवामृतमिति मन्यमानाः 'तयोर्ध्वमायन्नमृतत्वमेति'[4] इत्यादिश्रुतिबलात् गायत्र्यां तदित्याद्यपदाह्वेभ्याः सवितुः 'ध्येयः सदा सवितृमंडलमध्यवर्ती देवस्य तस्य सवितुर्हृदि संस्थितस्य । भर्गो वरेण्यमुदितं'[5]। 'विद्ययामृतमाहुः' इत्याहुः । 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते'[6] इत्युत्तरवाक्यादेवमुभयमतानुवादः शुश्रुम इति श्रुत्याभिधीयते । योगबलेन देहं न त्यजंति ते भृग्वादय ऋषय इति संज्ञिताश्चिरजीविनोऽजरामरदेहं येन योगेन धारयंति सोऽपि योग ऋषिमार्गेष्वेको मार्गस्तमेव केवलं य उपासते नत्वात्मज्ञानिनो भगवत्प्रपन्नास्ततस्ते कूर्पदृशः कूर्पं रजो विद्यते दृक्षु येषां ते तथा, अविद्यायुक्तबुद्धय इत्यर्थः । तेषामुपासनामाहुः–परिसरपद्धतिमुपासत इति । परितः सरतीति परिसरः सर्वत्र संचारवान्प्राणस्तस्य पद्धतिं ब्रह्मरंध्रं प्रति-

१ ईश. ११। २ ईश. ११। ३ श्वे. ७।१।२। ४ छा. ८।६।६। ५ अत्र ग्रंथपातोऽनुमीयते । ६ ईश. ११।

गंतुं षडाधाररूपो योगमार्गस्तमुपासते तेन मार्गेण सहस्रारं ब्रह्मरंध्रं गत्वा तत्र लीनो भवति। तस्मिंल्लीने 'प्राणबंधनं हि सौम्य मनः' इति श्रुतेस्तत्र मनसो लयः। लीने मनसि सुषुप्ताविव स्वरूपानंदः। सुषुप्तौ प्राणस्य हि शरीरेविद्यमानत्वादत्र प्राणलयविशेषान्मृत्युराहित्यमात्रफलं विशेषस्ततः कूर्पदशस्ते य एवमुपासत इत्यर्थः। कथंभूतास्ते कूर्पदशः। आरुणयः अरुणो रजोगुणः तस्यारुणस्येमे नियस्या आरुणयो रजोवशवर्तिन इत्यर्थः। 'अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः' इत्यर्जुनप्रश्नस्योत्तरेणेममर्थमाह भगवान् 'काम एष क्रोध एव रजोगुणसमुद्भवः' इति, तस्मादारुणयो राजसा इति भावः। कथंभूतां पद्धतिमुपासत इत्यपेक्षायां मार्गस्थं चक्रकदंबमाहुः। उदरं हृदयं दहरं इति। उदरं मणिपूरकं प्रथमं प्राणायामैः प्रणवावृत्त्या शोधयंति। तस्मात्तदुपासत इत्यनुषंगः। तत्र प्राणे निरुद्धे तदधः स्वाधिष्ठाने मूलाधारे च प्राणो निरुद्धो भवतीति चक्रत्रयशोधनं सूचितम्। ततो हृदयमनाहतं ततो दहरं सूक्ष्ममाकाशं विशुद्धिचक्रमित्यर्थः। तस्य षोडशारचक्रस्याकाशस्थानत्वात्। एतावता मूलाधारे पृथ्वीतत्त्वं स्वाधिष्ठानेऽग्निर्मणिपूरे जलं हृदये साधारणो वायुः विशुद्धिचक्रे नभ एवं पंचस्वाधारेषु भूतपंचकमतिक्रम्य क्रियाशक्तिरूपः प्राणो ब्रह्मरंध्रं प्रति गच्छतीति सूचयति। एवं पूर्वार्धेनाकंठपर्यंतं चक्रपंचकमार्गातिक्रमणमुक्त्वा तदुत्तरमार्गं च प्राप्तिस्थानं तत्फलं चाहुः–तत उदगादनंत तव धाम शिरः परमं पुनरिह यत्समेत्य न पतंति कृतांतमुख इति। भो अनंत, तत उदगात् तस्माद्विशुद्धिचक्रात् उत् ऊर्ध्वं आज्ञाचक्रं प्रत्यगात्। तेषामुपासकानां प्राणोऽगादित्यर्थः। प्राप्तिस्थान आहुः–तव धाम शिरः परममिति। तत इति पदस्योदरादूर्ध्वं सर्वत्रानुषंगः। तदनंतरं भो अनंत, तवात्मनः परमं धाम शिरः सर्वोत्कृष्टं, यत्र प्रविष्टे प्राणे जीवपरमात्मनोरैक्यं भवति। तथाच प्रधानांगं तदुपासत इत्यनुषंगः। तत्र जीवात्मा परमात्मनि लीनो भवतीत्यर्थः। अयमर्थः–मूलाधारादिविशुद्धिचक्रपर्यंतं भूतपंचकमतिक्रम्य भ्रूमध्ये मनस्तत्त्वं तत्र यदा गच्छति तदानीमासन्ननिद्रावसरे यथा मनो निर्विषयमवशिष्यते तथा काचिदात्मप्रतीतिरवशिष्यते। तत ऊर्ध्वं यदा प्राणो ब्रह्मरंध्रं प्रतिगच्छति न तत्र मनस्तस्य स्थानमतिक्रांतत्वात्सुषुप्ताविव मनआत्मनोर्विश्लेषः। प्रतिबिंबस्योपाधिव्यतिरेके तु बिंबमेव प्राप्यं, तस्माद्ब्रह्मरंध्रे यदा प्राणलयस्तदा तु जीवपरमात्मनोरैक्यं भवति किंतु सुषुप्तिवदविद्यया तत्रैव सतां विद्यया चैकत्वमित्युच्यते। तथाचोक्तं भगवता 'भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम्' इति। ये

१ छा. ६।८।२। २ भ. गी. ३।३६। ३ भ. गी. ३।३७। ४ भ. गी. ८।१०।

ज्ञातात्मानो भक्तास्तेऽप्यनेनैव क्रमेण देहांते बिंबैक्यं प्राप्नुवंति। अत्र कूर्पदृशां मनसस्तदैक्यानुभवाभावान्नाविद्यानिवृत्तिः, किंतु सुषुप्तावात्मैक्येऽपि देहे प्राणस्य विद्यमानत्वान्मृत्युभयं न तथात्र देहाद्देहांतरं प्रति गच्छतः प्राणस्य लीनत्वात्। ततो ब्रह्मरंध्रं प्रति गते प्राणे न मृत्युभयमित्याहुः-पुनरिह यत्समेत्य न पतंति कृतांतमुख इति। यं प्राप्य पुनस्तदनंतरमिह देहसंचारवति प्राणेऽपि कृतांतमुखे न पतंति वैवस्वतवशा न भवंति। आसन्नमृत्युदौत्यकैस्तमधिगम्य पुनः प्राणं ब्रह्मरंध्रं नीत्वा ते वंचयंति वा, ब्रह्मरंध्रं भित्त्वा दिव्यलोकगतिं गच्छंति वा, किंतु तन्मुखे न पतंतीत्यर्थः। यद्वा ऋषिवर्त्मसु ये शिरस्तव धाम प्रतिबिंबस्य बिंबैक्यस्थानं तदेव परमं केवलं तावन्मात्रमुपासते ऋषीणां वर्त्मसु तदधिगतमात्मतत्त्वमविदित्वा तावन्मात्रोपासनया तु ते कूर्पदृशः स्थूलमतय आरुणयो राजसाश्च ते कथं तत्र प्राप्नुवंतीत्यपेक्षायां प्राणं षडाधारमार्गेण नीत्वा इत्याहुस्ते प्रथममुदरमुपासते कुंभकेन चक्रत्रयं शोधयंति। ततो हृदयमनाहतं तत्रस्थं दहरं सूक्ष्मं नभस्तत्र प्राणं सुस्थिरं कुर्वंतीत्यर्थः। ततः परिसरपद्धतिम्। परीति शब्दस्योपरीत्यर्थः। उकारोपसर्गराहित्यमात्रत्वेऽप्यव्ययानामनेकार्थत्वात्। परि सरतीति परिसरः प्राणस्तस्य पद्धतिं मार्गं षोडशारं उपासते तत्र प्राणं नयंतीत्यर्थः। तत उदगात्तेषां प्राणस्तत उत् ऊर्ध्वं आज्ञाचक्रं द्विदलं भ्रूमध्यस्थं मनःस्थानं भित्त्वा शिरःप्रति गच्छतीत्यादिसर्वं पूर्ववत्। नच वाच्यमायुषः परिमितस्य पूर्वकर्मफलस्यातिक्रमत्वाभावात् कथं मृत्युमुखे न पतंतीति। तेषां तथैव पूर्वकर्मफलम्। तत एवमभ्यासे प्रवृत्ताः। किंतु श्रमबाहुल्येऽपि चित्तनिग्रहं संपाद्यापि केवलमात्मतत्त्वं न विदुस्ततस्ते ऋषिमार्गेऽपि तेषां मुख्यफलभाजो न भवंत्यतः कूर्पदृश आरुणय इत्युक्ताः। अविद्यानिवृत्त्यभावात्। **'ज्ञानादेव तु कैवल्यम्'**[1]इति भगवता व्यासेन निर्णीतत्वात्। **'तत्त्वं तु बादरायणात्'**[2]इति गौतमेनापि सूत्रितत्वान्मतांतरेष्वपि तत्त्वविषये व्यासस्यैवाचार्यत्वस्य घोषितत्वात् जैमिन्यादीनां तच्छिष्यत्वाद्व्यासकृतसिद्धांत एव सिद्धांत इति सतां मतम्। तदितराणामपूर्वत्वात्। **'नान्यः पंथा विद्यतेऽयनाय'**[3] इत्यादिश्रुतिसिद्धत्वाच्च न पतंति कृतांतमुखे इत्यनेन तेषां मोक्ष इत्यत आरुणयो न निवृत्तो राजसो वासनामयो लिंगदेहो येषां ते तथेत्युक्ताः। न च वाच्यं मृत्युराहित्यान्मुक्तिरेव तेषामिति। अविद्यावतां च मृत्युमात्रतरणस्य श्रुतत्वात्। **'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते'**[3] इति श्रुतेः तत्र मृत्युतरणं त्विदमेव। **'अपाम सोममृता अभूम'**[4] इत्यादिवचनानामर्थवादकत्वादत्र श्रुत्या

१ गौतमसू, १। २ छा. ७।१।२। ३ ईश, ११। ४ ऋ, ६।४।११।

तु मृत्युं तीर्त्वेत्यस्यार्थस्य निर्णीतत्वादयमेक एव मृत्युतरणोपायः सोऽप्यविद्यया ततो नात्यंतिकः । तथाच श्रुत्यर्थः । 'अन्य एवाहुर्विद्यया अन्य आहुरविद्यया । इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति पूर्ववाक्येनोभयमतानुवादः । उत्तरवाक्येन यस्तूभयं च वेद विद्यां आत्मज्ञानं अविद्यां उपाध्यालंबनोपासनां सोऽप्यविद्यया प्रस्तुतोक्तोपासनया मृत्युं तीर्त्वापि यदमृतमश्नुते तद्विद्ययेत्यर्थः । इमां श्रुतिमार्याः प्रकारांतरेण च व्याकुर्वंति तच्छ्लोके प्रसिद्धं च तेषां प्रौढत्वात् । तत्र किं बहुनोक्तेन, यदि विद्यया मृत्युतरणं प्रकारांतरेण घटेत तर्हि अन्यस्याप्यर्थस्यावसरः स्यात् । यदि विद्यां विना मुक्तिरित्यंगीक्रियते तर्हि अविद्यया मृत्युतरणं च संभवेत् । तथा सति 'ज्ञानादेव तु कैवल्यम्' इति भगवता व्यासेन निर्णीतं तद्विरुद्धम् । यदि विद्यया मृत्युतरणं तर्हि अविद्याया अभावादविद्यया मृत्युं तीर्त्वेति श्रुतिविरोधस्तस्मादविद्यया मृत्युं तीर्त्वेति श्रुतेर्गतिचिंतनम् । नात्यंतिकं मृत्युतरणमेतत्, किंतूक्तक्रमेण य उपासते ते अविद्यया ज्ञानाभावेऽपि प्राणं ब्रह्मरंध्रं नीत्वा मृत्युं तरंति । तथापि न तेषाममृतत्वं तथाभूतोपासनया मृत्युं तीर्त्वापि 'अमृतत्वं तु विद्ययैवाश्नुते ज्ञानादेव तु कैवल्यमिति व्यासमतमुररीकर्तुमविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत इति श्रुत्या विधीयते । तत्रादावुभयमतानुवादः । अन्य आहुर्विद्ययेति वैयासकाः । 'नान्यः[2] पंथा विद्यतेऽयनाय' इत्यादिश्रुतिसिद्धत्वात् । अथ अन्य आहुरविद्ययेत्युपाध्यालंबने प्राणरंध्रं नीत्वेति हठयोगिनः । ननु अन्य आहुरविद्यया ते त्वन्ये जैमिन्यादय इतिचेन्न तेषामत्र प्रसंगः । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते इत्यविद्यया मृत्युतरणस्य निर्णीतत्वात् कर्मणा तदसंभवात् । ननु 'अपाम[3] सोममममृता अभूम' इति, 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति श्रुतेरितिचेत् 'तद्यथेह[4] कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते' इत्यादिश्रुत्यंतरबाधितत्वात्तदसिद्धमेव । तथा सति अविद्यया मृत्युं तीर्त्वेति श्रुत्युक्तमृत्युतरणासंभवात् । अविद्यया मृत्युं तीर्त्वेत्युक्त्वा अनंतरं विद्ययाऽमृतमश्नुत इत्यभिधानान्मृत्युतरणाभावस्यात्र मृत्युतरणत्वासंभवात् । किंतु प्राणं ब्रह्मरंध्रं नीत्वा केचिन्मृत्युं तरंति ते तदेवामृतत्वमाहुस्तन्न घटत इति श्रुत्या निराक्रियते । तथाच तेषां प्रमाणाभासरूपेयं श्रुतिः 'शतं[5] चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृत-

१ ईश. ११। २ छा. ७।१।३। ३ ऋ. सं. ६।४।११। ४ छा. ८।१।६। ५ छा, ८।६।६।

त्वमेति विष्वगन्या उत्क्रमणे भवंति' इति। अत्रामृतत्वमेतीत्येतावता मोक्षं प्राप्नोतीत्यविद्ययाप्यमृतमन्यमाहुस्तन्न घटते। यतस्तु केचित् भृग्वादयः प्राणं ब्रह्मरंध्रं नीत्वा मृत्युं तरंति तथाच ब्रह्मापरोक्षसंपन्नश्च तादृशो यः कश्चन विद्यां चाविद्यां च यस्तदुभयं च वेद सोऽप्यविद्यया मृत्युं तीर्त्वाप्यमृतत्वं तु विद्ययैवाश्नुते तस्माद्विद्यां विना केवलमविद्यया प्राणं ब्रह्मरंध्रं प्रति नीत्वा तावन्मात्रमुपासते ते तु मृत्युमात्रं तरंति, तथा सति तयोर्ध्वमायन्नमृतत्वमेतीति तेषां या श्रुतिः प्रमाणभूता तस्या अमृतत्वपदस्य न मुक्तिपरोऽर्थः, किंतु न मृतं यथा स्यात्तथा यत्फलं तदमृतं तस्य भावोऽमृतत्वं, तथाभूतममृतत्वमेतीत्येवार्थो नामृतस्यात्र मुक्तिपरोऽर्थ इत्यर्थोपबृंहिते यदन्य आहुरविद्ययेति अविद्यया मृत्युं तीर्त्वेति श्रुतिः। तत्र विद्ययाऽमृतमश्नुत इति सिद्धांतः स एवार्थोऽनया श्रुत्या स्तुतिव्याजेनात्र प्रकटीकृतस्तत्रायमर्थः—यत्पद्यचतुष्टयेन ब्रह्माद्वैतज्ञानस्याविद्यानिवर्तकत्वं च तस्य भगवद्दास्यैकगम्यत्वं चेत्युपपादितं स एव सिद्धांतः, तस्मादजित जह्यजामजगदोकसामिति जय जय जह्यजामित्याद्यपद्येन जीवाविद्याध्वंसाय प्रार्थ्यते भगवानिति न्याय्यं, यदि प्रकारांतरेणाप्यमृतत्वं सिध्येत तर्हि भगवतो व्यभिचार्यविद्यानिवर्तकत्वे मोक्षप्रदत्वमिति सिध्येत, तत्परिहारायैतत्पद्यप्रवृत्तिः। ततो नेयमर्थवादस्तुतिः किंतु न्यायाम्नायसिद्धेति भगवतः सनंदनस्य श्रीमन्नारायणस्याभिप्रायस्ततः श्रीमद्भागवतशास्त्रं नान्यर्षिप्रोक्तशास्त्रवत्सामान्यम्। नच परमर्षिकृतान्यपुराणादिवत् किंतु सर्वोत्कृष्टमिति निदर्शनार्थं भगवान् श्रुतिकल्पलताकारो व्याकरोति। तथाच प्रथमस्कंधोपक्रमे द्वितीयतृतीयश्लोकाभ्यां भगवान् वेदव्यासः प्रतिजानिते—

'धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्।
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्'[१] इति।

अत्र प्रोज्झितकैतवो धर्मः प्रोज्झितं त्यक्तं कैतवं कापट्यं देवतांतरोत्कर्षरूपं यस्मिन् स धर्मः। एतावता अन्यपुराणेषु भगवदितरदेवताकदंबसर्वोत्कर्षश्च भगवद्धर्मेतरधर्मप्रशंसा च सर्वं कापट्यमिति स्फुटीकृतम्। राजसतामसाधिकारिणां भगवति सात्त्विकैकोपास्ये बुद्धेः प्रवृत्त्यसंभवात् 'एकं संतं बहुधा कल्पयंति' इति श्रुतेरीश्वरत्वेनान्यदेवताप्रशंसापूर्वकस्य तद्धर्मावलंबनस्य

१ भा. १।१।२।

कैवल्यफलत्वेनोपपादितत्वात् । अत एव न ते राजसतामसा अत्राधिकारणस्तेषां सकामानां वृथा निष्फलकामानां वात्र श्रद्धाया असंभवात्तान्येव तेषां प्रमाणानि, तर्हि अत्र केषामर्थे प्रोज्झितकैतवो धर्म उपपाद्यत इत्यपेक्षायामाह– निर्मत्सराणामिति । परोत्कर्षासहिष्णुता मत्सरः स निर्गतो येभ्यस्ते तथा तेषामर्थ इत्यर्थः । अत्र भगवत एव न्यायाम्नायसिद्धोत्कर्षस्योपपादितत्वादसहिष्णवो बौद्धा वेदेष्विव चोरा न्यायाध्वनि वर्तमाने नृप इव नादरं करिष्यंतीत्यनागतज्ञास्तदितराधिकारिणो ये निर्मत्सरा यन्न्यायाम्नायसिद्धं मुख्यमीश्वराख्यं दैवतं तदेव वयमुपास्महे । यच्च परमपुरुषार्थपरं प्रधानदेवतायाः प्रधानधर्मपरं शास्त्रं तदेव श्रवणविषयीकरिष्यामस्तेनैव पोतेन भवाब्धिं तरिष्यामो नास्माकमुपास्यदैवतमेव यथाकथंचित्तातकूपक्षारांबुपानवत्तदुररीकर्तव्यमिति दुराग्रह इति निश्चयेन मुक्तिप्रददैवततद्धर्मतत्त्वजिज्ञासवस्तेषामेवार्थोऽस्मिन् शास्त्रे प्रोज्झितकैतवो धर्मः स्फुटीक्रियत इत्यभिप्रायः । नन्वन्यपुराणेष्वपि भागवतधर्माः संत्येव कोऽत्र विशेष इतिचेदूर्ध्वपुंड्रतुलसीकमलाक्षमालाधारणादिभगवद्धर्मा एव प्रायस्तत्रोपपादिताः, किंतु '**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः**'[1] इति, '**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्**'[2] इत्यादिसूत्रप्रायेण भगवतार्जुनं प्रत्युक्ता धर्माः स्पष्टतया न कुत्राप्युक्तास्ततोऽत्र विशेषतो भागवतधर्मः स्फुटीक्रियत इत्याह परम इति । आत्मज्ञानपूर्वकः सर्वत्र तदीक्षणरूपः परमो भागवतधर्म इत्यर्थः । तदुक्तं याज्ञवल्क्येन '**इज्याचारदमाऽहिंसादानस्वाध्यायकर्मणाम्[3] । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्**' इति । योगो नाम पटे तंतुवज्जगति सर्वत्र ब्रह्मैवेति निरीक्षणम् । तत्रेंद्रियैः पटवत्प्रपंचाकारे दृश्येऽपि बुद्ध्या तंतुब्रह्मैव सर्वत्रावलोक्यते स योगः । तदुक्तं भगवता '**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि**[4] । **ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः**' इत्यादि । तस्मान्नान्यपुराणेष्विवाविद्वदधिकारिविषयो भागवतधर्मोऽत्र, किंतु विद्वदधिकारिविषयस्तत एव जिज्ञासुविषयश्चेति सिद्धमेव यत्सिद्धैः प्राप्तं तस्यैव साधकैः प्राप्यमाणत्वात् । तत एव ये जिज्ञासवो निर्मत्सरास्तेषां विषयोऽप्येतच्छास्त्रमित्युक्त्वा परमधर्माधिकारिणामर्थ इति चाह–सतामिति । यैः सत्स्वरूपमात्मतयाधिगतं त एव संतः असदात्मतत्त्वनिरासात्सद्वस्तुश्रवणादिपरास्तेषामर्थे परमो धर्मोऽत्र निरूप्यते । अयमभिप्रायः–ये केवलाव्यक्तोपासकाः '**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्**[5] । **अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते**' इति भगवताप्युक्तास्तेषां वयमधिगतपरमार्था इति ज्ञानमानेन

---

१ भ. गी. ७।१९। २ भ. गी. ७।१८। ३ या. स्मृ. १।८। ४ भ. गी. ६।२९। ५ भ. गी. १२।५।

भगवद्धर्मराहित्यादभ्यासवैयर्थ्याद्यत्क्लेशाधिक्यं तत्परिहाराय भागवतधर्मैरेव भगवतः प्रसादेन ज्ञानपरिपाकरूपा सिद्धिरित्यधिगमार्थं तत्त्वाधिगमानंतरं भागवतधर्मानुष्ठानलक्षणः परमो धर्मोऽत्र निरूप्यत इति भावः। यथाह भगवान्–'ये[1] तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः। अनन्येनैव योगेन मां ध्यायंत उपासते॥ तेषामहं समुद्धर्ता' इत्यादिक्रमेणानन्ययोगेन। ये तु केवलाव्यक्तमात्रोपासनापरा अधिकतरक्लेशभाजस्तेषु वा सहजक्रमेण ज्ञानोत्पत्त्यनंतरं किमथ सगुणाराधनेनेति ज्ञानमानरहिताश्च ये केचिद्वा सर्वाणि कर्माणि मयि भगवति संन्यस्य समर्प्य मत्परा अन्यदेवताभजनरहिता मदन्यस्यापरत्वज्ञानादेव मत्परास्तथापि न केवलं सगुणमात्रमुपासते किंत्वनन्येनैव योगेनेत्येवकारेण प्रारब्धो यस्त्वद्वैतयोगाभ्यासस्तेनैवाव्यक्तोपासनारूपेणेत्यर्थः। य उपासते तेषामहं समुद्धर्ता ततः प्राक् वयमधिगतपरमार्थाः किं सगुणस्य मायोपाधिशबलितस्य भजनेनास्माकं कृत्यमस्तीति केवलाभ्यासमात्रे प्रवृत्तास्तेषां नाहं समुद्धर्ता सम्यगुद्धर्ता ततः प्राक् मदाराधनादात्मानात्मविवेकपर्यंतं यज्ज्ञानं तन्मयैव दत्तं ततस्तेषामप्युद्धर्ता अहमेव, किंतु न सम्यगुद्धर्ता ज्ञानमानिभिस्ततः परं मदाराधनस्य परित्यक्तत्वात्। 'तत्त्वेव[2] भयं विदुषो मन्वानस्य' इतिश्रुतेर्मन्वाना विदुषस्त्वेतादृशा एव। तस्माद्ये तु सर्वकर्मार्पणं मयि कृत्वा तेनैवानन्ययोगेन मां ध्यायंतः संतो मामुपासते तेषां सम्यगुद्धर्ता भगवानेवास्माकमुद्धर्तेतिज्ञानोत्तरकालेऽपि मद्भजनादिति समितिपदात्सूत्रितोऽर्थस्तस्मादेतादृशा ये संतः सत्स्वरूपश्रवणमननादिनिष्ठास्तथापि सम्यगपरोक्षसाक्षात्काररहितास्तेषामर्थेऽपि प्रोज्झितकैतवः परमो धर्मोऽत्र निरूप्यत इत्यर्थः। अन्यत्र श्रुतचिदात्मनां भागवतधर्मरहितानामेतच्छास्त्रश्रवणाद्भागवतधर्मावलंबनात् ज्ञानमानपरित्यागाज्ज्ञानसिद्धिरिति भावः। ननु श्रुतात्मनामपि सगुणभजनेनैव सिद्धिरित्यत्र प्रमाणाभावात् भगवता 'ये तु[3] सर्वाणि कर्माणि मयि संन्यस्य' इत्याद्युक्तास्ते अनुत्पन्नज्ञाना इति ब्याकुर्मः। अव्यक्तोपासनया 'क्लेशोऽधिकतरस्तेषामित्यत्राऽव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते'[4] इति भगवदुक्तेर्देहाभिमानिभिर्दुःखं यथा स्यात्तथा अवाप्यते न तु त्यक्तदेहाभिमानदेहवद्भिरित्युक्तत्वादितिचेत्। 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः' इति श्रुतेर्ज्ञानोत्तरकालेऽपि गुरुदेवतैक्यभजनेनैव कथिता एते ह्यर्थाः प्रकाशंते। नच वाच्यं श्रुतेः पूर्वत्र कथिता ह्यर्था यस्य भक्तिस्तस्य प्रकाशंते तावता ज्ञानोत्पत्तेः प्रागयं विधिरिति। ततः प्राग्ज्ञानविहीनोपासनाया निषेधितत्वाद्भजनवैयर्थ्यात्। तथाच श्रुतिः

१ भ. गी. १२।६। २ तै. २।७।१। ३ भ. गी. १२।६। ४ भ. गी. १२।५।

'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' इति । तस्मादतत्त्वज्ञकृतोपासनायाः पशुतुल्यत्वात् यस्य देवे परा भक्तिरिति नाऽतत्त्वविद्विषया भक्तिः फलश्रेष्ठत्वश्रवणात् । न च यथा देवे तथा गुरावित्यैक्योपासनाऽऽत्मज्ञानं विना संभवति । न चात्मज्ञाने सति आत्मविषया प्रीतिरेव भक्तिरत्र निर्गुणमात्रपरेति स्याद्देवे गुरावित्यभिधानात् । न च ज्ञानोत्पत्तेः प्रागियं भक्तिर्घटते । तयोरैक्यभक्त्यभिधानात् भेदभक्तेर्निरर्थकत्वात् । तस्मादात्मज्ञानेन यदा गुरुदेवैक्यभक्त्योपासना तदानीमेव सिद्धिर्ज्ञानपरिपाकरूपेति तत्त्वं, तत एव तस्यैते कथिता ह्यर्थाः प्रकाशंत इति विधत्ते । एते श्रुतेः पूर्वोक्ताः कथिता गुरूपदिष्टाः भक्त्या प्रकाशंत एव । महात्मन इति तस्य विशेषणं तद्विशेषणाच्चोत्पन्नज्ञानिनां ज्ञानपरिपाकाय भगवद्भक्तिरिति सिद्धम् । तत एव 'अनन्येनैव योगेन मां ध्यायंत उपासते' इति भगवताप्युक्ता अनन्ययोगस्य देवतांतरभजनराहित्येनेति व्याकुर्वंति । तन्न घटते । मत्परा मयि सर्वाणि कर्माणि संन्यस्योपासत इत्युक्त्यैव तस्यार्थस्य सिद्धत्वादेवकारवैयर्थ्यात्, सर्वकर्मार्पणपरा भगवत्परास्ते इतरदेवताभजनरहिता एवेत्यर्थस्यानौचित्यात् । किंच 'अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते' इत्येतावता देहाभिमानिनां क्लेशोऽधिकतरो नास्माकमित्याहुस्तच्च न घटते । कुतः? देहवद्भिरित्युक्ता देहाभिमानिनः किमधिगतस्वरूपा वा अन्ये वा? । आद्ये विदिते तत्त्वेऽपि देहाभिमानिन इति सिद्धे तदेव ज्ञानमानेन भगवद्भजनराहित्यफलम् । तत एव भगवता देहवद्भिरित्युक्तमिष्टम् । द्वितीये तूपक्रमविरोधः 'ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते' इत्युक्तत्वात् । परोक्षश्रवणेनोपासत इति चेन्न । अनिर्देश्यस्यापरोक्षोपासनाऽसंभवात्सर्वत्रगमचिंत्यंचेत्युक्तत्वात्, अचिंत्यस्याविदितस्योपासनाया असंभवात् । ततस्त्वचिंत्यत्वात्परोक्षत एव तस्याप्युपासनेति यद्युक्तास्तर्हि तत्त्वविद एवेति सिद्धम् । तद्विदां बुद्धेस्तदाकारपरिणामत्वादुपासितुं शक्यते । अथ प्रस्तुतोपासकास्तदुपासे तथाह भगवान् 'चतुर्विधा भजंते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ' इति । 'उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्' इति । न चात्र शास्त्रज्ञानी जिज्ञासोरभिधानादात्मैव मे मतमित्युक्तत्वात् । न च ज्ञानमेव भजनम् । चतुर्विधा भजंते तथायमपि तस्मात्सगुणं मां भजत इत्यर्थः । ते ततस्तत्र चित्तस्थैर्याभ्यासपराः । 'संनियम्येंद्रियग्रामं' इत्यादिसाधनानामुक्तत्वात् ।

१ बृ. १।४।१०। २ भ. गी. १२।६। ३ भ. गी. १२।५। ४ भ. गी. १२।३। ५ भ. गी. ७।१६। ६ भ. गी. ७।१८। ७ भ. गी. १२।४।

तस्मादधिगतात्मान इत्येव सिद्धम् । ननु तर्हि 'ते[1] प्राप्नुवंति मामेव' इति फलश्रुतेः संतु नाम क्लेशा इति चेन्मैवम् । मामेवेत्येवकारेणादौ मां ज्ञानाभिमानेन त्यक्त्वा ते पुनर्मामेव सगुणं प्राप्नुवंति शरणं प्राप्नुवंतीत्यर्थः । ततश्च ये तु सर्वाणि कर्माणि मयि संन्यस्येत्युक्तक्रमेणानन्येनैवाव्यक्तोपासनयैव मामुपासते, किं सगुणेनेति ज्ञानमानं त्यक्त्वा मामेव सगुणं शरणं प्राप्नुवंतीत्यर्थः । यतस्ते स्वहिताशंसिनो न तु दांभिका न चादीर्घदर्शिनो मताभिमानिनो वा, 'सर्व[2]भूतहिते रताः' इत्युक्तत्वात् । सर्वभूतहिते रतास्ते कथं स्वहिते प्रमत्ताः स्युः, किंतु ततः प्राक् सगुणभजनत्याग एव स्वहितं मन्यमानाः । एवं दुःखमनुभूय मामेव शरणं प्राप्नुवंतीति भगवतोऽभिप्रायः । ततस्तु क्लेशोऽधिकतर इत्युच्यते ततः प्राक् कृतश्रमवैयर्थ्यात् । ज्ञानानंतरमपि ये सगुणं मामुपासत एव ज्ञानमानेन कृतकृत्यंमन्यमाना न भवंति मदाराधनं न त्यजंति । तत्र तेषामधिकतरः क्लेश इति स्पष्ट एवार्थस्ततस्तादृशानां सतामर्थेऽप्यत्र प्रोज्झितकैतवः परमो धर्मो निरूप्यत इत्यर्थः । ननु सतामधिगतसत्स्वरूपाणामुपासनधर्मेण न कृत्यमस्ति तथाप्यपक्वयोगिनां ज्ञानपरिपाकाय सगुणभजनमावश्यकमिति यद्युच्यते तर्हि ज्ञाते तत्त्वे सर्वदेवताकदंबस्य ब्रह्मत्वसामान्यात्किं भगवत एव धर्मो मुख्यः यत इदं शास्त्रमेव श्रेष्ठं सगुणत्वेनास्मदुपास्यां देवतामेवाराधयामस्तदागम एवास्माकं शास्त्रमित्याशंक्य भगवत्प्रसादगम्यं तत्त्वमेव वास्तवं तदत्र निरूप्यते तत इदमेव शास्त्रं सर्वोत्कृष्टमित्याह 'वेद्यं[3] वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्' इति । अत्र वेद्यं ज्ञेयं वस्तु तत्त्वं वास्तवं यथा तथेत्यर्थः । भगवतो नारायणस्य वाच्यांशनिषेधशेषस्यैव ब्रह्मत्वं तदन्येषां प्रतिबिंबस्वरूपत्वात् । 'तद्वि[4]ष्णोः परमं पदं सदा पश्यंति सूरयः' इति श्रुतेः । सूरयो यत्पश्यंति तद्विष्णोरेव परमं पदं सकलदेवतावृंदप्रतिबिंबबिंबत्वात् । अतो गायत्र्या भर्गो देवस्य धीमहीत्युच्यते । तस्मादस्य शास्त्रस्य श्रीमद्भागवतत्वादत्र भगवदेकोपास्यत्वस्योपपाद्यमानत्वात्तत्प्रसादगम्यं तदीयमेव स्वरूपं वास्तवं तदितरदेवताकदंबस्य तत्प्रतिबिंबत्वात्तदाराधनेन जाग्रत्स्वप्नयोर्देहेंद्रियादीनां प्रकाशकस्य प्रतिबिंबचैतन्यस्यैव ज्ञानं स्यादुपास्यस्य च तावन्मात्रस्वरूपत्वान्न तावता बिंबात्मनि तदाकारे परिणते सत्त्वे प्रतिबिंबैक्यं भवितुमर्हति स्वोपास्यस्यापि तदुपासकत्वात् । तस्माद्यत्र भगवदितरदेवताप्रशंसार्थवादस्तत्रापि तत्त्वं निरूप्यते तथापि तद्देवताराधनलब्धप्रसादगम्यं न मुख्यं बिंबस्वरूपं भवितुमर्हतीत्यतो न तत्त्वं वास्तवमित्यभिप्रायात् वेद्यं च वस्त्विति चोक्त्वापि वास्तवपदस्य विशेषतः प्रयोग इत्यभिप्रायः । प्रतिबिंबस्यापि वस्तुत्वा-

---

१ भ.गी. १२।४। २ भ.गी. ५।२५। ३ भा. स्कं. १।१।२। ४ ऋ.सं. १।२।७

दात्मत्वात्तथापि सुषुप्तिप्रलयसमाधिमुक्तौ तद्दर्शनाद्वास्तवं तु सर्वदेवतादिप्रतिबिंब-बिंबस्य शश्वद्विद्यमानं स्वरूपं ब्रह्मैव, तदत्रैव नान्यत्र । अतस्तस्यैव निरुपाधेर-साधारणोपाधिशबलितस्य प्रतिपाद्यमानत्वादेव शिवदमिति तत्त्वविशेषणं तापत्रयो-न्मूलनं च । योगसिद्धिगम्यत्वात् । तदुक्तं भगवता 'सुखमात्यंतिकं यत्तद्बुद्धि-ग्राह्यमतींद्रियम् । वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः' इति[1] तावत्पर्यंतं प्रतिबिंबस्य बिंबैक्याभावात्तापत्रयोन्मूलनस्यासंभवाद्योगभ्रंशभयान्न शिवदत्वं, नच तापत्रयोन्मूलनत्वम् । यत्तु भगवत एव स्वरूपं तदाराधनगम्यं तदत्रैव लभ्यमिति भावः । ननु 'तीर्थानामुत्तमं तीर्थं व्रतानामुत्तमं व्रतम्' इति यत्र यत्र प्रतिपाद्यते तत्तदेवोररीक्रियते । तथाचात्र भगवतः सर्वोत्कर्षस्तद्धर्म-मुख्यत्वं तदेव स्वरूपं तत्त्वं वास्तवमिति नातिदीर्घदर्शिनो रससागरानभिज्ञा वदिष्यंतीत्याशंक्य नात्र भगवदुत्कर्षः सर्वसाधारणः, किंतु न्यायाम्नायसिद्ध इति दर्शयन्नेतच्छास्त्राभिधानेनात्र यदुक्तं तन्नान्यदेवतामाहात्म्यवदौपचारिकमित्याह श्रीमद्भागवत इति । श्रीमतो भगवत इदं श्रीमद्भागवतं तस्मिन् वास्तवं वेद्यं वस्त्वित्याद्यनुषंगः । अयमर्थः—'एकं संतं बहुधा कल्पयंति' इति श्रुतेर्यथान्य-देवताकदंबेऽपीश्वरत्वमुपचरति तथैव भगवच्छब्दस्तत्र मुख्यत्वेन यो भगवच्छब्द-वाच्यः स एवेश्वरः 'न[2] तस्य कार्यं कारणं च विद्यते न तत्समश्चाभ्य-धिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञान-बलक्रिया च' इति श्रुतेः । यत्राव्यभिचार्यसाधारणाः स्वाभाविकज्ञानबलादिगुणाः स एव भगवान् । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञान-वैराग्ययोश्चेति षण्णां भग इतींगना' इति भगवच्छब्दस्य षड्गुणत्वात्, तत्र यद्यपि यस्य यदिष्टं दैवतं स तस्यैव समग्रैश्वर्यादिगुणालयत्वेनोपपादयति तथापि श्रियःपतिरेक एव भगवानन्यत्र श्रियः समग्रत्वेनाविद्यमानत्वात्, नहि भगवतः श्रीपतित्वव्यभिचारवादस्तथा सति यत्र श्रीस्तत्रैव जगज्जन्मादिसामर्थ्यं श्रियः सर्वदेवेभ्य उत्कर्षत्वात् 'यं[3] कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्' इति श्रुतेरित्यादिश्रिय उक्तिश्रवणात् । 'परा[4]ऽस्य शक्तिर्विविधैव श्रूयते' इति श्रुत्यात्वियमेव परा तदाश्रितास्तस्याश्च कारणं जलशायी श्रीमन्नारायण इत्युत्तरत्र तस्मिन्नेव सूक्ते श्रियैवाभिधीयते । 'मम[5] योनिरप्स्वंतःसमुद्र' इत्यादि । 'यतः[6] प्रसूता जगतः प्रसूतिः' इति श्रुत्या च मम योनिर्जगज्जन्मादिकारणम् । ततश्चोद्भवश्रवणम् । तस्मात्तस्याः

---

१ भ. गी. ६।२१। २ श्वे. ६।८। ३ ऋ. सं. ८।७।११। ४ श्वे. ६।८। ५ ऋ. सं, ८।७।१२। ६ म, ना. १।४।

पतिरेव सर्वेश्वरः श्रीमान्भगवान्। अत एव श्रीमद्विशेषणविशिष्टस्य भगवतः शास्त्रन्यायाम्नायसिद्धं सर्वोत्कृष्टत्वमत्र यत्प्रतिपाद्यते तत्तच्च 'तीर्थानामुत्तमं तीर्थं व्रतानामुत्तमं व्रतं' इत्यन्यदेवतां प्रतिपादयंतीति माहात्म्यवदित्यभिप्रायः। ननु गौतमजैमिन्यादिमुनिकृतशास्त्रेष्वपि प्रतिपाद्यं तत्त्वं न्यायादिसिद्धमेव कुतोऽत्रैव वास्तवं तत्त्वं कुतश्चेदमेवोत्कृष्टमित्याशंक्याह महामुनिकृत इति। महामुनिर्वेदव्यासस्तत्कृतत्वादस्मिन्नेव यत्तत्त्वं तदेव वास्तवम्। व्यासो नारायणः साक्षादिति प्रसिद्धम्। तथाच प्रथमस्कंधे-'जातः पराशराद्योगी वासव्यां कलया हरेः'[1] इति। तथा चाह भगवान् 'मुनीनामप्यहं व्यासः'[2] इति विभूत्यध्याये, तथा च पुरुषोत्तमाध्याये 'वेदांतकृद्वेदविदेव चाहम्'[3] इति। वेदांतकृत् ब्रह्मसूत्रकृत् वेदविद्वेदव्यासः। वेदविदित्युक्तत्वान्नान्यो भवितुमर्हति। तत एव वेदद्रुमशाखाविभागकृत् यो वेदव्यासः स एव वेदांतकृद्भगवदंशः ततो महामुनिकृतमेव सर्वोत्कृष्टं शास्त्रं ततोऽस्मिन्नेव वास्तवं तत्त्वम्। यथाच सूच्यते गौतमेन 'तत्त्वं तु बादरायणात्'[4] इति। मम तु पृथक्शास्त्रकृद्भिर्मुनिभिर्महद्भिर्यदा वेदव्यास एवेति सूच्यते तदात्वत्रैव वास्तवं तत्त्वम्। तथाच जैमिनिस्तच्छिष्य एव तदाज्ञयैव कल्मषचित्तानां तत्त्वाधिगमाधिकाररहितानां कर्मणि श्रद्धोत्पादनाय कर्मैव ब्रह्मेत्युपपादयति ततो व्यासोक्तं वास्तवं, द्वितीयं तु न वास्तवमिति निश्चितोऽर्थः। ननु महामुनिकृतान्येव सप्तदश पुराणानि संति किमेतदेव सर्वोत्कृष्टमिति चेत्तत्राह किं वाऽपरैरिति। अपरैः श्रीमद्भागवतेतरैः किं, न किमपीत्यर्थः। तत्र कैतवधर्मस्योपपादितत्वान्न तत्प्रतिपादितैरर्थैः सद्यो हृदीश्वरावरोधनं, भागवतशास्त्रादेव तत्त्वज्ञानोत्पादे सति यद्बिंबभूतं तत्स्वरूपं प्रतिबिंबम् तदेव स्वस्वरूपमहंप्रत्ययगम्यं, तावन्मात्रेण नृणां झटित्येव च स्वरूपप्राप्तिः ततस्तत्रतत्रोपपादितं तत्त्वं न वास्तवम्। यद्यपि वास्तवं चोपपाद्यते तथापि तत्र तत्प्राप्तिद्वारस्य शुद्धमायाशबलितस्य मुख्योपास्यस्यानुभवाभावादप्राप्यत्वादत्र तत्प्राप्यत्वादत्रैव। ननु विष्णुपुराणादीनां वैष्णवत्वात्तत्रापि प्रोज्झितकैतवधर्म इति सिद्धे कोऽत्र विशेष इत्यपेक्षायां विशेषमाह-ईश्वरः सद्यो हृद्यवरुध्यतेऽत्रेति, निर्व्याजभक्तित्वात्। अन्यत्र वैष्णवेष्वपि भक्तीतरप्रसंगबाहुल्यात्। अत्र भक्त्या सद्य एव हृद्यवरुध्यते। हृदि सर्वदा विद्यमानोऽपि भक्त्या वशीक्रियत इत्यर्थः। तत्र सद्यःश्रवणमात्रेण परीक्षितो मुक्तिरित्यनागतज्ञस्याभिप्रायः। तर्हि स एक एवेति तस्य प्रायोपवेशसमये श्रवणमात्रेण मुक्तिरितरेषां च श्रवणोत्सुकानां तथैवेत्याह-शुश्रूषुभिस्तत्क्षणादिति। श्रोतुमिच्छद्भिः सर्वैरपि ईश्वरः सद्यो हृद्यवरुध्यते इति

१ भा. स्कं. १।४।१४। २ भ. गी. १०।३७। ३ भ. गी. १५।१५। ४ गौ. सू.

यत्तत्क्षणादेवासाधारणरसमाधुर्यविशेषादिति भावः । परीक्षिता विप्रशापाद्देहपातभियांगीकृता मुक्तिः । इतरे जीवन्मुक्ता एव भवंति मुक्तिमपि नाद्रियंते तत्रेश्वरस्तु तत्क्षणादेव हृद्यवरुध्यते न तत्र विलंब इति गूढाभिप्रायः । ननु तर्हि किमिति सर्वैर्नेश्वरो हृद्यवरुध्यते किमिति जना न सर्व एवात्र प्रवर्तंते तत्राह कृतिभिरिति । बहुपुण्यवद्भिरेवास्य श्रवणेच्छा क्रियते तैरेवेश्वरो भक्त्या वशीक्रियते, तदन्येषां बौद्धानां वेदेष्विवात्र न श्रद्धेति भविष्यन्न आदौ ज्ञात्वैव परमाधिकारिणामर्थमिदं शास्त्रमारभते । ननु तर्हि वेदेषु महाभारते गीतादौ ब्रह्मसूत्रेषु न वास्तवं तत्त्वमिति सिद्धेऽत्र वास्तवं वस्त्वित्यसिद्धमित्याशंक्य तदुत्तरपद्येनैतां शंकां परिहरति—

'निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः' इति ।

इदं शास्त्रं निगमकल्पतरोः फलम् । अयमर्थः–भारतस्य पंचमवेदत्वात् वेद एवेतिहासोऽपि, वेदार्थसूचकानि ब्रह्मसूत्राणि च वेदांतर्भूतान्येव । ततो वेदः कश्चन वास्तवतत्त्ववृक्षः किंतु कल्पवृक्षः कल्पितं फलं ददाति । तत्र कल्पितफलप्रदत्वाद्ये यथा तत्त्वमपेक्षंते तेषां तथैवार्थप्रदस्तत्र वास्तवत्वलक्षणो यस्तस्मिन्नलौकिको रसः स तु श्रीमद्भागवतफलरूपेणाविर्भूतस्तस्माल्लोके वृक्षगतरसो यथा फलरूपेणैवास्वाद्यते तथा निगमकल्पतरोः वास्तववस्तुरूपो यो रसः सोऽत्रैवेत्यभिप्रायः । ततो भो रसिका रसास्वादनचतुराः, यूयमिदं भागवतरसरूपं फलं पिबत त्वगादित्याज्यांशराहित्यात् घनीभूतः फलरूपोऽपि रस एव दधिखंडवद्रसमात्रत्वेऽपि पानार्हत्वेऽपि घनीभूतं ततः फलमेव पिबत । तत्र ये रसिकास्त एव संबोधिताः, इतरे बौद्धा वेदेष्विव ये सकामाः पशुहिंसादिकर्मनिष्ठाः क्षुद्रदेवोपासकास्ते क्रमेलकाः कदलीफलरसमिव नान्यस्य रसं पास्यंतीत्यनागतज्ञास्तान् हित्वा रसिकानेव हि यूयं रसज्ञा आत्मरसविद इत्यर्थः । '[2]रसो वै सः रसꣳह्येवायं लब्ध्वाऽऽनंदी भवति' इति श्रुतेः । अत्र यथा तत्त्वज्ञानसौलभ्यं न तथा केवलश्रुतिषु वृक्षपर्णेष्विव न केवलश्रुत्यर्थमीमांसयैव सम्यक्तत्त्वसाक्षात्कारो भवितुमर्हति । पर्णचर्वणेनैव न वृक्षरसस्यास्वादनमिति न्यायात् । यथा फल एव वृक्षरसस्तथात्र भक्तियोग एव विशेषत उपपादितत्वात् । स च भक्तियोगोऽत्र निर्व्याजात्मप्रीतिरूप एव । यस्तु '[3]न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति' इत्यादि '[3]नवा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं

१ भा. स्कं. १।१।३। २ तै. २।७। ३ बृ. ४।५।६।

प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादिबृहदारण्यकादिश्रुतिसिद्धः । तदेव वैराग्यं च । 'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनुसंचरेत्' इतिश्रुतेः, तस्मात् भो रसिकाः, युष्माभिर्य आत्मा रसरूपोऽधिगतः स एवात्मरसस्तरोः फलरसइव यः श्रुतिरूपपर्णशाखादिगतः स एवात्र फलरूपेण क्रोडीकृत्योपपाद्यते तं यूयमेव पिबत । अयं निगमकल्पतरोरेव रसः । किंतु निगमो वेदः स एव कल्पतरुस्तस्माल्लभ्यः तरोरेव लभ्यस्ततः केवलतरुत्वक्पत्रचर्वणमात्रं मा कुरुतेति बह्वभिप्रायगर्भितविशेषणेन श्रोतॄनभिमुखीकरोतीति दर्शयति । एवं च श्रुतात्मज्ञानाभिमानादिरहितैः सम्यक् साक्षात्कारायेदमेव शास्त्रं सेव्यमिति भावो दर्शितः । ननु कियत्कालपर्यंतमेतच्छास्त्रं सेवनीयमित्यपेक्षायामाह आलयमिति । आत्मरसे यावच्चित्तस्य लयस्तावत्कालमभिव्याप्येत्यर्थः । अयमभिप्रायः—जीवन्मुक्तानां समाधिद्वयेऽपि स्वरूपे चित्तं तदाकारपरिणतमेव तिष्ठति । ननु सुषुप्तिप्रलयवत्तमसि वा प्रकृतिद्वारा ब्रह्मणि वा लीनं भवति । तथा च सनकादीनां शुकमुखानां तादृग्जीवन्मुक्तानां वा यावत्परिसमाप्तिप्रारब्धचित्तं प्रलय इव ब्रह्मणि लयं प्राप्नुयात्तावत्पर्यंतमप्येतच्छास्त्रं सेव्यमेव । तथा चाह श्रीशुकः '२परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लोकलीलया । गृहीतचेता राजर्षे आख्यानं यदधीतवान्' इति । तत्र श्रुतात्मनां सम्यक्साक्षात्कारोपयोगित्वात्समाधौ योऽनुभवः सोऽत्र प्रतिपादितो वास्तवतत्त्वस्य भगवतः स्वरूपस्यैव संप्राप्तिरस्त्येवैतच्छास्त्रमादरतो भागवतं रसं पिबतेत्याह । भगवत इदं स्वरूपं बिंबात्मकं भागवतं तद्भागवतमेव रसरूपं '३रसꣳ ह्येवायं लब्ध्वाऽऽनंदी भवति' इति श्रुतेः । तं भागवतं रसं भो रसिका आत्मज्ञाः, पिबतानुभवत । तस्मात्सुषुप्तौ चित्ते तमसि लीने संसारबंधपरिसमाप्तौ पतिते देहे वा शास्त्रस्यैतस्य न सेवनं तदितरकालेषु सर्वदापि सेवतेति गूढाभिप्रायः । एवं निर्मत्सराणां सतामिति पूर्वश्लोके द्विविधाधिकारिणश्च निगद्यत इत्युक्तम् । तत्र तत्त्वविदः संतः संबोधिताः । अथ निर्मत्सरान्संबोधयति भावुका इति । भो भावनाचतुराः, यद्यपि भवतामात्मरसास्वादनद्वारं चिदचिद्विवेकश्रवणं नास्ति तथापि भावुकाः सद्भावयुक्ता निर्मत्सरा यूयं द्विविधदृष्ट्या देवेषु को मुख्यो देवः कः सत्वोपाधिरथ च 'अतो धर्माणि धारयन्', '४विष्णोः कर्माणि पश्यत' इत्यादिश्रुतिभिः कस्य धर्मावलंबनं कस्य कथाश्रवणं विधीयते । को भगवान् कस्य वा चरणोदकं सेश्वरं जगत्पुनाति कस्यैकस्य धर्मावलंबनं विनेतरदेवताधर्मावलंबनं वेदैर्न विधीयत इत्यादि सम्यग्भावयित्वा भो भावुकाः, एतद्भागवतरससरूपं श्रीमद्भागवतं

१ बृ. ४।४।१२। २ भा. स्कं. २।१।९। ३ तै. २।७। ४ ऋ. सं. १।२।७।

फलं पिबत एकाकारवृत्त्याऽऽस्वादयतेत्यभिप्रायः । कथंभूतं फलं? निगमकल्पतरोः सकाशाद्गलितम् । गलितत्वात्सम्यक्पक्वमिति सूचयति । स्वस्य वेदव्यासत्वान्निगमसमूहगुप्तं गुह्यं सम्यक् संततमनुवर्तमानं मन्मनसि स्थितं तदेतन्नारदप्रार्थनया जगदुद्धारहेतोर्मम मुखात् गद्यपद्यरूपं बहिर्निःसृतमिति भावः । एतावता जैमिन्यादिभिरपि वेदवृक्षरस एव निरूप्यते, किंतु बलादिवाच्छिद्य पुष्पप्राप्यसमर्थं फलवद्व्याकुर्वंति ततो न तत्त्वमित्यभिप्रायः सूत्रितः । तच्च परीक्षिन्मुक्तिहेतोर्मुख्यागतमित्याश्चर्येणाह । शुकमुखादहो भुवि गलितमित्यनुषंगः । पक्षिमुखस्पर्शमात्रेण परिपक्वं फलं यथा गलितं स्यात्तथैतच्छास्त्रं शुकमुखेन भुवि गलितं विख्यातमिति भावः । ततो भो रसिकाः भो भावुकाः, असकृच्छ्रुतमपि नूतनतया एतच्छास्त्रं सेवतेत्याह मुहुरिति । तस्मान्नैतादृशं जगदुद्धारकारणं शास्त्रमन्यदस्तीत्यभिप्रायः ।

प्रकृतमनुसरति भगवाञ्श्रुतिकल्पलताकारः । एवं प्रोज्झितकैतवः परमोऽत्र धर्म इति, वेद्यं वास्तवमत्र वस्त्विति, सद्यो हृद्यवरुध्यतेऽत्रेत्यसकृदत्रशब्देन नात्र भगवदुपासनेतरमार्गस्य मुक्तिप्रदत्वोपपादनं घटते । तत उदरमुपासते य ऋषिवर्त्मसु कूर्पदृश इत्यनेन पंचमश्लोकेन पुनरिह यत्समेत्य न पतंति कृतांतमुखे इति यदुक्तं न तन्मुक्तिपरं किंतु मृत्युतरणमात्रम् । तथा च '[1]अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति श्रुतेरविद्यया यन्मृत्युतरणं तदेतदेव न च मुक्तिर्न च मृत्युः तस्माद्भगवदुपासनयैव विद्याप्राप्तिस्तयैव मोक्ष इति सिद्धांतः '[2]तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय' इत्यादिश्रुतिसिद्धत्वात् 'ज्ञानादेव तु कैवल्यम्' अलमतिविस्तरैः ॥

ऋषिवर्त्मसु कूर्पदृष्टयोऽप्यभयं यांति कृतांतवक्त्रतः ।
तव दास्यमृते जगद्गुरो न वृणेऽहं तु गतिं बृहद्दृशाम् ॥ १ ॥
ऋषिवर्त्मसु कूर्पदृष्टयो यमवक्त्रे न पतंत्यथापि हि ।
अमृतं तव तत्त्वविद्यया नच सा दास्यमृते तवाच्युत ॥ २ ॥

इति श्रीश्रुतिस्तुतौ पंचमश्लोकव्याख्यानाख्य एकादशोऽध्यायः ॥ ११ ॥

॥ इति एकादशोऽध्यायः ॥

---

१ ईश. १५। २ श्वे. ४।४।२२।

# द्वादशोऽध्यायः ।

ननु उक्ता उपासका यदि कूर्पदृशो रजःपिहितबुद्धयस्तर्हि के विरजधिय इत्यपेक्षायां भगवत्प्रसादलब्धया ब्रह्मविद्यया सतामुपासनामार्गं वदंत्यो भगवंतं स्तुवंति—

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया
तरतमतश्चकास्स्यनलवत्स्वकृतानुकृतिः ।
अथ वितथास्वमूष्ववितथं तव धाम समं
विरजधियोऽन्वयंत्यभिविपण्यव एकरसम् ॥ १९ ॥ (६) ॥

विरजधियोऽभिविपण्यव एकरसमन्वयंतीत्यन्वयः । विरजधियो निर्मलमतयो भगवत्प्रसादेन निवृत्ताविद्याकल्मषा इत्यर्थः । कूर्पदृशां वैलक्षण्ये विशेषणम् । पुनः कथंभूताः? अभिविपण्यवः । अभि सर्वत्रेहामुत्र विगतो व्यवहारः कर्मफलाभिसंधिरूपो येषां ते तथा । पण व्यवहार इति धातोः । इहामुत्र काम्यफलव्यवहाररहिता इत्यर्थः । एतावता त्वारुणय इति पूर्वपद्येनोक्ता राजसा अरुणस्य रजस इमे इति व्युत्पत्त्या आरुणय इति तद्वैलक्षण्ये विशेषणमुक्तम् । अथैतेषां पूर्वोक्तविलक्षणां मुक्तिफलामुपासनामाहुः एकरसमन्वयंतीति । एक एव रस एकरस्तं अन्वनुरूपं यथा स्यात्तथा अयंति प्राप्नुवंति । अयमर्थः—एक एव रसः सर्वत्रैकरूपस्वरूपः प्रकाशकश्चिदात्मा तं अनुरूपं चिदाकारसत्त्वं यथा स्यात्तथा अयंति प्राप्नुवंति तदाकारत्वे तत्रस्थप्रतिबिंबस्य बिंबात्मैक्यं प्राप्नुवंतीत्यर्थः । '**रसो[१] वैः सः रसꣳह्येवायं लब्ध्वाऽऽनंदी भवति**' इति श्रुतेः। रसो वै सः रस एव स इत्यर्थः। रसबिंबस्य यः प्रतिबिंबः स च तं रसमेव हि लब्ध्वाऽऽनंदी भवतीति रसं बिंबस्वरूपं लब्ध्वाऽऽनंदी भवति '**असद्[२]वा इदमग्र आसीत्ततो वै सदजायत तदात्मानं स्वयमकुरुत**' इति पूर्वश्रुतिवाक्येनादावसदेव जीवोपाधिरिवासीदुत्पाद्यासीदित्यर्थः । '**तत्सृष्ट्वा[३] तदेवानुप्राविशत्**' इति श्रुतेः । ततः सदजायत सतः प्रभवत्वात् सत् । ततस्तु बिंबचैतन्ये सर्वगते तन्मये परिणते सत्त्वे अयं देहमात्रात्मकः प्रतिबिंबस्तत्रैक्यं प्राप्नोति स एवायमानंदानुभवः । अत एव विरजधियः अभिविपण्यव इति विशेषणद्वयम् । ततस्तु '**तद्विष्णोः[४] परमं पदं सदा पश्यंति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिंधते**' इत्यादिश्रुतीनां

१ तै. २।७। २ तै. २।७।१। ३ तै. २।६। ४ ऋ. सं. १।२।७।

चेयं स्तुतिरिति सूच्यते। सूरय इति विशेषणस्य विरजधिय इति प्रतिविशेषणम्। विपन्यव इत्यस्याभिविपन्यवस्ते एकरसं अन्वयंतीति तद्विष्णोः परमं पदं पश्यंतीत्यादिश्रुत्यनुरूपोऽर्थो द्रष्टव्यः । एवं निर्विशेषसमाधिमुक्त्वाथ जगदवलोकयंतोऽपि ते समाधिस्था नित्यमुक्ताः संत उपासत इत्याहुः–अथ वितथास्वमूष्ववितथं तव धाम सममिति । अथ निर्विशेषसमाध्यनंतरं प्रारब्धभोगक्षयार्थं यदा लोके विहरंति तदानीमित्यर्थः । वितथासु मिथ्याभूतासु अमूषु स्थिरचरमूर्तिषु अवितथं सत्यं तव धाम अन्वयंतीत्यनुषंगः । कथंभूतं धाम ? समम् । अयमर्थः– विषमासु नानामूर्तिषु कटककुंडलादिष्विव सममेकं सुवर्णमिवानुरूपं यथा स्यात्तथा अयंति । अलंकारान्पश्यंतोऽपि चित्तं सुवर्णमयं यथा स्यात्तथा चराचरेष्वेकं स्वरूपमेव बुद्धयावलोकयंतीति भावः । 'अहं विश्वं भुवनमभ्यभवां सुवर्णज्योतीः' इति श्रुत्युक्तजगदात्मकत्वानुभवसंपन्ना एवमुपासते 'नेह नानास्ति किंचन' इति श्रुतेः ।

गोविंदो गोविदामात्मा स यैरधिगतो धिया ।
श्रीमद्गोविन्दरामास्ते जगत्पश्यंति तन्मयम् ॥ १ ॥
श्रिया मुक्त्या जयतु नो जनको जनको यथा ।
आनंदो जनकोऽस्माकं सतां भजनकोविदः ॥ २ ॥
आत्मा निर्गुण एव यः स भगवानव्यक्तया मायया
ब्रह्माद्या महदादिषु प्रतिमुखास्तस्यैव सर्वात्मनः ।
सेव्यः सर्वतयात्मविद्भिरितरैः प्राप्तैश्चिदेकात्मनो
न्यायाम्नायविजृंभितं विजयते प्राचीनमेतन्मतम् ॥ ३ ॥

ननूक्ता उपासका यदि कूर्पदृशो रजःपिहितदृष्टय आरुणयो रजोनियम्या रजोधीना इत्युक्तास्तर्हि के विरजधियः के वा सात्विकाः कथं वा कं उपासते इत्यपेक्षायामाहुः स्वकृतविचित्रयोनिष्विति द्वाभ्याम्—

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया
तरतमतश्चकास्स्यनलवत्स्वकृतानुकृतिः ।
अथ वितथास्वमूष्ववितथं तव धाम समं
विरजधियोऽन्वयंत्यभिविपन्यव एकरसम् ॥ ६ ॥

विरजधियोऽभिविपन्यव एकरसमन्वयंतीत्यन्वयः । विरजधियो निर्मलमतयः पूर्वपद्योक्तकूर्पदृशां वैलक्षण्ये विशेषणमुक्त्वा आरुणय इत्युक्तास्तद्वैलक्षण्ये विशेषणमाहुः अभिविपन्यव इति । अभि सर्वत्र विगतो व्यवहारः फलरूपो येषां ते

१ तै. ३।१०।६। २ बृ. ४।४।१९।

तथा । पण व्यवहार इति धातोः इहामुत्रफलविरक्ताः सात्त्विका इत्यर्थः । अथ पूर्वोक्तोपासनावैलक्षण्येनोपासनामाहुः एकरसमन्वयंतीति । एक एव रसश्चिद्रसस्तं अन्वनुरूपं अयंति उपासते । तेषां चित्तं चिदात्मनि तदेकरूपं विपरिणतं भवति तत्र ते तदैक्यं प्राप्नुवंतीत्यर्थः । '**तद्विष्णोः परमं पदं सदा पश्यंति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिंधते । विष्णोर्यत्परमं पदम्**' इति श्रुतेरियं स्तुतिः । तत्र सूरय इति विशेषणस्य विरजधिय इति प्रतिविशेषणम् । सूरयो विवेकिनः विविक्ता जडोपाधिविरहिता धीर्येषां ते तथा । विपन्यव इत्यस्य अभिविपन्यव इति । विष्णोः परमं पदं पश्यंतीति उपासकस्य समाधिश्रुतेरेकरसे समन्वयंतीत्युक्तिः । अनेकप्रतिबिंबानां नानात्वेऽपि बिंबरूपेणैक्यादेकरसम् । तदेकस्य विष्णोरेव पदमिति पूर्वत्र व्याकृतमेव स्फुटम् । तथाच '**रसो वै सः । रस५ ह्येवायं लब्ध्वाऽऽनंदी भवति**' इति श्रुत्या च रसशब्दप्रयोगस्तत्रैकरसं बिंबस्य विष्णोः परमं पदं अन्वयंति चित्तेन प्राप्नुवंति तदाकारे चित्ते प्रतिबिंबस्यैक्यं भवतीत्यभिप्रायः । रसो वै सः सः प्रतिबिंबात्मा रसो वै रस एव बिंबमेव रसं बिंबलक्षणमेवायं लब्ध्वाऽऽनंदी भवतीत्येतावता उपासकस्य समाधिप्राप्तिं सम्यक्साक्षात्कारमुक्त्वा रसो वै स इति श्रुतेः पूर्ववाक्यैरसद्वा एकरसं सदेकस्य विष्णोरेव पदमिति पूर्वत्र व्याकृतमेव स्पष्टं '**असद्वा इदमग्र आसीत्ततो वै सदजायत**' इत्याद्यैः उपासकस्य परोक्षज्ञानश्रवणरीत्या स्वस्मिन्नुपपादितार्थेन भगवानीड्यते स्वकृतविचित्रयोनिषु विशन्निव तरतमतोऽनलवच्चकास्सीति । स्वेन त्वया भगवता कृतासु विचित्रासु योनिषु देवादिषु विशन्निव । मुख्यस्य बिंबस्य तव प्रवेशासंभवादिवशब्दप्रयोगः । प्रतिबिंबरूपेण प्रविशन्निवेत्यर्थः । एवं प्रविशन्सन् गजमशकादिषु तरतमतस्तारतम्यात्तावदुपाधिव्यापक एकरसरूपोऽप्यनलवदग्निवन्महदणुरूपेषु काष्ठेषु तावन्मात्रव्यापकवच्चकास्सि प्रकाशसे । अहंममेत्यादिवृत्तिगम्यत्वात् । अत्र प्रविष्ट इवेत्यनुक्त्वा प्रविशन्निवेत्यनेन सुषुप्त्यंते सर्वदापि सत्त्वे तमःप्रलीने प्रविशन् जागरस्वप्नयोर्जीवत्वेन प्रादुर्भवन्निति सूच्यते । यद्वा तरतमतः स्वकृतविचित्रयोनिषु विशन्निव अनलवच्चकास्सीत्यन्वयः । तत्रानलवच्चकास्सि उपाधियोगेन प्रकाशसे । यथाग्निः काष्ठादिकमप्युपाधिं विना न प्रतीतिविषयो भवति यथाप्यग्निः प्रकाशकः काष्ठादि प्रकाश्यं, तथा त्वमेव प्रकाशको मायोपाधिस्तु प्रकाश्य इत्यर्थः । शेषं समंजसम् । अयमर्थः '**सोऽकामयत बहु स्यां प्रजायेयेति**' सधर्मं सगुणं ब्रह्म आदावुपाधीन्कृत्वा पश्चात्प्रतिबिंबत्वेन प्रविश्य जीवयामासेत्यनेन '**असद्वा इदमग्र आसीत्**' इति श्रुतिगतासत्कारणत्वा-

१ ऋ. सं. १।२।७। २ तै. २।७। ३ तै. २।७। ४ छा. १।५।२।

भाग्यः श्रुत्यात्र स्तुतिव्याजेन स्वकृतविचित्रर्थानिपु विशन्निवेत्यनेन परिहृतः। 'असद्वा इदमग्र आसीत्ततो वै सदजायत'[1] इत्यनञ्जडं नानोपाधिरूपमिदं दृश्यं अग्रे आसीत्। उत्पाद्यमासीदित्यर्थः। ततो वै निश्चयेन सदजायत। सतः प्रतिबिंबांशत्वाद्विलक्षणत्वाच्चिदेकमात्रत्वात्तदुपाध्याविर्भावानंतरं प्रतिबिंबमजायते-त्यर्थः। 'यतः प्रसूता जगतः प्रसूतिस्तोयेन जीवान्व्यचसर्ज भूम्याम्'[2] इति श्रुतेः। जगतः प्रसूतिः प्रकृतिस्तोयेन सूक्ष्मासुपाधौ, ननु असदेव कारणत्वे-नादावासीदित्यर्थो घटते। 'सदेव सोम्येदमग्र आसीत्'[3] इति श्रुतेः। तर्हि किं सदजायतेति श्रुत्या भूतोत्पत्तिरभिधीयत इति विरोधः परिहृतः। ततः प्रतिबिंबमेव सदजायतेति। 'सतो बंधुमसति निरविंदन्'[4] इति ऋग्वेदे सच्छब्देनैव बिंबा-त्मावबोधप्रकरणेऽपि सतः प्रतिबिंबस्य बंधुं पितरं बिंबमसति हृदि 'यो वेद निहितं गुहायाम्'[5] इति श्रुतेः। निरविंदन्। हृदस्तदाकारपरिणामे असतः प्रतिबिंबस्य सति बिंबे तदानीमैक्याद्विरिति निरविंदन्निति शब्दार्थः। तस्माच्चिदचिद्विवेकज्ञानि-नस्त्वविदन्नेव योगिनो निरविंदन्नित्यर्थः सूच्यते। ननु सतो जडोपाधेः कार्यस्य बंधुं प्रकाशकं ब्रह्म असति कारणे सत्त्वैकरूपे सूक्ष्मोपाधौ निरविंदन्नित्येवार्थ इति चेद् 'असद्वा इदमग्र आसीत्' इति श्रुतेरसदेवाग्रे कारणत्वेनासीदिति। तथाच ततः सदजायतेति श्रुत्या सच्चैतन्यं तत उत्पन्नमित्यर्थः सिद्धः। प्रतिबिं-बत्वानंगीकारात्। तथा सति सदेव सोम्येदमग्र आसीदित्याद्यनेकश्रुतिविरोधाच्चार्वा-कादिमतपर्यवसानान्नायमर्थः। नन्वसन्मायाकारणमग्र आसीत्ततः सत्कार्यमजा-यतेति ब्रूम इति चेन्नैवम्। उपसंहारविरोधात्। 'असद्वा इदमग्र आसी-त्ततो वै सदजायत तदात्मानꣳ स्वयमकुरुत तस्मात्सुकृतमुच्यते इति, यद्वै तत्सुकृतं रसो वै सः रसꣳ ह्येवायं लब्ध्वाऽऽनंदी भवति'[6] इति श्रुते-र्यत्सदजायत तदात्मानं स्वयमकुरुतेति। अनेन यद्यसच्छब्देनात्र स्वरूपेतरमाया-कारणं तर्हि कारणं विना कार्यस्य स्वतः स्वयमात्मानमकुरुतेति स्वकरणं न घटते, तथाच तत्सुकृतमित्युच्यते यत्सुकृतं रसो वै सः रसमेवायं लब्ध्वाऽऽनंदी भवतीत्ये-तावतायं रसं लब्ध्वाऽऽनंदी भवतीति तस्य रसस्यानंदलब्धिस्थानत्वात् ब्रह्मत्वादथ च यत्सुकृतशब्देनाभिहितं तच्च रस एव न ब्रह्मविलक्षणम्। तथा सति यदि सत्कार्यं जडं तर्हि तस्य ब्रह्मसमानलक्षणत्वमिति सिद्धे नायमर्थः। न च कार्योपाधेर्ब्रह्मप्राप्ति-र्घटते, विषयानंदलाभो वक्तुं न शक्यते किं पुनर्निजानंदः, किंतु कारणस्य सत्त्वस्यैव तस्यात्मनि परिणतेः आत्मन एव सुखानुभवत्वात्तस्मिन्पक्षे यदसत्तद्रसं लब्ध्वा-

---

१ तै. २।७। २ महाना १।४। ३ छा. ६।२।१। ४ ऋ. सं. ८।७।१७। ५ तै. २।१। ६ तै. २।७।

ऽऽनंदी भवतीति विवक्षितं स्यात्। यद्यदसदेव रसं लब्ध्वाऽऽनंदी भवति तर्हि देहस्य ब्रह्मरसानुभव इति सिद्धम्। यदि सच्छब्देन सत्त्वमित्युच्यते, तथापि सत्त्वस्य मायोपाधिरूपत्वात्तद्रसो वै सः रसमेव लब्ध्वेति ब्रह्मसमानलक्षणत्वाघटनात्केनापि प्रकारेण सच्छब्दस्य प्रतिबिंबोपाधीतरत्वं च सच्छब्दस्य प्रतिबिंबांतरत्वं चात्र न घटत इति सिद्धम्। एवं यदा सच्छब्देन प्रतिबिंबमिति सिद्धं तथा चासच्छब्देन तदुपाधिरिति तदा 'सतो बंधुमसति निरविंदन्' इत्यत्र सदसच्छब्दाभ्यां प्रतिबिंबतदुपाधीत्येव सिद्धम्। तथाच '[१]यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्' इत्यादिश्रुतिभिः प्रतिबिंबस्य श्रुतिसिद्धत्वाज्ज्ञातेऽपि चिदचिद्विवेकेन यावत्सत्त्वस्य प्रतिबिंबोपाधेः स्वरूपाकारपरिणामो न तावद्बिंबैक्यं, न यावद्बिंबैक्यं न तावद्ब्रह्मप्राप्तिरिति सिद्धे चिदचिद्विवेकेन यदधिगतचैतन्यं न तत्प्रतिबिंबमेव, तस्य च देहमात्रव्यापकत्वाद्यत्सर्वगतं चैतन्यमधिगतमिति मन्यंते तत्परोक्षेणैव चित्तस्य तदाकारपरिणामाभावादात्मज्ञस्य बिंबभेदेन प्रतिबिंबत्वेन विद्यमानत्वान्नायमपरोक्षसाक्षात्कार इति सिद्धम्। अत एकजीववादमंगीकृत्य चिदचिद्विवेकमात्रज्ञानस्य ये ब्रह्मप्राप्तिं मन्यंते ते त्वतीव मंदाः। श्रुतीतिहासपुराणविरोधात्, प्रतिबिंबस्य प्रमाणसिद्धत्वात्, अथ च न्यायतोऽपि चिदेकत्वे पृथगुपाधीनां करचरणादिभेदवद्विराण्मूर्तेर्जगदाकृतित्वात्समष्टिदेहरूपत्वादेकस्मिन्दुःखिते सर्वेऽपि सेश्वरा दुःखिनो भवंतीति सिद्धमंगीकर्तव्यमिति प्राप्तम्, यदि जडस्य दुःखानुभवस्तर्हि जडस्यैव मुक्तिरिति सिद्धम्। यदि चैतन्यस्य तर्हीश्वरस्य जीवैक्यात्तस्यापि दुःखमिति सिद्धम्। यद्युपाधिभेदान्नेति चेदुपाधेर्दुःखानुभवो न घटते। उपाधिभेदाद्यदि दुःखानुभवभेद इति चेत्, जडस्य तु न दुःखमिति सिद्धमेव। चैतन्यस्योपाधिभेदेन तत्र तत्रैवानुभवो नैकोपाधिगतं दुःखमन्योपाधिगतचैतन्यस्येति चेत्किं चैतन्यं प्रति घटते मृद्वत्स्वरूपतः परिच्छिन्नं वा आकाशवद्घटोपाधिपरिच्छिन्नं वा? आद्यपक्षे परिच्छेदस्य वक्तुमशक्यत्वान्न घटते। द्वितीये त्वाकाशोपमितस्यासंगत्वादचलत्वादाकाशस्येव शीतोष्णादिसंबंधाभावत्वाद्दुःखभोग एव चैतन्यस्य, प्रतिबिंबस्यैव दुःखानुभवो न्यायसिद्धः, किंचाकाशस्य जलप्रतिबिंबसंगतस्य घटते किंत्वाकाशवत्सर्वगतस्य न, जलचांचल्यदर्शनान्नाचलस्यापरिच्छिन्नस्य दुःखभोग इति घटते। तथापि यदि घटेत तर्हि स्वरूपैक्यादुपाधिभेदेऽपि सर्वगतस्य दुःखम्। दुःखसंयुक्तांगुष्ठचरणदुःखेन सर्वांगगतस्य दुःखमिति न्यायात्। ननु करचरणादेरेकदेहत्वान्न पृथगुपाधित्वमिति चेत्, समष्टिदेहमूर्तेर्विराजोऽपि न व्यष्टिदेहोपाधिपृथक्त्वं वक्तुं शक्यते, तथा सति तदेका-

---

१ ऋ. सं. ८।७।१७।

वयवरूपत्वात्सर्वलोकस्य जीवानां च विराडात्मनश्चैकस्मिन्दुःखिते दुःखं दुर्वारमिति सिद्धम् । तच्च न वक्तुं शक्यते । ननु देवदत्तस्य यज्ञदत्तदुःखानुभवाज्ञानाभावोऽत्र दुःखमनेकोपाधिभेदेन दुःखानुभवाज्जीवोपाधिभेदेन परस्परदुःखज्ञानाभावादिति परमेश्वरः सर्वगतदुःखज्ञानसंपन्नो ज्ञानाभावान्न दुःखजनकोपाधिगतं चैतन्यं दुःखि तदेवेश्वरस्य चैतन्यं तत ईश्वरचैतन्यमपि दुःखीति सिद्धम् । यतः जीवः सर्वज्ञ-त्ववद्दुःखज्ञश्च । तथा सति तस्य दुःखभोगो दुर्वार इति सिद्धम् । ननु बुद्धि-भेदाद्दुःखभेद इति चेत् भोगो बुद्धेर्वा चैतन्यस्य वा ? आद्ये तस्यैव मोक्षो बंधरूप-भोगवत् । द्वितीये दुःखिते चैतन्ये तद्यावत्तावद्दुःखित्वमंगीकर्तव्यम् अपरिच्छि-न्नत्वात् । ननु यावद्यावद्बुद्धिरहंकारेण देहमभिमन्यमाना तिष्ठति तावदेव दुःख-मिति चेत्तस्याः स्वतो भोगसंभवात् भोगस्तु चैतन्यस्यैवेति सिद्धे देवदत्तस्य स्वगृहमात्राभिमानेऽपि तद्गृहदाहकोऽग्निस्तदितरगृहान्दहत्येव, तथात्वे कस्य दुःखं चैतन्यस्यापरिच्छिन्नत्वाद्यावच्चैतन्यं तावत्तं व्याप्तुं शक्यत्वान्मध्ये सर्वोपाधिगतस्य दुःखानुभवः स्यादेव, तस्माद्विरुद्धमिति सिद्धम् । यदि न चैतन्यस्य दुःखं तर्हि जडस्य मुक्तिरिति सिद्धम् । रुग्णस्य देवदत्तस्य रोगे गते नहि यज्ञदत्तस्यारोग्यं घटते । यदि दुःखानुभव एव नास्ति तर्हि मुक्तिनिमित्तकस्य शास्त्रस्य प्रवृत्तिर्वृथेति सिद्धे कस्योपयोग्योऽयमेकजीववादः ? तस्मान्न्यायाम्नायविरुद्धोऽयमेकजीववादः ।

प्रकृतमनुसरति भगवान् श्रुतिकल्पलताकारः । एवं स्वकृतविचित्रयोनिषु विशन्निवेति स्तुत्या यत् '**असद्वा इदमग्र आसीत्**'[1] इत्यसत्कारणत्वाभासः स श्रुत्यात्र स्तुतिव्याजेन परिहृतः । स्वकृतनानायोनिषु प्रतिबिंबत्वेन प्रविशन्नित्यु-क्तत्वात् । ननु किमीश्वरो निर्घृणो दुःखायतनविविधयोनिकरणात् स्वयं साक्षित्वेन पृथक्स्थित्वा प्रतिबिंबभूतानां विविधदुःखरूपयोनिषु निक्षिप्यमाणे निर्घृण एवेति सिद्धत्वादित्याशंक्य परिहरंति हेतुतयेति । कारणत्वादित्यर्थः । बीजात्तरुरिव किरण-कदंबान्मृषासलिलमहरहर्मध्याह्नकाले यथाविर्भवति तथा, तस्मात्स्वत एव मायावि-र्भवति '**यतः प्रसूता जगतः प्रसूतिः**'[2] इति श्रुतेः । अनादित्वेऽप्यहरहर्मृगांबुव-दुत्पत्तेरुत्पत्तिश्च विधीयते । तया शुद्धयेश्वरत्वं तदीक्षया जीवोपाधयः संभवंतीति, सिद्धेषु घटजलेषु स्वयमेव प्रतिबिंबान्याविर्भवंति । न तत्रेश्वरो निर्घृणः सर्वस्य तदी-क्षणादुत्पद्यमानत्वात्तदीक्षणस्यापि मायामात्रत्वान्न किमपि ईश्वरः कर्ता, तथापि प्रकृतेः सत्ताहीनत्वात्, अवस्तुत्वादधिष्ठानसत्तयैवेश्वरत्वस्य प्रकाशमानत्वादीश्वर-स्याखंडाधिष्ठानात्मत्वानुभवैकरूपत्वादीश्वर एव कर्ता प्रकृतिः कर्त्रीत्युच्यते । तस्मान्नानायोनिकरणं तेषु प्रवेशश्चानादितया भवत्येव न तत्रेश्वरो

१ तै. २।७। २ महाना. १।४।

निर्घृण इत्यनेन ब्रह्मप्रलयानंतरमप्यनादितया पुनः पुनः सृष्टिर्भवतीति सिद्धम्। तावता ब्रह्मणा सह क्वचिदेकस्य मुक्तौ सर्वेषां मुक्तिरित्येकजीववादिभिरुच्यते तदसिद्धम्, येषां पूर्वप्रलये ब्रह्मणा सह मुक्तिर्न तेषामुपाधीनां सर्गकाले पुनः प्रादुर्भाव इति सिद्धम्। तदभावाद्यद्येकस्य शुकादेः कस्यचिन्मुक्तिस्तर्हि जीवमात्रस्य मुक्तिरिति सिद्धे पुनरुपाधिसर्गान्नूतनोपाधिस्रष्टृत्वेन च जीवसर्गहेतुत्वादीश्वरे नैर्घृण्यसिद्धेर्नैकजीववादमतं वैदिकमिति सिद्धम्। नन्वनादिसंसारप्रवाहतया तस्य हेतुतया यदि न निर्घृणस्तथापि विषमत्वं दुर्वारं देवनृतिर्यगादिविषमसृष्टेरित्याशंक्य परिहरंति स्वकृतानुकृतिरिति। स्वकृतं जीवानां स्वकृतं कर्म तदनुरूपानुकृतिर्यस्य स त्वं च स्वकृतयोनिषु चकास्सीत्यन्वयः। तत्तत्कर्मानुपाधीन्कृत्वा प्रविष्टः सर्गादावित्यतो न विषम इत्यर्थः। एतावताप्येकजीववादो निरस्तः। यदि पूर्वप्रलये ब्रह्मणा सह सर्वेऽपि कस्मिन्नेकस्मिन्मुक्ते मुक्तास्तर्हि कुतस्तेषां स्वकृतं? ततस्तदसिद्धमिति भावः। नन्वनादितयापि जगतः कोऽपि नैतावत्पर्यंतं मुक्तस्ततस्ततः पुनः सर्गः प्रवर्तत इति ब्रूम इतिचेदस्मिन्वा सर्गे कश्चन शुकादिः कोऽपि मुक्तो वा न वा? यदि मुक्तः शुको मुक्त इत्यादिप्रमाणसिद्धत्वात्, तर्ह्यग्रे पुनः सर्गो भविता वा न वा? आद्ये तव सिद्धांतभंगो वा नूतनजीवकर्तुरीश्वरस्य वैषम्यं वेति सिद्धम्। द्वितीये तु '[१]ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः' इत्यादिश्रुतिसिद्धपुनःपुनरुद्भवरूपस्य सनातनत्वस्य श्रवणान्नैवं घटते। ननु दैनंदिनप्रलयादिषु नष्टं पुनर्विश्वमुत्पद्यते ततः सनातनमित्युच्यत इतिचेत्तावत्पर्यंतं ब्रह्मप्रलयानंतरं पुनः सर्गो यथा तथाग्रेऽपि भवितैव, ततः सनातन इत्युच्यते प्रवाहरूपसनातनत्वात्। अन्यथा तु अश्वत्थो न श्वः स्थास्यतीत्यश्वत्थो नश्वरः तस्मात् दैन्ये नष्टं पुनरुत्पद्यते तथा ब्रह्मप्रलयानंतरं च भविष्यमाणत्वादेव सनातनत्वं श्रुतयोऽग्रे वदिष्यंति '[२]नासदासीन्नो सदासीत्' इत्यादि पूर्वप्रलयानंतरं पुनः '[३]तम आसीत्तमसा गूढमग्रे प्रकेतं सलिलं सर्वमा इदम्। तुच्छेनाभ्वपिहितं यदासीत्तपसस्तन्महिना जायतैकम्। कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्' इत्यादिश्रुतिसिद्धत्वादिममर्थं श्रुतयोऽग्रे। तस्मादिदमखिलं चराचरं विश्वं पूर्वत्र नष्टमपि जातमतोऽप्यग्रे भविष्यत्यतोऽश्वत्थत्वात्सनातनत्वं चेति प्रवाहरूपत्वम्, तत एव सनातनशब्दस्य मुख्योऽर्थ इति सिद्धे मुख्ये सति गौणस्यान्याय्यत्वात्तदसिद्धम्। तथाच त्रिणाभिचक्रमजरमनर्वमित्याद्यनर्वत्वम्, तथाच तथैवाजरत्वमिति सिद्धे नश्वरत्वेऽप्यनर्वं यथा प्रवाहरूपेणानादितया भवतीत्यनर्वं तथैवाजरं च पुनःपुनर्भविष्यमाणत्वात्। तत्र यद्यजरत्वं

१ काठ. ६।१। २ ऋ. सं. ८।७।१७। ३ ऋ. सं. ८।७।१७।

गौणं तर्हि अनर्थत्वं च गौणं स्यात्ततो मुख्ये संभवति गौणार्थः सतां सदस्यशोभन इति सिद्धम् । तथाच गौणोऽप्यर्थोऽङ्गीकरणीयः स्याद्यद्येकस्मिन्मुक्ते सर्वे मुक्ता इति श्रौतं स्मार्तं पौराणं वा प्रमाणं स्यात्तदभावे तदभावः, तथाचासंख्यतयोत्पन्नेषु जगत्सु न कोऽपि ज्ञानवानासीन्न कोऽप्युपासक आसीन्न कस्यापीश्वरेण ज्ञानं दत्तं न च कश्चन मुक्त इत्यहो क्लिष्टकल्पना । तथापि 'ब्रह्मणा सह मुच्यंते' इति तन्मतं, तत्र ब्रह्मणो मुक्तेरेव सर्वेषां मुक्तिः स्यात्ततो न पुनरन्यसृष्टिः संभवति । नन्वेकजीवत्वं मायाया एकत्वादगत्यापर्यंगीकर्तव्यत्वादित्यादिसिद्धांतोऽङ्गीकरणीय एवेति चेदिदमेवाज्ञानमूलम् । माया कापि वस्तु इत्युच्यते उतावस्तु ? आद्ये त्वद्वैतभंगः । द्वितीये अवस्तुनो नाशः किं देवदत्तदेहनाशवद्वा मृदितरा वस्तुतो घटस्येव भंग इति वा ? आद्ये वस्तुत्वे सिद्धे पूर्ववदद्वैतसिद्धिः, द्वितीये त्वेकस्मिन् घटे भग्ने नान्यो घटो भग्नो नच घटभंगे मृद्भंगो घटस्य कालत्रयेऽपि मृदोऽन्यथात्वानुपपत्तेस्ततोऽन्यघटानां विद्यमानत्वादन्येषामस्त्येवं भ्रम इति सिद्धे कुतः सिद्धांतभंगः । ननु घटे भग्ने पुनर्घट उत्पद्यते तावता लयवन्मुक्तिरितिसिद्धे त्वसिद्धमिति चेन्नात्राविद्याकार्यस्य घटत्वोपमयायमर्थः साध्यते । किंतु कारणाविद्याविद्याया एव घटत्वेनोपलक्षीकृत्य घटनाशे यथा मृदेवावशिष्यते । नच नष्टो घटो वस्तु तथाऽविद्यानाशे ब्रह्मैवावशिष्यते नचाविद्या वस्तु । ततः परं पुनर्घट उत्पद्यत इतिचेदविद्यानाशे जगत्कारणं ब्रह्मैवायं किंतु न स घट उत्पन्नः सोऽन्य एव । ननु घटवत्स्थूलदेह एवेति वस्तुव्यंजनसूक्ष्मोपाधिघटवद्दृश्यधर्मराहित्यात्, घटादिविकृतेर्दृश्यत्वात् 'वाचारंभणं[1] विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतेरिति चेन्मैवम् । ब्रह्मणोऽप्यदृश्यत्वे मृत्साम्यत्वाल्लिंगदेहादेः सत्यत्वापत्तेः मृत्तिकेत्येव यत्तदेव सत्यमित्यत्र न केवलं दृश्यमेव मिथ्या, किंतु प्रतीतिविषयं सर्वं दृश्यमेव । वायोः स्पर्शमात्रगोचरत्वे दृश्यत्वाभावे सत्यत्वापत्तेः सर्वं मिथ्यैवेति वाच्यम् । ब्रह्मैव सत्यं माया तत्कार्यमशेषं मिथ्यैवेति श्रुत्यर्थतो ब्रह्मविलक्षणत्वेन यत्किमपि तत्सर्वं घटवदिति सिद्धत्वे विद्याया घटविकाररूपत्वमिति सिद्धम् । तस्माद्यद्येकस्मिन्घटे भग्ने सर्वेऽपि घटा भग्ना इति चेत्प्रतीयेत तर्हि कुसिद्धांतोऽपि सत्सिद्धांतत्वेनांगीकर्तव्यः । तदभावे तदभावः । ननु मृदः परिच्छिन्नत्वान्न दृष्टांतो घटत इत्यपि चेन्नहि दृष्टांते सर्वसाम्यं तत एव श्रुतिसिद्धोऽयं न्यायः । अत्र केचिन्मायाया अनेकत्वं मन्यंते । तत्र 'इंद्रो[2] मायाभिः पुरुरूप ईयते' इति श्रुतिप्रमाणं पठंति तेऽप्यदीर्घदर्शिन एव। एकजीववादपूर्वपक्षबलभीत्या यत्र माया नष्टा तत्र मुक्तिरिति बहुजीवत्वसाधनायां-

---

१ छां. ६।४।१। २ बृ. २।५।१९।

गीकृतोऽयं पक्षः सोऽप्यनतिशोभनः मायाया अवस्तुत्वात् । अप्रतीयमानत्वान्मायोपाधय एव मायेत्युच्यते तन्नाशे मायाकृतबंधनाशः। या च कारणरूपा न तस्या उपलब्धिः। न च बंधे मोक्षे वा तस्याः प्रतीतिः किंतु तत्कार्याविद्ययैव बंधः तन्नाशे मायाकृतबंधनाशः स्वरूपप्राप्तिश्च। या तु कारणरूपा माया सा किरणकदंबेष्विव कापि मृषा सलिलावभासिका शक्तिस्तद्वन्मृदि कापि नानाघटादिरूपोपाधिकारणभूतेति तत्कार्यघटादिरूपैरनुमीयते, न च सा कारणत्वेन प्रतीयमानत्वान्नैवास्तीति वक्तुं शक्यते घटकार्यकारणत्वात् न सापि मृदेवेति वक्तुं शक्यते । घटादितत्कार्येषु मृदो मृत्त्वान्यथानुपपत्तेः। मृदो घटरूपत्वे विकारत्वाभावात्, कार्यविकारस्य कारणशक्तिं विना संभवाभावात् यथा मृत्स्वप्रकाशा तथा न च घट एव स्वकारणशक्तिरूप इति वक्तुं शक्यते। घटोत्पत्तेः प्राक् कारणत्वेन मृदि विद्यमानत्वे घटाकृतिरूपभावात्। नच बीजे वटवन्मृदि स्थितस्य घटस्य मृदेव कारणं स्यात् वटस्य यथा बीजे, किंतु स्वकारणशक्तौ लीनः स्थित इत्येव वाच्यम्। बीजवन्मृत्त्वनाशाभावात् जातेऽकुरे बीजस्यैवांकुररूपापत्तेर्न बीजे वटवन्मृदि घटः किंतु स्वकारणशक्तावेवेति वाच्यम्। सा चानुत्पन्नेऽपि तस्मिन्मृदितरकारणशक्तिरस्त्येव तस्मिन्भग्नेऽपि घटांतरोद्भवस्य संभावितत्वात्। ननु नष्टे घटे पुनर्घट उत्पद्यते एतावता प्रलयवन्मुक्तिरिति सिद्धे तदसिद्धमिति चेत्, अविद्याकार्यस्य घटदृष्टांते स्यादियमाशंका, किंत्वविद्यैव यत्र घटत्वेनोपमीयते तत्र नास्य पूर्वपक्षस्यावसरः। मामहं न जानामीतिरूपाविद्यावरणे घटोपमिते भग्ने मृद्वदवशिष्टं ब्रह्मैव, ततः पुनर्यदि प्रपंचोत्पत्तिसमये उद्भूता अविद्योपाधयस्तावताऽस्याऽप्युपाधिरुत्पन्न इति कुतर्को दुर्घटः। यथा भग्नो घटो नष्ट एव पुनर्मृदि यद्युद्भूतो घटो न स पूर्वदृष्टो घटोऽयमिति घटते, यदि स एवायमिति चेत् स घटो भग्न इत्यसिद्धं, यदि भग्नस्तर्हि पुनरुत्पन्नस्तदन्य एवेति सिद्धम्। ननु तर्हि लयेऽप्यविद्योपाध्यभावस्तथा मुक्तौ चेत्तत्र घटोपमिताया अविद्याया उभयत्र भंगसाम्यात्पुनरुद्भवसाम्यं च ब्रूम इतिचेन्नहि दृष्टांते सर्वसाम्यं, तथापि मुक्तौ घटभंगवत् भंगश्च, लये स्वपक्वकुंभस्य पुनर्मृत्पिंडवत् प्रकृतौ लयश्च मृत्पिंडस्य भुवि निक्षिप्तस्य भूमीतरत्वेनानुपलभ्यत्वेऽपि भूम्येकत्वेऽपि पुनर्घटोत्पत्तिकाले कालकुलालनिमित्तकारणात् मृदः सकाशात्पिंडरूपेणाविर्भवति मृत्पिंडाद्घटो भवतीति न्यायेन चिंत्यं किंतु नहि दृष्टांते सर्वसाम्यम्। **'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यं'**[1] इति श्रुत्या मृदेकसत्यत्ववत् परमकारणब्रह्मसत्यत्वं च मृत्पिंडादि घटाद्यशेषकारणसहितकार्यस्य मिथ्यात्वमुपपाद्यते न मृदः सकाशादुत्पत्तिक्रमेण लयोऽपि चिंत्यः। तत्र मृद्ब्रह्मणोश्चलत्वाचलत्वपरिच्छि-

---

१ छा. ६।४।१

सत्वापरिच्छिन्नत्वादिवैलक्षण्येऽपि निर्विकारित्वसत्यत्वमात्रे दृष्टांतः । त्वत्पुत्रसदृशो राजेतिवन्मृद्वत्सत्यं ब्रह्म मृत्पिंडादिवदसत्यं प्राकृतकारणं कार्यं चाशेषमित्येव । यथा त्वत्पुत्रसदृशो राजेत्यत्र रूपमात्रं राज्ञस्त्वत्पुत्रसदृशत्वमनुमेयं, तथात्राप्यक्षरमिंद्रियातीतमचलं सच्चिदानंदं यदि मृत्सदृशं तर्हि मृदः खननचालनपिंडीकरणवद्ब्रह्मणोऽप्यनुमेयं, तथानुमिते प्रमाणविरोधान्नात्र दृष्टांतो घटत इति वक्तुमुचितं, न्यायस्य श्रुतिसिद्धत्वाच्चयायांतरसिद्धत्वाच्च, ततस्तु लये घटकदंबस्य मृत्पिंडकदंबे लयो मृत्पिंडकदंबस्य मृद्राशौ तत्र मृत्सामान्यत्वादपृथक्प्रतीतिश्च पुनर्घटरचनाकाले मृत्पिंडरूपेणाविर्भावस्ततो घटादिरूपः सर्ग इति न्यायेन दृष्टांतत्वैकत्वेन ग्राह्यस्तदन्यथा तु किं तद्यद्ब्रह्म दृष्टांतयोग्यं स्यात् ? शुक्तेः परिच्छिन्नत्वजडत्वानित्यत्वेऽपि मृषा रजतविवर्ताधिष्ठानत्वे जगद्विवर्ताधिष्ठानसाम्येनापरिच्छिन्नं नित्यं सच्चिदानंदं ब्रह्म ग्राह्यं, तस्माद्घटाद्याकारविकारस्य मिथ्यात्वेऽपि मृदो निर्विकारत्वसत्यत्वात्तत उत्पन्नघटादेः सर्गश्च लयश्च नित्यः स्यादतो न विरुद्धं, किंतु शुक्त्यादिरजतादिसत्यासत्यदृष्टांतेष्वयमेव मुख्यो दृष्टांतः । घटस्य मिथ्यात्वेऽपि यथा जलाहरणादिकार्यक्षमत्वं न तथा शुक्तिगतरजतस्य कटकादिरचना संभवति, तस्माद्मृद्गतमृत्पिंडघटादिविकारकारणभूता कापि मृदि शक्तिरनुपलभ्यमानाप्यस्ति, तथा ब्रह्मणि कारणमाया विद्याविद्योपाधिकदंबत्वहेतुभूता तदनन्यत्वेन ब्रह्मण्यद्वैतरूपेण वर्तते । तत्र विद्या परमेश्वरोपाधिरेक एव । अविद्योपाधयस्त्वनेका मृत्पिंडघटादिविकृतिरूपास्तत एवोत्पद्यंते । यथाच वक्ष्यत्येकादशे भगवान् '**विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् । मोक्षबंधाकृती आद्ये मायया मे विनिर्मिते**' इति । ततः कार्यमाया कारणमाया द्विविधापि मायाशब्दवाच्या । घटादिरूपा कार्यमाया दृश्यतेऽपि घटावस्तुत्वान्मायाशब्दवाच्या नास्तीत्यर्थः । अवस्तुत्वान्नास्त्यपि दृश्यते मायाशब्देनोच्यते मायाया दृश्यत्वात् यापि माया दृश्यते सापि नास्त्येवेत्यर्थः । एवमेव कारणमाया मृद्यनुपलभ्यत्वान्नास्त्येव सा । का ? या तु घटादिविकारकारणभूता नास्तीति वक्तुं शक्यते । तस्माद्या त्वस्तीत्यनुमेया सा याशब्देनोच्यते । अनुमेया सा या अनुपलभ्यत्वान्माऽपि तत्रानुमेयत्वादस्तीति या एवं मायायामेत्यनुलोमप्रतिलोमतया मायाशब्दस्य स एवार्थः । तस्मात्सर्वत्र मृदेकैव घटादिपरमकारणभूता यथा कापि शक्तिरेवं माया ब्रह्मणि, सा च नाविद्या न च विद्या । यथा च घटदृष्ट्या मृदज्ञानं मृदृष्ट्या मृद्ज्ञानं च तदुभयविलक्षणा मृदि कारणभूता शक्तिर्यथा तद्वद्देहादिमाया कार्यात्मत्वदृष्ट्या ब्रह्मात्मविषयाऽज्ञानं अविद्या च । ब्रह्मज्ञानेन ब्रह्मात्मप्राप्तिर्विद्या तदेतद्द्वयं तस्या एव सकाशादुत्पद्यते । या तु लयेऽपि '**नासदासीन्नो सदासीत्तदानीम्**' इति

१ भा. स्कं. ११।११।३। २ ऋ. सं. ८।७।१७।

किमपि न यत्र न चापि नश्वरबीजे वटवत् सनातने बीजे मृदि घटादिकारणशक्तिव-त्काप्यस्त्येव शक्तिः, या पुनर्जगज्जन्मादिकारणभूता मायाविर्भवति सा तु न विद्या न चाविद्या, न च कापि वस्तु नापि नास्तीति वक्तुं शक्यते सा कारणभूता माया रज्ज्वां सर्पावभासिकेव मृदि घटादिकारणभूता तामतर्क्यत्वादनधिगम्य केचिद्वदं-तोऽपि भ्रमंति । केचिदेकजीवत्वमाहुर्मायाया एकत्वात् । केचिदनेकजीवत्वसाधनाय 'इंद्रो[1] मायाभिः पुरुरूप ईयते' इत्यादिश्रुतिप्रमाणान्मायाया अनेकत्वं साधयंति मायाभिः पुरुरूपत्वं। श्रुत्यातूपाधिरूपमायाकार्यानेकत्वमेवाभिधीयते । कारणमायाया अनेकत्वस्य न्यायविरोधात् । नहि मृदि घटादिनानाविकारकार्यस्य नानाकारण-शक्तयः संति अनुपलभ्यत्वात् । ननु यथैका तथा बह्व्योऽप्यनुमेया इति चेन्मै-वम् । नानाकार्याणां यथा परमकारणमेकमृदाख्यं तथैव कारणशक्तिरप्येकैव, तत्र परमकारणं मृदाख्यमेवालं कारणशक्तेः प्रयोजनं, किंतु दध्नि दुग्धत्वहानिवन्मृ-त्स्वान्यथात्वे मृदेकैव कारणमिति वक्तव्यं तदभावान्मृत्त्वान्यथात्वानुपपत्तेः कार्या-त्मकस्य काचित्कारणशक्तिर्मृद्यस्तीत्यनुमेया । तस्माद्ब्रह्मण्येका माया कारणभूता विद्याविद्योपाधिविलक्षणा च, विद्याविद्ये तत्कार्यभूते इति सिद्धांतः । अन्यथा विलक्षणयोर्विद्याविद्ययोः स्वतः स्वकारणत्वे तूभयोर्मायात्वं न स्यात्, नहि तेजसा तेजोनाशस्तमसा वा तमोभंगः । मास्तु इति चेत् दृश्यते शुक्त्यज्ञानस्य शुक्तिज्ञानस्य च रजतवच्छुक्तीतरत्वादवस्तुत्वान्मायात्वेऽपि विरुद्धधर्मत्वं तथोभयोरवस्तुत्वादु-भयोः कारणांतरं चिंत्यं, अयःशृंखलाया आयसशस्त्रच्छेदकत्ववदविद्याया विद्याकृत-नाशस्तत्र शृंखलाशस्त्रयोरयः परमकारणं घटस्य मृद्वत् । शृंखलाशस्त्रयोरवस्तुत्वे-नोभयोः कारणशक्तिः काप्यस्ति यथा, तथा ब्रह्मणि मायाप्यवस्त्ववस्तुकारणम् । तथा च सत्यबीजादसत्तरोरुद्भवो न स्यादिति न्यायेन ब्रह्मणो मायाया उद्भवो न घटते, तस्मादपि विद्याविद्ययोरीश्वरजीवोपाध्योः कापि कारणशक्तिर्ब्रह्मण्यस्तीत्य-नुमेयं, तर्हि द्वैतमिति चेदवस्तुत्वादग्नौ प्रकाशकशक्त्या यथा न द्वैतं तथा मायया ब्रह्मणि द्वैतं न घटते । सर्गादौ कार्यरूपया यत्र द्वैतं न घटते किं पुनः कारण-मायया क्वाप्यनुपलभ्यमानया तत्र न द्वैतशंका? तस्मान्न विरुद्धम् ।

प्रकृतमनुसरति भगवान् श्रुतिकल्पलताकारः—'स्वकृतविचित्रयोनिषु विश-न्निव हेतुतया तरतमतश्चकास्स्यनलवत्स्वकृतानुकृतिरि'त्यनेन पूर्वार्धेन नानोपाधि-प्रवेशात् 'असद्वा[2] इदमग्र आसीत्ततो वै सदजायत तदात्मानᳪस्वयमकुरुत' इत्यादिश्रुत्या असदग्रे आसीदिति स्वस्यासत्कारणत्वाभासपरिहारमिषेण भगवता नानोपाधिषु नानाप्रतिबिंबत्वेन प्रविष्टत्वाज्जीवानेकत्वादेकजीववादमतं निरस्य

---

१ बृ. २।५।१९। २ तै. २।७।१।

प्रसंगतो मायानेकत्वं च भगवता परिहृत्य विद्याविद्ययोः कारणमायात्वं च ब्रह्मण्युपपादितं, प्रस्तुतं तु 'विरजधियोऽन्वयंत्यभिविपन्यव एकरसम्' इत्यस्मिन्पद्ये पूर्वपद्योक्तलक्षणोपासका एकरसमन्वयंतीत्युक्त्वा तेषामपरोक्षतया श्रवणमननादिशास्त्रजन्यज्ञानं पूर्वार्धेन स्फुटीकृतम् । एवं तेषामपरोक्षसाक्षात्कारं शास्त्रजन्यज्ञानमुक्त्वा योगिनामपरोक्षसाक्षात्कारानंतरं सर्वं ब्रह्मेति सर्वत्र निरीक्षणेन संप्रज्ञातसमाधितयावस्थानं तदर्थं 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तुपारे । सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' इति श्रुतिश्च 'नेह नानास्ति किंचन' इत्याद्याः श्रुतय आहुः—अथ वितथास्वमूष्ववितथं तव धाम सममिति । अथ चिदेकरसे प्रतिबिंबबिंबैक्यसाक्षात्कारानंतरमित्यर्थः । वितथासु विगतं तथात्वं यासां ता वितथास्तासु अमूषु विचित्रयोनिष्वित्यनुषंगः । अवितथं न विगतं तथात्वं यस्य तदवितथं तव धाम स्वरूपं सममेकरूपं अन्वयंतीत्यन्वयः । अयमर्थः असत्यासु योनिषु सत्यं तव धामेति विवक्षया वितथासु अवितथमित्युक्त्या न्यायः सूत्रितः । घटादिविकाराणां दृश्यत्वेऽपि यथा वस्तुत्वेन प्रतीतिर्न तथा वस्तुत्वं मृदितरवस्त्वभावात् । तथा इमा योनयो मनुष्याद्याः, उपलक्षणमेतदमहदादितत्त्वसमूहशरीरिभिर्दैवैर्विरचितं ब्रह्मांडभांडं सावरणं च वितथमेव यथा वस्तुत्वेन भाति न तथा विचार्यमाणे वस्तुत्वेनोपलभ्यत इत्यर्थः । कुत इत्यपेक्षायां घटस्य मृदेकप्रकाश्यत्वाद्यथाऽवस्तुत्वं ततो मृदेव वस्तु प्रकाशतया परप्रकाशकत्वात्तथा तव स्वरूपमिति तात्पर्येणाहुः—अवितथं तव धाम सममिति । तव धाम समं घटादिनानाविकारेषु विषमेषु समं यथा मृदो मृत्त्वं तथा तव धाम चित्स्वरूपं समं तत एवावितथं घटत्ववन्मृत्त्वं यथा न वितथं स्वप्रकाशकत्वात् प्रकाश्यप्रकाशकत्वात् । तथा चिदेव सर्वत्र समं यथातथ्येन बुद्ध्या दृश्यते तस्य प्रकाशकांतराभावात् स्वप्रकाशत्वात् 'सा[3] काष्ठा सा परा गतिः' इति श्रुतेस्तदेकमवितथं मृद्वत्तदितरं तत्प्रकाश्यं वितथं घटादिवत् । एवमेवार्थः श्रुतीनां च । अथशब्देन यथा श्लोके विरजधियोऽन्वयंत्यभिविपन्यव एकरसं तदनंतरं वितथास्ववितथं तव धाम सममन्वयंतीत्यर्थः । सूत्रित एवं 'वेदाहमेतं पुरुषं महांतमादित्यवर्णं तमसस्तु पारे' इत्यपरोक्षसाक्षात्कारानंतरं '[4]सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' इति संप्रज्ञातनित्यसमाधिमभिधत्ते । सर्वाणि रूपाणि घटादिवद्विचित्य धीरो नामानि कृत्वा मृदितरवस्त्वभावात् घटादिरूपं सर्वं नाममात्रं तथा चराचराणि रूपाणि नामान्येवं चिदेव वस्त्विति पश्यन्नास्ते इति तात्पर्यम् ।

---

१ श्वे. ३।८। २ बृ. ४।४।१९। ३ काठ. ३।११। ४ श्वे. ३।८।

'**नेह नानास्ति किंचन**' इति श्रुतेः। अस्याश्च श्रुतेः स एवार्थः। घटादिनानात्वेऽपि मृदेकैव सर्वत्र दृश्यते मृदेकप्रकाश्यत्वात् चिदेकप्रकाश्यं चराचरं यन्नानात्वेन प्रतीयते तदिह इदंशब्दवाच्ये ब्रह्मणि किंचन किमपि नास्ति अस्मिन्घटादिकदंब इत्युक्ते त्विदं रजतमितिशब्देन यथा शुक्तिरेव लक्ष्यते तथा मृदेव तद्वच्चराचरे ब्रह्मैव तस्मिन्यस्तद्विलक्षणं चराचरं दृश्यते तन्नास्तीत्यर्थः। अत्र भेदवादिनो '**नेह नानास्ति किंचन**' इति श्रुत्या भगवदवतारनानात्वनिषेधं व्याकुर्वंति। तन्न घटते। नानात्वस्याप्रतीतस्य निषेधासंभवात्। श्रवणादिकार्यभावात्। यदि ज्ञातावतारः श्रोता तर्हि कनकस्यालंकारा इति ज्ञात्वा यथा कुंडलादिषु न कनकनानात्वं पश्यति, तथा भगवत एकस्यावतारा भिन्नाः स्युरिति वेत्त्येव नास्यावतारनानात्वप्रतीतिरिति सिद्धम्। एकस्यावतारा इति श्रवणं वा नानात्वेन श्रुत्वा ततो नेह नानास्तीति निषेध इति वा। आद्ये निषेधो न संभवति एकस्येत्यनेनैव सिद्धत्वात्। द्वितीये त्वश्रुतावतार एवेति सिद्धं यज्ञदत्तदेवदत्तादिचरित्रवद्रामकृष्णादिश्रवणम्। तत्र वसुदेवदशरथादीनामश्रवणे सर्वेषु नानात्वमिति सिद्धम्। यदा त्ववतारा एव पृथक्कृत्य नानात्वनिषेधस्तदा कुत इत्यपेक्षायामेकस्यावतारा इति वक्तव्ये तावन्निषेधो निरर्थक इति नासावधिकारीति सिद्धम्। यद्यश्रुतावतारस्तर्हि सति कुड्ये चित्रमिति न्यायात् भगवतोऽवतारानेव न वेद तस्य नानात्वनिषेधश्रवणमेव न संगच्छते। कोऽसौ भगवान् कथंभूता वा तस्यावताराः किंवा तेषु नानात्वमिति तेनाधिगंतव्यम्। ततस्तस्यावतारश्रवणाधिकार एव नावतारनानात्वनिषेधश्रवणाधिकारः। श्रवणं तु भगवानेक एव बहुरूपेणावतीर्ण इत्येव तत्र नानात्वनिषेधः सिद्ध एव। यदि वक्ष्यमाणेष्ववतारेषु नानात्वमित्यादौ प्रतिजानीत इति चेद्वक्ष्यमाणा एकस्य कनकस्य नानालंकारास्तेषु नानात्वमित्यपि बालभाषितमेव। एकस्य कनकस्यालंकारा इति वक्ष्यति यदा तावता नानात्वनिषेधो भविष्यत्येव। तस्मात्केनापि प्रकारेण नावतारनानात्वनिषेधकल्पनात्र संगच्छते। नन्वेवमेव यदि ज्ञातात्मा तस्य नानात्वं नास्त्येव, यद्यज्ञानात्मा तस्यात्मैवोपदेश्यो न नानात्वनिषेधेन कृत्यमस्तीति चेन्मैवम्। ज्ञातात्मनो यथा स्वात्मप्रकाश्य एको जडोपाधिरेवं सर्वत्रात्मप्रकाश्याः सर्वे जडोपाधयस्तत्रात्मनां चिदेकस्वरूपाणामुपाधिकृतभेद एव न वास्तवो भेदस्तेषां च ब्रह्माभेदस्तत्त्वमसीत्याद्यनेकश्रुतिसिद्धत्वात् '**प्रज्ञानं ब्रह्म**' इति श्रुतेः। '**सत्यं ज्ञानमनंतं ब्रह्म**'[2] इति श्रुतेश्चिदेकत्वात्ततस्त्वखिलात्मैक्यादखिलजडस्यात्मैकप्रकाश्यत्वान्मृदेकप्रकाश्येषु घटेषु यथा मृदेव वस्तु तथात्मैव वस्तु घटादिकं यथा मिथ्या तथा चराचरोपाधय इति ज्ञातात्मनामत्रा-

१ बृ. ४।४।१९। २ तै. २।१।

धिकारः। तथैवाज्ञातात्मनश्च क्षित्यादीनामात्मैकप्रकाशत्वोपदेशेन मिथ्यात्वादात्मैव वस्तु न क्षित्यादय एवमुभयत्राधिकारत्वे सिद्धे स्वयमेवार्थो मुख्य इति सरघा इव श्रुतयो मधुवस्त्वस्वहत्सारमुद्गिरंति। अत्र भेदवादपूर्वपक्षाः। ननु यद्येक एव चिद्रस-स्तर्हि स्तुत्यस्य भगवतोऽपि प्राप्तो जीवानां सुखदुःखसंबंधः चिदैक्यात्। उपाधि-भेदान्नेति चेत् पादगतदुःखेन शिरस्स्थस्य चैतन्यस्य दुःखानुभवात्। एकदेहत्वान्नो-पाधिभेद इति चेत् छिन्ने पादांगुष्ठे शिरसश्छेदाभावात् एकदेहेऽप्यवयवभेदवद्विराण्मू-र्तेर्जगदन्वयित्वादुपाधिभेदेऽपि चिदैक्यादीश्वरस्य जीवानां च परस्परदुःखसंबंधस्य सिद्धत्वे तस्य संबंधस्य चानुभवाभावान्न्यायविरुद्धोऽयमर्थ इत्याशंक्य 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽव्ययात्मा' इत्याद्याः श्रुतयश्चिदैक्येऽपि चिद्भेदमुपपा-दयंत्यः परिहरंति–स्वकृतविचित्रयोनिषु विशन्निव चकास्सीति। स्वयं कृतासूच्चावचासु योनिषु विशन्निव वस्तुतस्तदभावात्, रवेः कलशेष्विव किंतु प्रतिबिंबत्वेनेतीवशब्देन सूत्रयंति। न च घटेष्वाकाशस्येव पूर्वसिद्धत्वात्। अतो जीवोपाधिषु घटेष्वर्क इव चकास्सि प्रकाशसे प्रतीयस इत्यर्थः। वाक्यानुरूपः श्रुत्यर्थः। अयं ज्योतिरात्मा ते-जोमंडलो विवस्वान् भिन्ना अपः प्रत्येको बहुधा अनुगच्छन् भिन्नो भवति यथा तथा अजोऽव्ययात्मा देवो द्योतमानात्मकश्चिदेकरसः क्षेत्रेषु उपाधिना भेदरूपः क्रियते न वास्तवो भेद इत्यर्थः। तथापि ह्येकघटस्थे चलिते रवौ न बिंबो रविर्न चेतरे प्रतिबिंब-रवयश्चला भवन्ति, तथाप्युपाधिलये वर्तमानेऽपि वस्तुतश्चलनभेदस्ततःपृथक्पृथगेव दुःखाद्यनुभव इति न्यायाम्नायसिद्धत्वान्न विरोधः। अत्र भेदवादिन उपाधिखंडन-मिति कुयुक्तिभिः श्रुतिप्रतिकूलं व्याकुर्वन्ति तदलमतिविस्तरैः, किंतु श्रुतिविरुद्धत्वा-द्भेदस्य प्रमाणराहित्यात्तन्मतस्यैवावैदिकत्वात्तदसिद्धम्। प्रकृतमनुसरति भगवान्।

ननु जीवचैतन्यानां तत्प्रतिबिंबत्वे सिद्धे त्वीश्वरे नैर्घृण्यं दुर्वारतया प्राप्तं कृपया यद्युपाधीनकुर्वन्नप्रविशन्नेव तिष्ठेन्न तर्हि जीवानां संसारः प्रसज्येत तथासत्यु-पाधिसर्गात्तत्प्रवेशादघृणीति सिद्धत्वान्नैवमिति चेत्परिहरन्त्य आहुः—हेतुतयेति। जगज्जन्मादिहेतुत्वात्। यथार्ककरेषु कुहकजलमहःपूर्वभागे स्वत एवोत्पद्यते, एवं ब्रह्मणि नानोपायरूपाया मायाशक्तेरनादित्वेऽपि प्रादुर्भावस्तत्रोपाधिरूपेषु सजल-घटेषु सिद्धेषु अर्कप्रवेशस्य दुर्वारत्ववदीश्वरस्य जीवोपाधिषु प्रवेशः। 'यतः प्रसूता जगतः प्रसूतिस्तोयेन जीवान्व्यचसर्ज भूम्याम्' इति श्रुतेः। यतः कारणात्तोयेन सत्वोपाधिना भूम्यां पार्थिवे पांचभौतिकत्वोपलक्षणम्। प्रतिबिंबत्वेन जीवानसृजदि-त्यर्थः। एवंरूपस्य जगतो जन्मादेरनादित्वान्नात्र नैर्घृण्यशंकावसर इति हेतुतयेत्यनेन

सूत्रयंति। नन्वस्तु नाम जीवसंसारस्यानादित्वात्तेषां दुःखभ्रमणं किंतु प्रवेशस्येश्वराधीनत्वाद्गजमशकादिषु प्रवेशतारतम्याद्वैषम्यं दुर्वारमित्याशंक्य परिहरंति–स्वकृतानुकृतिरिति। स्वयं कृता जीवानां स्वस्वकर्मार्जिता देहास्तान्स्वकृताननुकरोतीति स्वकृतानुकृतिः। यद्वा तत्तत्कर्मानुरूपास्वकृतानीश्वरेण कृतानिति। यावदुपाधिस्तावत्तस्मिन्नभसः प्रतिबिंबं भवतीतिवद्यावान्कर्मवशाद्वृद्धिं संकोचं वा देहः प्राप्नोति तावानेव तत्तज्जीवचैतन्यं व्याप्य तिष्ठतीति भावः। अत आहुः— तरतमतश्चकास्सीत्यनुषंगः। तस्माच्चिदैक्येऽपि चिद्भेदः चिद्भेदेऽपि चिदैक्यं अतो विरजधियोऽन्वयंत्यभिविपन्यव एकरसमित्युक्तम्। नन्वेकरसस्य सर्वेष्वात्मत्वेन विद्यमानत्वात्कथं सर्वैर्न दृश्यते कुतो वा विरजधिय एवान्वयंतीत्यपेक्षायां 'तिलेषु तैलं दधनीव सर्पिरापः स्रोतस्स्वरणाविवाग्निः'[1] इत्याद्याः श्रुतय आहुः—अनलवदिति। चकास्सीत्यनुषंगः। काष्ठादिष्वग्निर्यथा वर्तमानोऽपि न प्रतीयते, तथाप्येकस्मिकाष्ठे निर्मथनसंभूतस्याग्नेरपरोक्षे सर्वेष्वपि काष्ठेष्वग्निरस्तीति तद्विदामिव सर्वभूतेषु त्वमात्मविदां चकास्सीत्यर्थः। नहि दृष्टांते सर्वसाम्यम्। अग्नेः पृथक्त्वादेकत्रापरोक्षावेऽपि सर्वत्रानुमेयत्वम्। ब्रह्मण आत्मत्वादपरिच्छिन्नत्वान्निवृत्तायामविद्यायां ज्ञातृज्ञानैक्याद्यत्र मनस्तत्र त्वं चकास्सीति भावोऽधिगन्तव्यः। नन्वंगीकृतचिदेकरसत्वं तथापि नात्यंतमद्वैतं सिद्धं जडस्य पृथग्विद्यमानत्वादित्याशंक्य 'नेह नानास्ति किंचन'[2] इत्याद्याः श्रुतयः परिहरंत्य आहुः— अथ वितथास्वमूष्ववितथं तव धाम सममिति। अथ चिदेकरससिद्ध्यनंतरं वितथासु विगतं तथात्वं यासां योनीनां ता वितथास्तासु घटादिरूपैर्वस्तुत्वेन प्रतीयमानासु विकृतिषु तथात्वस्य घटत्वादेरविद्यमानत्वाद्यथा वितथा व्यर्थास्तथाऽखिलयोनय इत्यर्थः। 'वाचारम्भणम्'[3] इति श्रुतेः। एवंभूतासु वितथासु अमूषु अवितथं तव धाम न विगतं तथात्वं यस्य तदवितथम्। अविकारित्वात्सत्यमित्यर्थः। घटादिविकारेषु मृद इवाद्यंतमध्यकालत्रयेष्वप्यन्यथात्वानुपपत्तिस्तथा तव सत्यज्ञानानंतानंदस्वरूपस्य जगत आद्यंतमध्येष्वेकरूपत्वमित्यर्थः। एतादृशं तव धाम चिदेकरसस्वरूपमित्यर्थः। एवं कुत इति चेत्तत्राहुः— सममिति। सर्वदेशेषु कालेष्वेकरूपं कालत्रये घटादिषु मृदिव समं विकारवैषम्येऽपि सर्वत्र यत्समं अविशेषं तत्सत्यम् अवितथं, विकाराणां पूर्वोत्तरकालयोरविद्यमानत्वात् विकाराणां विकारांतरेष्वदर्शनात्। वर्तमानकाले वर्तमाने विकाररूपेऽपि विकाराणां देशविशेषत्वेन वैषम्येऽपि मृदेकमात्रत्वान्मृदितरवस्त्वभाववद्वितथा असत्या इति भावः। तथाच 'नेह नानास्ति किंचन'[4] इति

१ श्वेता, १।१५। २ बृ. ४।४।१९। ३ बृ. ६।४।१। ४ बृ. ४।४।१।

श्रुत्यर्थः। इह इदंकारास्पदे ब्रह्मणि नानात्वं यत्प्रतीयते तन्नास्तीत्यर्थः। 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः। अत्र भेदवादिनो नेह नानास्ति किंचनेति श्रुत्या भगवदवतारनानात्वनिषेधं व्याकुर्वन्ति, तन्न घटते। अस्य श्रवणाधिकार्यभावात्। यदि ज्ञातावतारस्तर्हि विज्ञातकनको यथा न कुंडलादिषु कनकनानात्वं पश्यति न तदर्थं श्रुतिप्रवृत्तिः। यद्यज्ञातावतारस्तर्हि सति कुड्ये चित्रमिव भगवतोऽवताराः संतीत्येव न वेद तस्य नेह नानास्ति इति वाक्योपदेशस्यानुपपन्नत्वान्नेह चोराः संतीति देशांतरवाक्यवत्। तथासति कोऽसौ देशो यत्र चोरा न संतीतिवत् कोऽसौ भगवान् किं वा अवतारकृतनानात्वमिति ज्ञानरहितस्यावतारश्रवण एवाधिकारो न नानात्वनिषेधश्रवणे, श्रुतावतारस्य तदसंभवाच्छ्रवणाधिकारो नास्त्येव, अतस्तदज्ञेन तु किं वा तद्बुद्धिगतं नानात्वं त्यक्त्वा किमैक्यं वाधिगंतव्यम्। तथा सति उन्मत्तवाक्यवच्छ्रुतिवाक्यमिति तन्मते सिद्धं, नैवं जगच्छास्तुर्जगच्छासनरूपं वेदवाक्यं भवितुमर्हति। नेह चोराः संतीत्येकदेशगम्यं न सर्वत्र शास्तृत्वं भजते। नन्वयमेव यदि ज्ञातात्मा तस्य नानात्वबुद्ध्यभावात्सर्वं खल्विदं ब्रह्मेत्यनुभवात् यद्यज्ञातात्मा तस्यापि नानात्वनिषेधशेषज्ञानाभावात् निषेधिते नानात्वे किं तद्यस्मिन्निह नाना नास्तीति नानात्वं निषिध्यत इत्यधिगन्तव्यम्। तस्मादुभयमतेऽप्यधिकार्यभावसाम्याद्वयमेवमेव व्याकरिष्याम इति चेन्मैवं, निषेधितस्य नानात्वस्य प्रत्यक्षत्वादेको विशेषः। नहि देशांतरचोरनिषेधवत् किंतु दृश्यमेव नानात्वं तत्कनकज्ञेनेव गुरुणा ब्रह्मज्ञेन कुण्डलादिष्विव नानात्वनिषेधे क्रियमाणे तर्हि किं तत्त्वमिति प्रश्नेन कनकैकत्वं चाधिगंतव्यमित्यज्ञातात्मनामत्राधिकारः सिद्धः। ज्ञातात्मनो विज्ञातकनकस्येव पूर्ववत्कुंडलादिभेदस्यादर्शनात्। पूर्वसंस्कारादपक्वयोगिनो बुद्धेरस्तु नानात्वप्रतीतिरित्युभयोरस्याः श्रुतेः श्रवणाधिकारस्य सिद्धत्वाच्चराचरनानात्वनिषेध एव सर्वं खल्विदं ब्रह्मेत्यनेकश्रुतिसिद्धत्वान्नावतारनानात्वनिषेध इति सिद्धं वेदविरुद्धार्थत्वम्। तथाच प्रतीतस्य नानात्वस्य निषेध एव स्यान्नाप्रतीतस्य तत्रावतारनानात्वस्योभयाधिकारिप्रतीतिराहित्यात्तदसिद्धम्। तस्मात्प्रतीतचराचरनानात्वस्यैव निषेध इति सिद्धांतः। तस्मात् '**नेहं नानास्ति किंचन**' इति, '**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति**' इत्याद्याः श्रुतयस्तु सर्वतः प्रतीतमेव नानात्वं निषेधयंति। अवतारनानात्वस्याप्रतीयमानत्वात् श्रवणैकगम्यत्वात् श्रवणसंपन्नानां नानात्वस्याप्रतीयमानत्वात् अप्रतीतनिषेधस्यान्याय्यत्वात्। न च श्रुत्युपक्रमोपसंहारादिष्ववतारप्रसंगश्चेति बहुदूषणार्हः पक्षः। अलमित्यादिग्रंथविस्तरैरित्यादिमतानामस्मिन्ननुभवैकवेद्ये न्यायाम्नायसिद्धे प्राचीनवेदांतो-

---

१ छां. ३।४।१। २ बृ. ४।४।१९। ३ का. २।४।११।

द्वारशास्त्रे पूर्वपक्षत्वस्याप्यधिकाराभावात् । तत्र ये तु योग्याः पूर्वपक्षास्ते क्वचिद्दृश्यंते तत्र भगवता श्रुतिकल्पलताकारेण ॥ ६ ॥

विरजबुद्धिमतोऽभिविपन्यवस्त्वनुभवंति निजात्मरसामृतम् ।
अवितथं वितथासु तवान्वयंत्यखिलनाथ समं निलयं परम् ॥ १ ॥
विरजबुद्धिमतोऽभिविपन्यवश्चिदचिदात्मकमेतदशेषतः ।
भगवतस्तव तत्त्वमिहान्वयंत्यहमनंत तदंघ्रिरजो भजे ॥ २ ॥

इति श्रीश्रुतिकल्पलतायां श्रुतिस्तुतौ षष्ठश्लोकव्याख्यानं नाम द्वादशोऽध्यायः ॥ १२ ॥

॥ इति द्वादशोऽध्यायः ॥

---

# त्रयोदशोऽध्यायः ।

ननु यद्यहं सूर्यवन्नानाघटजलरूपोपाधिषु प्रतिबिंबत्वेन प्रविष्टस्तर्हि बिंबस्य सूर्यस्य सर्वत्राविद्यमानत्वान्मम सर्वत्र सर्वोत्पत्तेः प्रागेव विद्यमानत्वान्नात्यंतिकोऽयं न्यायः, तथाचेत्सर्वगतत्वे यत्र प्रतिबिंबस्यावरणं तत्र बिंबस्यावरणमिति सिद्धे नायमर्थो घटत इत्याशंक्य नहि दृष्टांते सर्वसाम्यमिति न्यायाज्जीवेशयोः प्रतिबिंब-बिंबन्यायेन चिद्भेदश्चिदैक्यं च साध्यते, वस्तुतस्तु 'आकाशशरीरं ब्रह्म'[1] इति, 'आकाशवत्सर्वगतश्च नित्यः'[2] इति वयं श्रुतयस्त्वामाकाशदृष्टांतेनोपपादयामस्तथासति न किमपि विरुद्धमित्याहुः—

स्वकृतपुरेष्वमीष्वबहिरंतरसंवरणं
तव पुरुषं वदंत्यखिलशक्तिधृतोंऽशकृतम् ।

स्वकृतपुरेषु जीवकर्मानुरूपेषु स्वयं कृतेषु त्वया निर्मितेष्वित्यर्थः । पुरेषु देहेषु अमीषु दृश्येष्वित्यर्थः । तव अबहिरंतरसंवरणं वदंति । बहिश्चांतरं च संवरणमावरणमिति बहिरंतरसंवरणं तदुभयं नास्तीति अबहिरंतरसंवरणं यथा स्यात्तथा वदंति वेदविदो वेदाश्चेत्यर्थः । आकाशवदबहिरपरिच्छिन्नत्वादंतः कृतेऽप्यावरणे घटादिष्विवानावृतत्वात्तव बहिश्चांतश्चामीषु पुरेष्वावरणं नास्तीत्याम्नायास्तत्रतत्र न्यायतो

---

१ तै. १।६।२। २ छा. ७।२४।१।

वदंति । तद्विदस्तत्समन्वयेन व्याकुर्वंतीत्यर्थः। ननु तर्हि बिंबवत्प्रतिबिंबस्याप्येवमेव वक्तव्यमिति प्राप्तस्वात्तं चाप्येवं कुतो न वदंति? यद्युपाधिकृतपरिच्छेदादावृत इति घेदाकाशसाम्येन बिंबप्रतिबिंबयोरेकत्र विद्यमानत्वाद्वैलक्षण्याभावात्तत्रैव संतं बिंबमधिगम्यात्मानम् बहिरंतरसंवरणत्वेन कुतो न वेदेति चेदुपाधिकृतभ्रमात् सार्वभौमस्य स्वप्नकार्पण्यमिवास्यावरणं ततस्तस्य तन्न प्रतीयत इत्याहुः–अंशकृतं पुरुषं वदंतीत्यनुषंगः। उपाधिनांऽशः प्रतिबिंबरूपः कृत इत्यंशकृतस्तं पुरुषं वदंति । पुरि शेते इति पुरुषः देहे देहाभिमानरूपया निद्रया सुप्तत्वादाकाशवत्सर्वगतस्याहं प्रतिबिंबो यद्युपाधिव्यतिरिक्तमात्मानमहं द्रक्ष्यामि तर्हि नित्यावरणशून्य एवाहं बिंबस्याकाशतुल्यस्याबहिरंतरानावृतत्वादिति सर्ववेदविदो वदंति । यतस्तं पुरुषं निद्रितमिति वदंतीत्यर्थः । यदि स्वापो न स्यादाकाशस्य तत्प्रतिबिंबस्य चैकत्र विद्यमानत्वमिव जीवेशयोः सखायाविति श्रुतेर्निश्यसहयुक्तत्वाज्जीवेन तत्त्वं नावगंतुं शक्यं तन्निद्राभ्रमेणैव शेत इत्यतः पुरुषोऽयं बिंबतत्त्वं न वेद । '**अनादिमायया सुप्तः**' इति श्रुतेः । अयमभिप्रायः–घटे घटाकाश इव समष्टिदेहव्यापकोऽपरिच्छिन्न आत्मा घटे जलमिव सत्त्वं चित्तं जले प्रतिबिंबिताकाश इव जीवात्मा चैत्य इति संज्ञितस्तत्र बिंबप्रतिबिंबयोश्चिदेकमात्रत्वाज्जीवोपाधेः प्रतिबिंबचैतन्यस्य पराग्वृत्तिरूपत्वं तस्मिन्नुपाधौ च प्रतिबिंबाकाशे बिंबाकाशः प्रागेव स्वतःसिद्धोऽपि तदविद्ययाऽयं जीवस्तन्न वेद । निवृत्तायामविद्यायां तु यदा जीवोपाधेः सत्त्वस्य प्रत्यग्वृत्तिर्भवति तदा तु बिंबमेव पश्यति तेनैव सचेतनत्वं प्राप्य तदाकारतां भजते । नहि जडं प्रतिबिंबं यतो द्वयोस्तत्रावस्थानं स्यात्,किंतु चिन्मात्रत्वादुपाधेर्बिंबचैतन्याकारितत्वे तच्चैतन्यं नास्त्येव तस्याऽप्रतीयमानत्वात् । यथाहुर्नवीनवेदांतप्रवर्तकाः—'**बुद्धितत्स्थचिदाभासौ द्वावेतौ व्याप्नुतो घटम्। तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत्**' इति । पराग्वृत्तिविशिष्टं प्रतिबिंबचैतन्यं तदात्मन्यधिगते न दृश्यत इत्याहुः। '**[3]ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता । स्वयंस्फुरणरूपत्वान्नाभास उपयुज्यते**' इति । उपाधियोगेन स्फूर्तिर्येन चैतन्येन यदा तदा स एवात्मा, ब्रह्मसाक्षात्कारे त्वहंस्फूर्तेरस्फुरणात्पराग्वृत्त्यभावात् प्रतिबिंबप्रतीत्यभावात्तन्नास्त्येव चिदेकमात्रत्वात् । एवं नवीनशास्त्रेष्वपि समीचीनतयैव ब्रह्माद्वैतमीमांसा क्रियते, सापि भगवतः संमतैव, किंतु निर्विशेषयोगसाक्षात्कारं विनैव चिदचिद्विवेकज्ञानमात्रस्य पूर्णसाक्षात्कारत्वमाहुस्तन्न घटते । वृत्तिविशिष्टेन चित्तेन तावन्मात्रे ज्ञाते स्वात्मनि सगुणोपासनाया अनुपयोगमाहुस्तेन योगसिद्ध्यभावाच्छब्दज्ञानिनः संतो ज्ञानमानिनः प्रायो भवंतीत्यादि । क्वचित्क्वचित् ब्रह्मण आत्यंतिकानिर्वाच्यत्वादिकं पूर्वाचार्याणां मतविरुद्धं शेषमनवद्यम् ।

१ गरुड, १।१०। २ पंचदशीतृ. श्लो. ९१।३। ३ पंच. तृ. श्लो. ९२।

प्रकृतमनुसरति भगवान्। ननु बिंबप्रतिबिंबयोरन्योन्यसंयुक्तत्वात् प्रतिबिंबोपाधिकृतो भ्रमो बिंबस्यापि किं न स्यादिति चेत्तत्राहुः—अखिलशक्तिधृत इति अखिलाः शक्तीः धारयतीत्यखिलशक्तिधृत् तस्य तवांशकृतं पुरुषं वदंतीत्यनुषंगः। अयमर्थः—अविद्ययावृतो जीवो यस्य तव प्रतिबिंबः स त्वमखिलशक्तिधरः तास्वविद्याप्रतियोगिनी विद्याशक्तिस्तवोपाधिस्ततस्तव तदुपाधेर्न स्पर्शोऽपि स्यादिति भावः। किंच तव प्रसादेन तस्याविद्यानिवृत्तिः किं पुनस्तत्र तत्संप्राप्तिरित्याहुः—

**इति नृगतिं विविच्य कवयो निगमावपनं**
**भवत उपासतेऽघ्रिमभवं भुवि विश्वसिताः ॥ २० ॥ (७) ॥**

इति इतिकृत्वेति पूर्वपरामर्शः। यस्मात्तवावरणं नास्तीति कृत्वा कवयो विदिततत्त्वानुगतिं तव स्वरूपं विविच्य निगमावपनं भवतोऽघ्रिमुपासत इत्यन्वयः। नुर्जीवस्य जीवोपाधिगतप्रतिबिंबचैतन्यस्य गतिः प्राप्तिस्थानं यस्मिन्स नृगतिः तं, सुषुप्तौ समाधौ च प्रतिबिंबस्य बिंबैक्यान्नृगतिः षड्विंशं परमात्मतत्त्वं तं विविच्य हंसवत्क्षीरनीरविवेकन्यायेन जडोपाधिनिषेधशेषतयाऽशेषमायामयाद्विविच्य पृथक्कृत्वेत्यर्थः। एतावता ज्ञेयं समाधिगम्यं च षड्विंशतत्त्वमिति सूचयति। चतुर्विंशतिजडतत्वनिषेधेऽवशिष्टः पंचविंशश्चिन्मात्रोऽपि न स देहाद्बहिर्दृश्यते तथा सति बुद्धेर्न बहिर्विषयज्ञानं स्यात्स्वतःप्रकाशराहित्यात्, तस्मादज्ञानदशायामपि देहाद्बहिर्बुद्धेर्बिंबचैतन्याश्रयत्वं तदेव देहे पंचविंशतितत्त्वेषु घटजलप्रतिबिंबाकाशे घटगतमाकाश इवास्त्येव। तत्रैव सत्त्वजले ततः कर्दमकलुषीकृते सुषुप्तौ न सत्त्वजले चित्प्रतिबिंबाकाशो दृश्यते तदानीं तस्य बिंबाकाशैक्यमित्युच्यते। तस्य सर्वगतत्वाच्चिदात्मन्यधिगते सर्वत्र चिदात्मैव दृश्यते घटेषु मृदिव चराचरेषु प्रतीयमानत्वात्स षड्विंश एव न पंचविंशः। तथा च श्रुतिः—'तं[१] त्वौपनिषदं पुरुषं पृच्छामि' इति षड्विंश एवौपनिषत्पुरुषः, ततस्तु चिदचिद्विवेकेनाधिगत आत्मा नृगतिस्तु स एव तं विविच्य विवेकेनाधिगम्य सम्यक् साक्षात्काराय तव चरणद्वंद्वं भजंत इत्याहुः। निगमावपनं भवतोऽघ्रिमुपासत इति। नितरां गम्यते प्राप्यते षड्विंश आत्मेति निगमस्तदाकारपरिणते सत्त्वे,यदा तु प्रतिबिंबस्य बिंबैक्यं स एवापरोक्षानुभवो निगमः। तथाच श्रुतिः—'यदा पंचावतिष्ठंते' इत्यादि। तस्यावपनं आसमंतादुप्यतेऽस्मिन्नित्यावपनं सम्यगपरोक्षसाक्षात्कारक्षेत्ररूपं भूमौ बीजं यथोद्भवति तथा तव चरणे सम्यक्साक्षात्कार इति भवतोऽघ्रिमुपासत इत्यर्थः। वक्ष्यत्युत्तरश्लोकेऽपि दुरवगमात्मतत्वनिगमायेति। तत्रापि निगमशब्दस्यायमेवार्थः—चिदचिद्विवेक-

१ बृ.३।९।२६।

संपन्नाः सम्यक्साक्षात्काराय त्वदंघ्रिमुपासते, श्रवणकीर्तनादिना सर्वकर्मनिवेदनेनोपासत इत्यर्थः । नन्वव्यक्तोपासनयैव सम्यक्साक्षात्कुर्वंतु नाम किं ततः सगुणस्य मायाशबलितस्योपासनयेति चेत्तत्राहुः—भुवि विश्वसिता इति । भुवि अस्मिंल्लोके विश्वसिताः भगवानेवास्मानुद्धर्तेति विश्वासेन युक्तास्त्वदनन्यविश्रब्धा इति भावः । यथाह भगवान्—'ये[1] तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायंत उपासते ॥ तेषामहं समुद्धर्ता मृत्युसंसारसागरात्' इत्यादि । कथंभूतमंघ्रिमुपासत इत्यपेक्षायामाहुः—अभवमिति । न विद्यते भवः संसारो यस्मिन्नुपासित इत्यभवस्तं, संसारमूलाविद्यानिवर्तकमित्यर्थः । अस्मिन्पद्ये नृगतिं विविच्य निगमावपनं भवतोऽघ्रिमुपासत इत्यनेन चिज्जडविवेकेनात्मतत्त्वाधिगमानंतरं ज्ञानिनां सम्यक्साक्षात्काराय तवांघ्रिभजनमेव कारणं ततः स एव सदाचार इति श्रुतयः स्तुवंतीति द्रष्टव्यम् । यथाह भगवान्—'ये[1] तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायंत उपासते ॥ तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥' इति । ये तु सर्वाणि कर्माणि मयि भगवति षड्गुणे संन्यस्य समर्प्य मत्पराः अहमेव परः सर्वेश्वर उपास्यो येषां ते मत्पराः, देवतांतरभजनरहिता इत्यर्थः । एवं ये मामुपासते तेषामहं समुद्धर्ता सम्यगुद्धर्ता भवामि । न तु केवलाव्यक्तोपासकानामिवाधिकतरक्लेशैस्तानुद्धरामि । किंतु सम्यगनायासेनेति भावः । तदुक्तं पूर्वत्र 'क्लेशो[3]ऽधिकतरस्तेषां' इति । ननु ये तु अक्षरमनिर्देश्यमव्यक्तं पर्युपासते । तेषां न सम्यगुद्धर्ता भवसि । किंतु ये सगुणं त्वामुपासते तेषामेवसमुद्धर्ता भवसि चेदलं तत्त्वज्ञानेन । तथा सति 'ज्ञानादेव तु कैवल्यम्' इति निरर्थकः सिद्धांत इत्याशंक्याह अनन्येनैव योगेनोपासत इति । न विद्यतेऽन्यन्मनःकल्पितं रूपं किमपि यस्मिन्नित्यनन्यो य आत्मयोगस्तेन निर्विशेषे चित्तं स्थिरीकुर्वंतः संतः उपासत इत्यर्थः । ततस्त्वेवकारात् पूर्वत्रोक्ता अव्यक्तोपासका यं योगमभ्यसंतः क्लेशभाजो भवंति तेनैवानन्ये न योगेन उपासते उप समीपमासते चिदाकारेण मनसेति भावः । तर्हि अव्यक्तोपासकेभ्यः को विशेष इति चेत्तत्राह मां ध्यायंत इति । मां सगुणं ध्यायंतः संत एतत्प्रसादेन योगसिद्धिं प्राप्स्याम इति मत्पराः संतः अनन्येनैव योगेन मां ध्यायंत उपासते तत एवोत्तरपद्यचतुर्थचरणेनाप्याह—मय्यावेशितचेतसां इति । मयि निर्विशेषे आवेशितं चिदाकारपरिणामं नीतं चेतो येषामित्यनेन विदितात्मान एव ते किंतु सर्वाणि कर्माणि मयि संन्यस्य मत्परा देवतांतरभजनरहिताः सगुणं ध्यायंतः विदिते तत्त्वे किमधुना भगवदुपासनयेति ज्ञानमान-

१ भ. गी. १२।६। २ भ. गी. १२।७। ३ भ. गी. १२।५

रहिता इति विशेषादहं समुद्धर्ता भवामि, योगसिद्धिं ददामीत्यर्थः। कल्पतरुस्वभावत्वात्। तदुक्तं चतुर्थेऽध्याये 'ये[1] यथा मां प्रपद्यंते तांस्तथैव भजाम्यहं' इत्यतो नाव्यक्तमात्रोपासकानां, किंतु मद्भक्तानामेव समुद्धर्ता भवामि, तथापि मयि न किमपि वैषम्यमिति भावः। अत्राव्यक्तमात्रोपासनाभिमानिनस्त्वन्यथैव व्याकुर्वंति —ये त्वक्षरमनिर्देश्यमव्यक्तनित्याद्युपासका ज्ञानिनः, 'ये[1] तु सर्वाणि कर्माणि मयि संन्यस्य' इत्यादि, 'तेषामहं समुद्धर्ता' इति य उक्तास्ते सगुणोपासका अविदिततत्त्वा इत्युपदिशंति, तावता त्वव्यक्तोपासकाः क्लेशाधिक्येऽपि कैवल्यं प्राप्नुवंति नाव्यक्तोपासकानां सगुणभजनप्रयोजनम्। ततः सगुणोपासका अविदिततत्त्वा इति साधयितुं ततोऽनन्ययोगेनेत्यत्र न विद्यते अन्यो भजनीयो यस्मिंस्तेन योगेनेति वदंति। अन्यैर्हेतुभिरत्र सगुणोपासका अज्ञा इति व्याकृत्य ज्ञानिनां सगुणनैरपेक्ष्यं साधयंति। तन्न घटते। अव्यक्तोपासकेभ्यो विदिततत्त्वेभ्यो ज्ञानहीनानां श्रेष्ठत्वसिद्धेर्न्यायविरुद्धं तथा श्रुतिविरुद्धं च। '[2]अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' इति श्रुतेः। ननु शास्त्रश्रवणेन सर्वं ब्रह्मेति श्रुत्वा भगवंतमद्वयभावेन भजंतीति ब्रूम इति चेत् जिज्ञासव इति सिद्धं, तथापि ज्ञानिभ्यः श्रैष्ठ्यं नार्हंति। तदुक्तं सप्तमेऽध्याये—'[3]चतुर्विधा भजंते मां जनाः सुकृतिनोऽर्जुन। आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥ [4]तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इति तदत्र विरुध्यते। नन्वर्जुनस्य सगुणभजनाधिकारित्वात्सगुणोपासका अत्र स्तुता भगवता, वस्तुतस्त्वव्यक्तोपासका एव श्रेष्ठा इति। तदपि न घटते यत इत्यादि। अलमतिविस्तरैः॥ २०॥ (७)॥

अबहिरंतरसंवरणो भवानिति विविच्य निजात्मगतिस्तव।
भवहरं निगमावपनं पदं हृदि भजे भुवि विश्वसितो हरे॥ १॥

इति श्रीश्रुतिकल्पलतायां त्रयोदशोऽध्यायः॥ १३॥

॥ इति त्रयोदशोऽध्यायः॥

---

१ भ. गी. १२।६। २ बृ. १।४।१०। ३ भ. गी. ७।१६। ४ भ. गी. ७।१७।

# चतुर्दशोऽध्यायः।

एवं पंचमश्लोकोक्तहठविलक्षणत्वेनात्मज्ञानिनश्च तेषामुपासनामार्गाश्च श्लोकद्वयेनोक्तास्तत्र पूर्वश्लोके–नृगतिं विविच्य कवयो निगमावपनं भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिता इत्यात्मतत्त्वमधिगम्य मुमुक्षवः सम्यक्परोक्षसाक्षात्काराय तवांघ्रिमुपासत इत्युक्तम्। अथापरोक्षसाक्षात्कारसंपन्ना जीवन्मुक्तास्तव कथामृतसमुद्रमग्नाः करकलितमपि मोक्षं न बहुकुर्वंतीत्याहुः—

दुरवगमात्मतत्त्वनिगमाय तवात्ततनो-
श्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः॥
न परिलषंति केचिदपवर्गमपीश्वर ते
चरणसरोजहंसकुलसंगविसृष्टगृहाः॥ २१॥ (८)॥

भो ईश्वर, केचिद्विरला भक्तिरसिका अपवर्गं मोक्षमपि न परिलषंति नेच्छंति, करगतमपि न बहुकुर्वंतीत्यर्थः। तर्हि किं धर्मार्थकामुका इति चेन्नेत्याहुः—ते चरणसरोजहंसकुलसंगविसृष्टगृहा इति। तव चरणसरोजयोर्हंसा इव रममाणास्तेषां कुलं समूहः शिष्यप्रशिष्यरूपं तेन संगस्तेन विसृष्टास्त्रिवर्गमूला गृहा यैस्ते। '**सद्भिः संगं प्रकुर्वीत**' इत्युक्तेः। पुनः कथंभूतास्ते इत्यपेक्षायां अपवर्गाभिलाषत्यागहेतुगर्भविशेषणेन तेषां भक्तिरसिकत्वमाहुः—तवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणा इति। तवात्ततनोरंगीकृतनानाविधदिव्यविग्रहस्य रामकृष्णादिरूपेणावतीर्णस्य चरितमेव महामृतं प्रसिद्धामृतादधिकतरं तस्याब्धिः श्रीमद्भागवतादिरूपस्तस्मिन्ये परिवर्ता आवर्ता मध्ये मध्ये भक्तजनैः सह लीलाप्रसंगास्तेषु यः परिश्रमः श्रवणवर्णनादिरूपस्तेन परिश्रमणं सुखं येषां ते तथा। अयमर्थः—समुद्रादिषु यत्रावर्तास्तत्र तत्रांभसां भ्रमास्तेषु गत्वा मग्नस्य न ततो निर्गमस्तेन तस्य भ्रमस्तथा यत्रावतारचरितेषु वात्सल्यादिगुणप्रसंगास्तत्र महत्या प्रीत्या माधुर्यातिशयान्मग्नं मनो येषां न निःसरति किंतु तत्रैव भ्रमति तस्य पुनः पुनः श्रवणवर्णनादिना यः श्रमः स तेषां कैवल्यसुखादधिकतरो भवति, ततस्तु ततो निर्गत्य समाधिसुखमपि न परिलषंति कथंचिदपि नेच्छंतीत्यभिप्रायः। तदुक्तं द्वितीयस्कंधे योगिसार्वभौमेन श्रीशुकेन—'**परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया। गृहीतचेता राजर्षे आख्यानं यदधीतवान्। तदहं तेऽभिधा-**

१ भा. स्कं. २।१।९।

स्यामि' इति। नैर्गुण्ये परिनिष्ठितोऽपि सम्यक्प्राप्तनिर्विकल्पसमाधियोगोऽपि उत्तमश्लोकवार्तया गृहीतचेता यदधीतवानस्मि 'समाधिसुखादपि यदधिकं प्राप्तोऽस्मि तत्तेऽभिधास्यामि, यथात्वतिप्रीत्याधीतवानस्मि' तथैव तवाभिधास्यामीति श्रवणासक्तिविशेषहेतुः प्रकटीकृतस्तस्मात् भगवच्चरितामृतरसिकाः केचिद्विरला अपवर्गमपि नेच्छंति, तच्चरितामृतस्यालौकिकानिर्वाच्यमाधुर्यातिशयान्मोक्षमपि नेच्छंति। ततस्तु नृगतिं विविच्य भवतोऽघ्रिमुपासत इति यत्पूर्वोक्तं तन्न चित्रमिति भावः। ननु तर्हि ते तु अनिवृत्ताविद्याऽऽत्मतत्त्वस्य दुरवगमत्वात्तदलभ्यं मन्वाना भगवत्कथाश्रवणनिष्ठा इति वाच्यं, यद्यधिगतपरमार्थास्तर्हि करगतमुक्तित्यागान्नातिदीर्घदर्शिन इत्याशंक्याहुः—दुरवगमात्मतत्त्वनिगमायेति। दुरवगमं यदात्मतत्त्वं तन्नितरां गम्यते प्राप्यते यस्माद्धेतोस्तस्मै त्वदर्थमपवर्गमपि न परिलषंतीत्यनुषंग इति भावः। नामृतस्याऽमृतमाधुर्यानुभव इति न्यायेन न हि निर्धर्मवस्तुनि वस्त्वनुभवो न च तदवगमं विना संसारदुःखनिवृत्तिर्न च तदवगमः सुगमस्त्वत्प्रसादैकलभ्यत्वात्तथापि त्वत्प्रसादेनाभिगम्य करकलितमपि मोक्षं न बहुकुर्वंति। मुक्तौ कथारसाभावात्। ततस्तन्माधुर्यरसिकास्तवात्ततनोश्चरितामृतसमुद्रमग्नास्तदेव सुखं मुक्तेरप्यधिकं बहुमन्यमानाः केचिद्विरला एतादृशा इत्युक्तत्वात्ते त्वतिदीर्घदर्शिन एव, तथाचाधिगतपरमार्था एवेति वाच्या इति भावः। ननु दुरवगमात्मतत्त्वनिगमायेत्यस्य दुर्ज्ञेयात्मतत्त्वज्ञानायेत्यर्थः किं न स्यादिति न च वाच्यम्। तदर्थकत्वं नात्र संगच्छते। कुत इति चेत्। किमर्थकं ज्ञानम्। यदि मुक्तये तर्हि विरुद्धम्। न परिलषंति केचिदपवर्गमपीत्युक्तत्वात्। ननु भक्तिरसिका भगवंतमात्मत्वेनाधिगंतुमिति चेन्मैवम्। सर्वेषामकृतकृत्यत्वापत्तेः। चरितामृतसमुद्रमग्ना मुक्तिं न परिलषंति मां भगवंतमात्मत्वेनाधिगंतुं यतंत इत्याश्चर्यमिति चेन्मैवम्। तवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणा इत्युक्तत्वात् भगवत्कथामृतेनैव कृतकृत्या इति सिद्धे यदि दुरवगमात्मतत्त्वज्ञानाय कथामृतसमुद्रमग्नास्तर्हि जिज्ञासव एवेत्यर्थतः सिद्धं विरुद्धम्। अकृतकृत्यत्वापत्तेः। तथा चेद्दुरवगमत्वविशेषणं न स्यात्। अकृतकृत्यत्वसूचकत्वात् ज्ञानानंतरं दुर्बोधत्वविशेषणं चेत् कृतकृत्यत्वसूचकत्वान्न विरुद्धम्। तथा च कथाप्रियत्वस्य ज्ञानांगत्वे सिद्धे नात्यंतचरितामृतकांक्षिणः किंतु तेन हेतुना तत्त्वजिज्ञासव एवेति सिद्धम्। तथा सति परिश्रमणा इत्यनेन श्रमस्य सुखरूपफलत्वं न स्यात्। तत्फलस्य ज्ञानस्याप्राप्तत्वात्।

न च परिश्रमणा इत्यस्य परिवर्जनार्थे गतश्रमा इत्यर्थः श्रीधरार्यैर्न्यकृत इति चेत् स एवार्थः, श्रमवर्जितस्यैव कृतकृत्यत्वात्। तत्र परिवर्जनार्थ इत्यर्थस्य क्लिष्टकल्पनारूपत्वात् परिश्रमणं सुखं येषां ते तथा तेषां श्रमः सुखरूपः

कृतकृत्यत्वादिति व्याकरोति भगवान् श्रुतिकल्पलताकारः। तथाच ज्ञानाय कथामृतसमुद्रमग्ना नापवर्गं परिलषंतीत्याश्चर्योक्तिर्न स्यादतः प्रकृतमनुसरति। तस्मात्केनापि प्रकारेणात्मज्ञानसंपन्ना एव भक्ता एते नात्र संशयः। हंसकुलसंगविसृष्टगृहा इत्युक्तत्वात्। चिदचिद्विवेकज्ञानसंपन्ना हंसास्तेषां संगेन हेतुना यदि त्यक्तगृहास्तर्हि तेऽपि विदितात्मन एव चिदात्मचैतन्य इतरथा नाप्येति तेषामधिगतपरमार्थत्वस्य निरूप्यमाणत्वाच्चायमेवार्थः॥ २१॥ (८)॥

कथासुधार्णवावर्तभ्रमणश्रमणं हि माम्
ईश तद्रिक्तकैवल्यं मा ते बोधः प्रयच्छतु॥ १॥

इति श्रीश्रुतिकल्पलतायां श्रुतिस्तुतौ अष्टमश्लोकव्याख्यानं समाप्तम्॥

॥ इति चतुर्दशोऽध्यायः॥

---

# पंचदशोऽध्यायः।

ननु यदि अपवर्गं न परिलषंति तर्हि देहस्यात्मविलक्षणस्य भगवत्सेवाप्रातिकूल्यस्वभावत्वात्तेषां भक्तियोगभ्रंशस्य संभावितत्वेऽपि कस्मिन्कीदृशे सति स देहः पूर्वलक्षणाविलक्षणो भूत्वा न योगभ्रंशकरो भवतीत्यपेक्षायामाहुः त्वदनुपथमित्यर्धेन॥

त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियव-
च्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च॥

त्वयि उन्मुखे इदं कुलायं तथा त्वदनुपथं चरतीत्यन्वयः। त्वयि जडनिषेधशेषे चिदात्मनीत्यर्थः। उन्मुखे उत् उद्गतं उदितं मुखं उपलब्धिस्थानं चिदेकस्वरूपं यस्य स उन्मुखस्तस्मिन् उन्मुखे त्वय्यात्मनि इदं दृश्यं कुलायं कौ भूमौ लीयते इति कुलायं शरीरम्। तथा त्वदनुपथं चरति। तच्छब्देन पूर्वपरामर्शः। पूर्वपद्योक्तत्वच्चरितश्रवणवर्णनादिषु त्वदनुपथं यथास्यात्तथा चरति वर्तते। त्वदनुपथो भागवतधर्मस्तस्मिन्ननुकूलत्वेन वर्तमानं त्वदनुपथम्। तत एव न परिलषंति केचिदपवर्गमपीत्युक्तम्। त्वच्चरितश्रवणादेर्मुक्तिसुखादप्यतिसुखप्रदत्वात्। तत्र कुलायस्य साधनभूतत्वात्। नन्वश्रद्धेयमिदं कुलायस्य निसर्गपरमार्थप्रातिकूल्यस्वभावत्वादिति चेत्सत्यम्, किंत्वपथ्यस्य यथा द्रव्यांतरसंयोगादिक्रियाविशेषैः

पथ्यत्वं संभवति तथा कुलायं निसर्गपरमार्थप्रतिकूलस्वभावमपि त्वय्युन्मुखे तव लक्षणैस्तत्स्वलक्षणविलक्षणं भवतीत्याहुः—आत्मनि प्रिये हित आत्मप्रियसुहृद्वचेति। आत्मनि त्वय्युन्मुखे कुलायं चात्मवच्चरतीति सर्वत्र संबंधः। प्रिये प्रियवच्चरति हिते सुहृदि सुहृद्वच्चरति इति। अयमर्थः—आत्मन्युन्मुखे त्वयि जडस्यानात्मन आत्मैकप्रकाश्यत्वाधिगमादात्मोपादानकत्वाद्धटवद्वाचारंभणत्वात् घटस्य मृदेकप्रकाश्यत्वात् मृदेकमात्रत्वाच्चित्प्रकाशस्य चिदुपादानकस्य चिदेकमात्रत्वादात्मवच्चरतीत्युपलक्षणमेतत्। जगदशेषमात्मैव भवतीति तात्पर्यम्। 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः। यदा त्वेवमशेषं जगदात्मैव न तत्र किमपि ज्ञानिनः प्रतिकूलं किमुतेदं कुलायं द्वैतबुद्धिराहित्यात्। 'द्वितीयाद्वै भयं भवति' इति श्रुतेः, द्वितीयत्वभयनिवृत्तानां न कुलायं योगभ्रंशकरं भवतीत्यभिप्रायः। 'आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' इति श्रुतेः। ननु यद्यपि ज्ञाते तत्त्वे देहोऽप्यात्मैव तथापि विरक्तानां न स पूर्ववत्प्रियो भवति। स च भागवतानां यदि श्रवणादिसाधनभूतस्तर्हि ते कुलायप्रिया एव न विरक्ता इत्याशंक्याहुः—प्रिये त्वय्युन्मुखे प्रियवच्चरतीति प्रिये त्वय्यात्मनि। उन्मुखे विदिते कुलायं च प्रियमेव भवति ततः प्रागेव परमार्थप्रतिकूलस्वभावत्वादप्रियमासीत्तदप्यज्ञानादेव यथा हाटकार्थिनः कटकतत्त्वज्ञानाभावात्कनकेतरबुद्ध्या तदप्रियं भवति, तदेव कनकैकमात्रमिति ज्ञाते यथा कटकं कनकवत्प्रियं भवति, तथा त्वय्यात्मनि विदिते जडमप्यात्मैव भवति। ततो यथात्मा प्रियस्तथैव देहोऽपि प्रिय एव भवति। दृश्यत्वेऽपि वाचारंभणमात्रत्वेऽपि त्वच्चरितश्रवणादिसुखसाधनभूतत्वात्। यतो देहः स्वप्रातिकूल्यस्वभावविलक्षणो भूत्वा प्रिये त्वय्यात्मनि श्रवणकीर्तनादिसाधनत्वेन चरति। ततो नासावप्रियः किंतु प्रिय एव। यथा हाटकार्थिनः प्राप्तं कटकं हाटकमात्रत्वेऽपि कटकविकृत्या तत्करमलंकरोति। तथा ज्ञाते स्वात्मनि श्रवणकीर्तनाद्युपयोगित्वाज्जीवन्मुक्तस्य देहोऽप्यलंकाररूपः प्रिय एव भवतीति तात्पर्यम्। ननु तथापि सर्पे लालनवदिदं कुलायप्रियत्वं क्वचिद्देहाद्यभिमानजनकत्वस्य संभावितत्वादिति चेत्सत्यम्, किंतु सत्यसर्पलालनपक्षे तथा। नहि मिथ्यासर्पलालनेन भयं संभवतीत्याहुः। हिते त्वय्युन्मुखे कुलायं च सुहृद्वच्चरतीति। हिते निखिलभयनिवर्तके त्वय्यात्मन्युन्मुखे सति सुहृद्वच्चरति। सुष्ठु शोभनं स्वहितकरं हृद्बुद्धिर्यस्मिन्स सुहृत् तद्वच्चरति वर्तते। कुलायं च सुहृद्वद्भवतीत्यर्थः। यथा शोभना देहसत्यत्वभ्रमरहिता बुद्धिर्नित्यमात्मस्वरूपनिष्ठा सती यस्मिन्कुलाये चरति इत्यतः सुहृद्बुद्धितकृद्वदिदं कुलायं चरति। समधिगतायां रज्ज्वां बाधितसर्पधिया तल्ला-

---

१ छां. ३।१४।१ २ बृ. १।४।२। ३ तै. २।९।

त्वनं न ह्यहिकृतभयजनकं भवतीत्यनवद्यम् । अतः कारणात्पूर्वपद्योक्ता भागवता अपवर्गं न परिलषंति । कस्माद्धेतोः ? तव चरितामृतप्रियत्वात् । तस्मान्न च तेषां संसारभयं न चापवर्गाभिलाषो न च श्रवणादिसाधनभूतो देहो योगभ्रंशजनको भवति । तस्मादात्मज्ञा एव भागवताः पूर्वश्लोकोक्ता इति सिद्धम् । ननु त्वय्युन्मुख इत्यस्य त्वयि सगुणे प्रसादोन्मुखे सति कुलायं त्वदनुपथमात्मसुहृत्प्रियवच्चरतीत्यर्थः किं न स्यादिति वाच्यम् । सगुणे प्रसादोन्मुखे सति ज्ञानप्राप्त्यनंतरं कुलायमात्मादिवच्चरतीति वा ज्ञानं विनैवेति वा ? आद्ये तु स एवार्थः । ततस्त्वय्यात्मनि निर्गुणे विदिते कुलायं स्वलक्षणविलक्षणं भवतीति, द्वितीये ज्ञानं विना यदि कुलायमात्मसुहृत्प्रियवच्चरति तर्हि प्रसादोन्मुखेन सगुणेन देहात्मत्वं देहप्रियत्वादिरूपं अविद्याबंधनं दृढीकृतमित्यर्थस्यानर्थरूपत्वात् भगवता श्रुतिकल्पलताकारेण व्याकृतोऽर्थ एवार्थ इष्टः ।

अथ प्रकृतमनुसृत्य द्वितीयार्धं व्याकरोति भगवान् । ननु ज्ञाते स्वात्मनि यद्येवमनिष्टनिवृत्तिरिष्टप्राप्तिस्तर्हि शास्त्रज्ञाः सर्वेऽपि कुतो नात्मानमधिगंतुमिच्छंतीत्यपेक्षायामुक्तकुलायनिष्ठत्वादित्याहुः—

न बत रमंत्यहो असदुपासनयाऽऽत्महनो
यदनुशया भ्रमंत्युरुभये कुशरीरभृतः ॥ २२ ॥ (९) ॥

बत खेदे । अहो आश्चर्यं । आत्महनो न रमंतीत्यन्वयः । स्वात्मघातिनो जानंतोऽप्यात्मानमधः पातयंति त एवात्महनो नान्ये, यथा कूपे पतिता अंधा नात्मघातिनः, किंतु पश्यंतोऽपि ये कूपे पतंति त एव । तथा केवलमूढा ये परमार्थगंधमपि न विदुस्तेषां नापराधः, नह्यजानन् पतितो मृत आत्महा स्यात्तथा सति सर्वेऽप्यात्मघातिन एवेत्यतः शास्त्रज्ञा अस्ति मोक्ष इति ज्ञात्वापि न रमंति न त्वां भजंति तदेवाश्चर्यं । ननु ज्ञात्वापि कुतो न रमंतीत्यपेक्षायामाहुः—असदुपासनयेति । असतः कुलायस्योपासना आत्मसात्त्वं तेन देहात्मत्वेनेत्यर्थः । ननु देहाभिमानस्तावद्यावद्देहात्मज्ञानं, तच्च तावदेव न यावच्छास्त्रश्रवणं । श्रुते शास्त्रे त्वात्मा न देह इति ज्ञाने जातेऽपि पुनरपि कुतो देहात्ममानिन इत्याशंक्याहुः—यदनुशया इति । यस्मिन्नसति देहे अनुशयो वासना येषां ते यदनुशयाः देहे जीवितेच्छा भोगेच्छा च दृढा येषां तादृशा इति कृत्वा असज्जडदेहविलक्षणः सत्यज्ञानानंतलक्षण आत्माऽस्तीति ज्ञात्वाप्युपनिषदुक्तमर्थं तिरस्कृत्य भेदज्ञानादिनिष्ठा न निवृत्तिमार्गे रमंतीत्यत आत्महनो न रमंत्यहो इत्याश्चर्यमिति भावः । एवं

'आरामभस्य पश्यंति न तं पश्यति कश्चन' इति श्रुत्या आत्महन इति पदाच्छास्त्रज्ञा अपि देहात्ममानिनो देहमेव पश्यंति नात्मानमित्यहो इत्याश्चर्यमुक्तम्। अथ बतेति यास्तान् शोचंति श्रुतयः ताः—'असुर्या नाम ते लोका अन्धेन तमसा वृताः। तांस्ते प्रेत्याऽभिगच्छंति ये के चात्महनो जनाः' इत्याद्या आत्मघातिनः शास्त्रज्ञानिनो जानन्तोऽप्युपनिषदामर्थमन्यथा व्याकृत्य देहात्ममानिनो ये निवृत्तिमार्गे न रमन्ति तेषां गतिमाहुः—भ्रमन्त्युरुभये कुशरीरभृत इति। उत्कृष्टभये नरके भ्रमन्ति ततः कुशरीरभृतः श्वसूकरादिदेहधारिणः सन्तो भ्रमन्तीत्यन्वयः। अत्रात्महन इति शब्देन न केवलमूढाः किंतु शास्त्रज्ञा इत्यर्थः सिद्धस्तत्रापि न वेदांतज्ञानिनस्तेषां यथाकथंचिदद्वैतसंस्कारजनकत्वान्न तान् शास्त्रमधः पातयति। तदुक्तं भगवता–'नहि[3] कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति' इति। 'बहूनां[4] जन्मनामन्ते ज्ञानवान्मां प्रपद्यते। वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' इति। अपरोक्षस्य बहुजन्माद्वैतसंस्कारसापेक्षत्वात्। न च योगशास्त्रं मोक्षांगभूतत्वात्, 'न[5] हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति' इति वचनात्। तस्माद्यानि शास्त्राणि भेदैकपराण्यद्वैतदूषकाणि, तान्येव तन्निष्ठानधः पातयन्तीति 'असुर्या[6] नाम ते लोका अन्धेन तमसा वृताः। तांस्ते प्रेत्याभिगच्छंति ये के चात्महनो जनाः' इत्यादिश्रुतयस्तानेव शोचंति। यतो नातिमूढा आत्महनः, किंतूपनिषत्सु मुहुरद्वितीयत्वेन तत्त्वमुपपादितं पश्यंतोऽपि कुमताभिमानग्रहग्रस्तास्तत्त्वमस्यादिवाक्यानां बलाद्भेदपरत्वेन यथाकथंचिद्व्याकुर्वन्ति त एवात्महनस्तत इममर्थं व्याकरोति भगवान् श्रुतिकल्पलताकारः॥ २२ ॥ ( ९ ) ॥

त्वयि हृदि सुहृदि प्रिये प्रसन्ने चरति सुहृद्दयितात्मवत्कुलायम्।
इति खलु सुलभे निजात्मनीशे न बत रमन्त्यसदागमैकनिष्ठाः॥ १ ॥

इति श्रीश्रुतिकल्पलतायां स्तुतिप्रकरणे नवमश्लोकव्याख्यानं नाम पंचदशोऽध्यायः॥ १५ ॥

॥ इति पंचदशोऽध्यायः ॥

---

१ बृ. ४।३।१४। २ ईश. ३। ३ भ. गी. ६।४०। ४ भ. गी. ७।१९। ५ भ. गी. ६।४०। ६ ईश. ३।

# षोडशोऽध्यायः ।

एवं न परिलपन्ति केचिदपवर्गमपीत्युक्तानामात्मज्ञानिनां भागवतानां देहः परमार्थप्रतिकूलं स्वभावं त्यक्त्वा स्वलक्षणविलक्षणो भूत्वा भगवद्दास्यजनितसुखसाधनो भवतीत्युक्त्वा तत्प्रसंगेन शास्त्रविदामप्यसदुपासनया देहाभिमानादधःपात इत्युक्तम् । इदानीं भगवद्भक्तिहीनानां मुमुक्षूणामपवर्गकांक्षिणां कार्पण्यं सूचयन्त्यस्तेभ्यो भागवताः श्रेष्ठाः करगतापवर्गाभिलापराहित्यादित्याशयेनाहुः निभृतमरुन्मन इत्यर्धेन—

**निभृतमरुन्मनोक्षदृढयोगयुजो हृदि यन्**
**मुनय उपासते तदरयोऽपि ययुः स्मरणात् ॥**

निभृतमरुन्मनोक्षदृढयोगयुजः मरुत्प्राणवायुश्च मनश्चाक्षाणींद्रियाणि च मरुन्मनोक्षाणि निभृतानि नितरां धृतानि स्थिरीकृतानि मरुन्मनोक्षाणि यैस्ते निभृतमरुन्मनोक्षास्ते च ते दृढयोगं युंजंतीति दृढयोगयुजो मुनयो मननशीला हृदि यदुपासते यत्तत्त्वं पश्यंति चित्ते वृत्तिनिरुद्धे तदाकारेण यदुपासते, प्रतिबिंबबिंबैक्यमनुभवन्तीत्यर्थः । उपसर्गस्य सामीप्यात्सामीप्यमर्थाद्द्वितीयत्वपराकाष्ठारूपं यत्तदेव तत्त्वमरयोऽपि पूतना-कंस-शिशुपाल-पौंड्रकादयस्तेऽपि ययुः प्रापुः । कुतः? स्मरणात् । वक्ष्यत्येकादशे–'**वैरेण[1] यं नृपतयः शिशुपाल-पौंड्र-शाल्वादयो गति-विलास-विलोकनाद्यैः । ध्यायंत आकृतिधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियां पुनः किम्**' । यस्मादेवमरयः सगुणश्रीमूर्त्याकृतिस्मरणमात्रेण यदा योगिध्येयं तत्त्वमापुस्तदा भगवत्प्रसादलभ्यात्मज्ञानिनां करगतेऽपि मोक्षे कदा वा मोक्षः स्यादिति वृथा प्रतीक्षाकार्पण्यं बालानामिव मात्रा दीयमानेऽपि स्तने स्तनं देहीति रोदनवत् । तस्मान्न परिलपन्ति केचिदपवर्गमपीति ये उक्ता भागवतास्त एव प्रौढा भगवद्दास्यजनितसुखस्य मोक्षसुखादधिकत्वं बहु मन्यमानास्ते तु जीवन्त एवाधिगतपरमानन्दास्तथापि निर्व्याजाव्यवहितया भगवतः सर्वात्मभक्त्या नापवर्गं परिलपंति । तदुक्तं भगवता नवमस्कन्धे दुर्वाससं प्रति—'**मत्सेवया[2] प्रतिइं ते सालोक्यादिचतुष्टयम् । नेच्छन्ति सेवया पूर्णाः किमन्यत्कालविद्रुतम्**' इति । तथा च प्रथमस्कन्धे—

---

१ भा. स्कं. ११।५।४८। २ भा. स्कं. ९।४।६७।

'आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे। कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः'[1] इति। तथाच गीतायां—'चतुर्विधा'[2] इति, 'तेषां ज्ञानी'[3] इति, 'वासुदेवः सर्वमिति स महात्मा सुदुर्लभः'[4] इति, किंतु नैतदद्वैतात्मप्रीतिरूपं भक्तिसुखं शुष्काद्वैतवादिनो जानन्ति। यत्तु मैत्रेयीं प्रत्युपदिष्टं याज्ञवल्क्येन—'न वा अरे जायायै कामाय जाया प्रिया भवति'[5] इत्यादि, 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति। आत्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा वा अरे द्रष्टव्यः श्रोतव्यः'[6] इत्यादि, प्रियत्वेनैव यस्य श्रवणादिकं निगमे विदधत्यपि चेद्यदि मोक्षकांक्षिणः तर्हि तं मोक्षं रिपवोऽपि ययुः। तस्मादहो शत्रुभिः प्राप्तां गतिं भक्त्यापि ये त्वभिलषंति ते निरपत्रपा इत्यरयोऽपीत्यापिशब्देन श्रुतय उपहसन्ति। ये केवलापवर्गकांक्षिणस्तेषांमेवैतत्कार्पण्यं सूचितमित्यलं विस्तरैः।

अथ प्रकृतमनुसृत्य द्वितीयार्धं व्याकरोति श्रुतिकल्पलताकृद्भगवान्। ननु यद्यरयोऽपि स्मरणाद्योगिध्येयां गतिं ययुः, तर्ह्यलं तत्त्वजिज्ञासया, तथा सति 'अथातो ब्रह्मजिज्ञासा'[7] इत्यलं शास्त्रारंभैः, तथाच 'ज्ञानादेव तु कैवल्यं' इति निरर्थकोऽयं सद्धांत इति चेन्मैवम्। हृदि यन्मुनय उपासते तदरयोऽपि ययुरित्युक्तत्वात् हृद्युपासते नाम तदाकारे हृदि तदात्मानः संतो ध्यायन्ति। तदरयोऽपि ययुः स्मरणात्। स्मरणातिशयेन शुद्धाः सन्तस्तत्त्वमेव प्रापुः। तत्र देहांतेऽपि तत्त्वमधिगम्य मुक्ता इत्यर्थः। 'देहांते देवः परं ब्रह्म तारकं व्याचष्टे'[8] इति श्रुतेः, तर्हि अनधिगतात्मनां भागवतानामेव देहान्ते देवः परंब्रह्म तारकं व्याचष्टे इति वक्तुमुचितं न त्वरीणां रजस्तमःस्वभावानामिति चेन्नहि भगवति त्वय्यरिमित्रादिवैषम्यमस्ति ततो यथा भक्तास्तथैवारयोऽपि, किंतु कल्पतरुस्वभावे यथाकथंचिन्मनसः सन्निकर्षे मुक्तिः संभवतीत्याशयेन भगवति त्वयि मनसः सन्निकर्षाद्बहुविधाधिकारिणोऽपि तत्त्वविदां गतिमेव ययुरतस्तव सर्वेऽपि समा इत्याशयेनाहुः—

**स्त्रिय उरगेन्द्रभोगभुजदंडविषक्तधियो**
**वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः॥ २३ ॥(१०)॥**

उरगेन्द्रस्य भोगवत् शरीरवत् भुजदंडौ यस्य तस्मिंस्त्वयि गोपालवेषे भगवति विषक्ता धियो यासां तास्तथा स्त्रियो गोप्यः, वयं श्रुतयः, मंत्रद्रष्टारो ऋषय

१ भा. स्कं. १।७।१०। २ भ. गी. ७।१६। ३ भ. गी. ७।१७। ४ भ. गी. ७।१९।
५ बृ. ४।५।६। ६ बृ. ४।५।७। ७ ब्र. सू. १।१।१। ८ नृसिं. पू. १।७।

इत्यर्थः । समदृश आत्मज्ञानिनो ये सर्वत्र समं ब्रह्मैव पश्यंति ते तथा । अंघ्रिसरोजसुधाः भक्ता आत्मज्ञानरहिता अप्यंघ्रिसरोजयोः सुधा प्रेममकरन्दोऽस्ति येषामित्यंघ्रिसरोजसुधाः सगुणध्याननिष्ठा इत्यर्थः । एवं गोप्यो-मंत्रद्रष्टारः-समदृशः सगुणश्रीमूर्तिध्यानपराश्च ते तव समा एव । गोपीनां कामतो मनसः सन्निकर्ष इति, मंत्रद्रष्टॄणां तपआदिनेति, समदृशां तत्त्वदृष्ट्येति सगुणध्याननिष्ठानामाकृतिमात्रध्यानेनेति । नह्येतेषां परस्परवैलक्षण्येऽपि मनःसन्निकर्षवैलक्षण्यमिति त्वयि न वैषम्यमस्ति फलवैषम्याभावात् । तथैव कंसादिषु भयवैरमात्सर्यादिनापि मनसः सन्निकर्षे या योगिनां गतिः सैव गतिस्त्वयि संपादिता, तस्मात्त्वयि स्वीयपारक्यवैषम्याभावाद्यथाकथंचिद्यस्यकस्य वा मनसस्त्वयि सन्निकर्षोऽस्तु तेषां देहपातात्प्रागेव वा देहपातसमये वा त्वमेव गुरुरूपेण वा साक्षादनादिगुरुरूपेण वा परं ब्रह्म तारकं ब्रह्मविद्यारूपं मंत्रमुपदिशसीत्यभिप्रायः । तत्र गोपीनामुद्धवमुखात्, कुरुक्षेत्रयात्रायां स्वमुखाच्च, तदपि तद्देहपातात्प्रागेवोपदेश इति प्रसिद्धम् । मंत्रद्रष्टारश्च समदृशश्च ज्ञानिन एव । वैषम्यपरिहाराय तेषां ग्रहणम् । तेषां च गुरुरूपेण तत्त्वोपदेष्टा त्वमेवेति भावात् । तथा चांघ्रिसरोजसुधा इति सगुणध्यानमात्रपरा भक्तास्तेषां ज्ञानोत्पत्तेः प्रागेव यदि देहावसानं तर्हि तेषां तव भगवतो धर्मनिष्ठानां पुनर्जन्माभावात् '**देहांते देवः परं ब्रह्म तारकं व्याचष्टे**'[१] इति श्रुत्या यथा तत्त्वमुपदिशति ततस्ते यथा च योगिगम्यां गतिं प्राप्नुवन्ति तथैव चारीणामपि देहान्ते देवः परं ब्रह्म तारकं व्याचष्ट इति विवक्षया गोप्यादिषु भगवतः समत्वं स्फुटीकृतमिति द्रष्टव्यम् । तत्र पूर्वार्धे निभृतमरुन्मनोऽक्षयुजां उपास्यं तत्त्वमरयोऽपि ययुरित्युक्त्वाऽपि उत्तरार्धे त एव समदृश इति विशेषणेन गोप्यादिषु परिगणिताः भगवतः समत्वप्रतिपादनायेति न पुनरुक्तिः शंकनीया इत्यलं विस्तरैः ॥ २३ ॥ (१०) ॥

**अघ-बकी-बक-कंसमुखा अघा ययुरुदारपदप्रद ते पदम् ।**
**प्रियतया चरणस्मरणं हरे सुलभमस्तु ममेतरदुर्लभम् ॥ १ ॥**

इति श्रीश्रुतिकल्पलतायां श्रुतिस्तुतिव्याख्यायां स्तुतिप्रकरणे दशमश्लोकव्याख्यानं समाप्तम् ॥

॥ इति षोडशोऽध्यायः ॥

---

१ नृसिं. पू. १।७।

# सप्तदशोऽध्यायः ।

ननु एतावता समगतिप्रदत्वेन यः समो भगवानित्युपपाद्यते सोऽपि विषमः जगत्कर्तृकत्वात् । दुःखसंसारे त्वयं क्षिप्तेषु केषुचित्सम इति चेन्नात्यंतिकं समत्वम् । स्वक्रीडार्थं गुणफलविषमविसर्गादिस्वतंत्रत्वादित्याशंक्य 'को[1] अद्धा वेद का इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः' इत्यादयः, 'यो[2] अस्याध्यक्षः परमे व्योमन् सो अंग वेद यदि वा न वेद' इत्यंताः श्रुतयो जगदुद्भवादेरनादित्वात्, नहीश्वरः क्रीडाद्यर्थं जगत्सृजतीति तात्पर्यं स्फुटीकर्तुं योऽस्यानादितया कर्ता सोऽपि तदुत्पत्तिहेतुं न वेद कुतोऽन्यस्तदनादित्वादित्याहुः—क इह नु वेदेत्यर्धेन—

**क इह नु वेद बतावरजन्मलयोऽग्रसरं**
**यत उदगादृषिर्यमनु देवगणा उभये ।**

अग्रसरमिह को नु वेदेत्यन्वयः । अग्रे सरति गच्छतीत्यग्रसरः पूर्वसिद्धः प्रपंचस्तं इह अर्वाक् को नु वेद, न कोऽपीत्यर्थः । नु वितर्के । पूर्वसिद्धमर्वाक्काले कुतो वा न कोऽपि वेदेत्यपेक्षायामाहुः—बतावरजन्मलय इति । बत आश्चर्ये । अवरं जन्म च लयश्च यस्य स तथाऽग्रसरं महदादितत्त्वकदंबेन पूर्वसिद्धं महदाद्यंशैः संभूतदेहो महदादिषु लीयमानस्तं पूर्वसिद्धं को वा वेद । तथापि कथं वा कस्माद्वा हेतोरयं प्रपंच उत्पन्न इति तस्मिन्नुत्पन्नानां जिज्ञासाप्याश्चर्यरूपेति बतशब्देन सूत्रयंति । ज्ञातुमशक्यत्वेऽपि विचारे प्रवर्तंते तदाश्चर्यमिति तात्पर्यं । एवं '**को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः**' इति श्रुत्या क इति इहेति वेदेति श्रौतैः पदैः स्वोक्तिरियमिति सूच्यते । तथा च को अद्धा वेद क इह प्रवोचदिति ज्ञातृत्ववक्तृत्वाशक्यत्वे बतावरजन्मलयः को वा वेदेति हेतुरुक्तः । तथाच कुतः कस्मात् कालादारभ्य आसमंतात्सर्वेष्वपि सर्गकालेषु जातेति पुनः कुत इयं विसृष्टिरिति कुतःशब्दपुनरुक्त्या कस्माद्वा हेतोरियं विसृष्टिर्जातेति श्रुत्यर्थोऽप्यग्रसरं को वेदेत्यनेन सूत्रितः । अग्रसरत्वात् कस्मात्कालादारभ्य कस्माद्वा हेतोरयमुत्पद्यते इति को वेदेति श्रुत्यनुरूपो वाक्यार्थः । तस्मादनादितया नास्त्यस्य प्रपंचस्योद्भवादेरीश्वरक्रीडादिनिमित्तकत्वं ततो नहीश्वरो विषम इति तात्पर्यम् । ननु महदादितत्त्वैरुत्पन्नं पूर्वसिद्धं प्रपंचं ततोऽवरजन्मलयो महदाद्यंशसंभूतदेहस्ते-

---

१ ऋ. सं. ८।७।१७। २ ऋ. सं. ८।७।१७।

ध्वेवांते लीयमानो यदि कोऽपि न वेदे सूच्यते तर्हि महदादितत्त्वशरीरिणो ब्रह्माद्याः कस्माद्धेतोरयं प्रपंच उत्पन्न इति जानंत्वित्याशंक्य यतो ब्रह्मादिदेवताः संभवंति स ईश्वरो न वेद कुतो देवा इति 'अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आवभूव' इति 'यो[2] अस्याध्यक्षः परमे व्योमन् सो अंग वेद यदि वा न वेद' इत्याद्याः श्रुतयः आहुः–यत उदगादृषिर्यमनु देवगणा उभये इति। उभये ब्रह्माण्डे पिण्डे च देवगणा अहंकारादि-शरीरिणस्तत्राहंकारादितत्त्वमूर्तयो रुद्रादयो ब्रह्मांडे समष्टिदेहविराडहंकारादिरूपास्त एव व्यष्टिदेहेष्वहंकाराद्यंशसंभूतेष्वहंकाराद्यभिमानिनो यमनु यं ब्राह्मणं स्वपूर्व-जत्वेन जानंतः अनु अनुलक्षीकुर्वंतीत्यर्थः। स ऋपिर्ब्रह्मेति यमिति यच्छब्दश्रवणात्स इति तच्छब्दग्रहणम्। स यतो यस्मान्नारायणान्नाभिपंकजद्वारा उदगादुत्पन्नः स नारायण इति यत इति यच्छब्दात्तच्छब्दाक्षेपः स वेदेत्यनुपज्यते। पूर्ववत्काका न वेदेत्यर्थः। 'यो[3] अस्याध्यक्षः परमे व्योमन् सो अंग वेद यदि वा न वेद' इत्यस्याः श्रुतेरियमुक्तिरर्थत एव द्रष्टव्या। श्रुतेरयमर्थः–परमे व्योम्नि ब्रह्मणि। 'आकाश-शरीरं ब्रह्म' इति श्रुतेः। तत्र निर्धर्मके साक्षित्वादिधर्मरहिते यः परमेश्वरोऽस्य प्रपंचस्याध्यक्षोऽधीश्वरः साक्षी मायाशबलितो महाकाशे मठोपाधिविशिष्ट इवेति य इत्यर्थः। सो अंग वेद यदि वा न वेद। अंग भो जगदुद्भवनिमित्तजिज्ञासो, सोऽपि वेद यदि वा न वेद। अयमर्थः-सर्वज्ञत्वाद्वेदेति वक्तव्यम्। तथा वंध्यासुत इव हेत्वभावान्न वेदेति वक्तव्यम्। तथापि सर्वेश्वरः केवलं न वेदेति वक्तुमशक्यत्वाद्वेद यदि वा न वेदेति गौरेव पालनच्छलेन हेत्वभावान्न वेदेति तात्पर्यम्। अत एव यत उदगादृषिरिति यच्छब्दतच्छब्दयोर्नित्यसंबंधात्सोऽपि न वेदेत्यर्थत एव श्रुत्यात्रापि सूच्यते। यदा तु यमनु देवगणा उभये स ऋषिर्यत उदगात्सोऽपि न वेद तदा देवगणा न विदुरिति किं वक्तव्यमिति 'अर्वाग्देवा[4] अस्य विसर्जनेनाथा को वेद यत आ वभूव' इति श्रुत्योपपाद्यते। श्रुतेश्चायमर्थः–अस्य जगतो विशेषेण सर्जनं यत इति विसर्जनं प्रथममाविर्भूतमव्यक्ततत्त्वं तेन हेतुनेत्यस्य विसर्जनेनार्वाग्देवास्ततः को वेद यत आबभूवेति। अयमर्थः—'यतः[5] प्रसूता जगतः प्रसूतिः' इति श्रुतेर्जगत्सर्जनहेतु-भूतं प्रधानमनादितया ब्रह्मणः किरणकर्दबान्मृगांभ इवोत्पद्यते तदस्य विसर्जनं कारणं तेन हेतुभूतेन महदादितत्त्वशरीरिणो देवा अथ अर्वाग्भवंति ते किं विदुर्यत इदमस्मत्कारणमाविर्भूतमिति जात्येकवचनेन को वेद यत आबभूवेति सूच्यते। यद्वा देवा अर्वाक् तेषु ब्रह्मादिश्रेष्ठेष्वपि को वेद। यद्वा देवा अर्वाक् तेऽपि

१ ऋ. सं. ८।७।१७। २ ऋ. सं, ८।७।१७। ३ तै. १।६।२। ४ ऋ. सं. ८।७।१७। ५ महाना. १।४।

न विदुस्ततः को वेद, न कोऽपीत्यर्थः । यत उदगादृषिर्यमनु देवगणा उभये इत्यर्वाग्देवा अस्य विसर्जनेनेति श्रुतेरुक्तिस्तत्र विसर्जनेन प्रधानतत्त्वहेतुनेति श्रुत्यर्थस्तदनुरूप एव वाक्यार्थोऽपि । यत उदगादृषिर्ब्रह्मा स नारायणो महत्तत्त्वकारणाव्यक्ततत्त्वोपाधिः स न वेद कुतोऽन्ये देवाः ? ये तु यमनु देवगणा इत्युक्तास्तत उत्पन्नो ब्रह्मा महत्तत्त्वशरीरस्तं यमनुलक्षीकुर्वंति स पूर्वजोऽयमिति जानन्ति । तस्यापि पूर्वजः सर्वेश्वर आदिपुरुषो नारायणोऽपि न वेदेति श्रुत्यनुरूपं वाक्यम् । अयमर्थः–योगनिद्रायां यस्य स्वरूपे लीनोपाधिर्वृक्षात्फलमिव किरणाज्जलमिवानादितया निर्गुणात्तस्मादाविर्भवति । तस्मिन्नाविर्भूते सर्वज्ञत्वसर्वशक्तित्वादिसामर्थ्यैः सगुण ईश्वरः सुप्तः प्रबुद्ध इव प्रबुध्यते। तत्र जिह्वया न जिह्वेत्यभिधानमिति तेनैवोपाधिना तमुपाधिमनादितया निर्मितमाविर्भूतं पश्यति । एवंभूतस्वरूपस्वभावज्ञत्वात् । ततो महदादीनां सृज्यानां तत एवाविर्भूयमानत्वादुपाधिकृतं सिसृक्षाधर्मं च पश्यति । एतदीश्वरोपाधिकृतं सर्वमधिष्ठानसत्तया भवतीतीश्वरत्वमधिष्ठानस्यैव । तथा च सर्वेश्वरोपाधेरखंडाधिष्ठानात्मत्वानुभवरूपत्वादुपाधेश्चेश्वरत्वं । तत एव ब्रह्मणो मायाशबलितस्य नित्यनिर्धर्मत्वानुभवरूपत्वान्न मम सिसृक्षाधर्मं इति जानतो न स्वक्रीडाद्यर्थं सिसृक्षा संभवति, किं त्वनादिमायामयप्रवाहो मदधिष्ठानसत्तया प्रवहतीति जानतस्तस्य न वैषम्यनैर्घृण्ये शंकनीये । अतः सिसृक्षाया मायाधर्मत्वादधिष्ठानस्य तत्प्रकाशकत्वैकमात्रत्वात् 'तदैक्षत बहु स्यां प्रजायेय'इत्याद्याः श्रुतयः सिसृक्षादिधर्मं मायाशबलिते ब्रह्मण्युपपादयंति । वस्तुतः सर्वमनादितया सृष्टिस्थितिसंहारशक्तिरूपया माययैव भवतीति सांख्याः प्रकृतेः स्वातंत्र्यमुपपादयंति तदस्माकं संमतमेव । ब्रह्मणो निर्धर्मकत्वात् । किंतु प्रकृतेः सत्ताराहित्यान्न प्रकृतेः स्वातंत्र्यम्, नृपामात्यस्येव सर्वकर्तृत्वेऽपि राजाधीनत्वं तद्वत् । तत ईश्वरो ब्रह्मैव तदुपाधिप्रधानं तत्सत्तयानादितया जगज्जन्मादि करोतीत्यत ईश्वरः कर्तेत्युच्यतेऽपि नेश्वरो विषम इतीश्वरोपाधिरखंडनिर्धर्मकब्रह्मात्मत्वानुभवरूपस्यैव नित्यानुदर्शनं । ततो नित्यानंदानुभवोपाधेर्न जगत्कर्तृत्वं स्वक्रीडाद्यर्थमिति निखिलनिगमरहस्यम् । तथाच श्रुतिः 'विभूतिप्रसवं त्वन्ये मन्यंते सृष्टिचिन्तकाः । भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ॥ देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इति । अयमर्थः–विभूतिप्रभवं विभूत्याः प्रकृत्याः स्वातंत्र्येण प्रभवति प्रकर्षेण भवतीत्यन्ये सृष्टिचिंतकाः सांख्या मन्यन्ते । नतु तत्त्वतो निगमरहस्यमाहुरित्यर्थः । भोगार्थं सृष्टिरित्यन्ये चार्वाकादयः प्रत्यक्षभोगैकफलं जगदिति मन्यन्ते । क्रीडार्थमिति चापरे । केचिद्वैदिकंमन्या ईश्वरो

१ गौ. का. १।७।

बालवन्निरभिमानः सृष्ट्यादिव्यापारं स्वक्रीडार्थं करोतीत्याहुस्तेऽपि मन्ये न ते शास्त्ररहस्यं ज्ञात्वा वदंतीत्यर्थः । वैषम्यनैर्घृण्यापत्तेः । ननु बालवन्निरभिमानत्वान्न वैषम्यनैर्घृण्यमिति केचित् । तथा चेत्स्वक्रीडार्थनिमित्तेन जीवानां स्वप्रतिबिंबानां दुःखदः संसार इत्यनभिज्ञत्वान्न सर्वज्ञ इति सिद्धम् । यदि सर्वज्ञस्तर्हि निर्घृणो यतो ज्ञात्वाऽपि सिसृक्षुः 'तदैक्षत बहु स्यां प्रजायेय'[1] इति श्रुतेः । नन्वनादित्वाज्जीवाः स्वीकृता न स्वक्रीडार्थं जगत्सृजतीति चेत्तदत्र श्रुत्या न्यायत एव निराक्रियते—'आप्तकामस्य का स्पृहा'[2] इति । अखंडानंदानुभवोपाधेः का वा क्रीडादिस्पृहेत्येव न्यायाम्नायविरोधात्स्वक्रीडार्थमिति विरुद्धम् । सार्वभौमस्य भिक्षान्नाभिलाष इवेत्यर्थः । सृष्टिविधानं न क्रीडां भजतीति चेत्तर्हि कुतः सृष्टिर्भवतीति चिंत्यमिति चेत्सिद्धांतमभिधत्ते—'देवस्यैष स्वभावोऽयम्'[3] इति । देवो द्योतनात्मकः स्वप्रकाशो ब्रह्मेत्यर्थः । तस्य एष स्वभावः सहजस्वरूपलक्षणं । यथा किरणकदंबे मृषांभस उत्पत्तिस्तत्स्वभावो न निमित्तोद्देशः । प्रतिबिंबवृक्षा यथा तथेत्यर्थः । तत्र एषशब्देन कुतः सृष्टिर्भवतीति विचारे स्वभावत एव भवतीत्येष स्वभावः । अयमिति प्रत्यक्षतया यज्जगद्भाति तदिदमुत्पद्यते इत्ययं स्वभाव इति न पुनरन्यत् । ननु कुतः कस्मात्कालात्पुनः कुतः कस्मादुपादानादियं विसृष्टिराजातेति को वेदेति तत्त्वदुर्ज्ञेयत्वमेव किं न स्यादिति चेन्मैवम् । 'यतो वा इमानि भूतानि जायंते'[4] इत्यारभ्य 'तद्विजिज्ञासस्व तद्ब्रह्मेति'[5] इत्यादिश्रुतिभिर्जगत्कारणजिज्ञासाविधानात् कुत इयं विसृष्टिराजातेति न कोऽपि वेदेत्यर्थो विरुद्धः । भृग्वादीनां 'यतो वा इमानि' इत्युपदेशैर्जगत्कारणत्वेनैव तत्त्वाधिगमश्रवणात् । ननु अयं शुद्धचित्तविषय इति चेन्मैवम् । 'अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव'[6] इत्युत्तरवाक्येन देवा अपि न विदुरित्युक्तत्वात् । तत्र देवा महदहंकाराभिमानिनो ब्रह्मरुद्राद्यास्तेऽपि यदि तत्त्वं न विदुरिति चेद्ब्रह्माद्या अशुद्धचित्तत्वान्न विदुरिति सिद्धे त्वनर्थ एव । नन्विंद्रादिदेवा इति चेत्तर्हि ब्रह्माद्या विसृष्टेरर्वाङ्नोत्पन्ना इति वाच्यम् । ब्रह्मादिविसृष्टेरर्वाग्व्यासादय उत्पन्नास्ते यदि तत्त्वं विदुस्तर्हि ब्रह्मादयस्तत्त्वं न विदुरिति कथं घटेत । तथाच नायमर्थः । तस्माज्जगतोऽनादित्वान्नास्त्युत्पत्तिहेतुरित्येवार्थः । किंच 'यो अस्याध्यक्षः परमे व्योमन् सो अंग वेद यदि वा न वेद'[7] इत्युपसंहारे योऽस्याध्यक्ष ईश्वरः साक्षी सोऽपि वेद यदि वा न वेदेति यदि संदेहस्तर्हीश्वरस्यापि तत्त्वं दुर्विज्ञेयमिति सिद्धे त्वनर्थ एव, तस्मान्नायमर्थः । नन्वियं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा नेति पूर्ववाक्येन सृष्टिधारणाधारणसंदेहोपादानाद्दधे वा

१ तै. ६।२।१,३। २ गौ. का. १।९। ३ गौ. का. १।९। ४ तै. ३।१।१। ५ तै. ३।१।२। ६ ऋ. सं. ८।७।१७। ७ ऋ. सं. ८।७।१७।

न दधे यथा तथा वेद यदि वा न वेद। जगदसत्यत्वादस्तीति वेद यदि वा न वेदेत्यर्थ इति चेन्नैवम्। असत्यत्वाद्दधे वा न दधे इत्यनेनैव चरितार्थत्वे वेद यदि वा न वेदेति पुनरुक्तेः प्रयोजनाभावात्। तस्माद्वेद यदि वा न वेदेति श्रुत्या को अद्धा वेदेति जगदुत्पत्त्यादिनिमित्ताभवादीश्वरोऽपि वेद यदि वा न वेदेत्येवार्थः। तत्र दधे वा न दधे इति जगतो रज्जुसर्पोपमत्वात्सति द्रष्टरि भासते तदभावे नास्त्येवेति साधनतया तदनादित्वविवक्षया दधे वा न दधे इत्युच्यते। अयमर्थः—ईश्वरोऽयं स जगज्जीवदृष्ट्या स्वस्वरूपे दधे, रज्ज्वामहिवद्यदि वा स्वदृष्ट्या न दधे, वस्तुतो रज्ज्वामहेरभावात् तावता जीवदृष्ट्या मयि जगदस्तीति दधे साक्षित्वात्। स्वदृष्ट्या तु न दधे तदवस्तुत्वात्। तत्र वेद यदि वा न वेदेति संदेहोक्तेः प्रयोजनाभावान्नायमर्थः। ननु दधे यदि वा न वेति निर्धर्मकमधिष्ठानं तत्र धारणमात्रं, नतु तदस्तिनास्तीति वृत्तिरूपज्ञानं, ततो योऽस्याध्यक्षः स सधर्मको वेद यदि वा न वेदेति चेन्नैवम्। त्रिगुणमयस्य जगतः ईश्वरोपाधिभूताया मायायाः सकाशादाविर्भावो न स्वत एव ब्रह्मणः, ततो मायाशबलितादेव सृष्टिस्तत्कारणीभूतेश्वरोपाधेः परमकारणं ब्रह्म, तस्मात् दधे स ईश्वर एव तत्र मिथ्यात्वाद्दधे वा न दधे इति संदेहोक्तिः। किंच धारणमविद्यया जीवदृष्ट्या, न धारणं विद्यया परमेश्वरदृष्ट्या रज्जुज्ञरज्ज्वज्ञयोर्दृष्ट्या गुणस्य फणिधारणाधारणेन स्वतः अवस्तुनो धारणस्य बुद्धिपूर्वकता भातीति दधे वस्तुतो नास्तीत्यतो न दधे इति। किंचेयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा नेति श्रुत्या सधर्मकं सगुणं ब्रह्मैव दधे यदि वा न दधे इत्यभिधीयते न निर्गुणम्। यतस्त्विमां श्रुतिं व्याकुर्वन् भगवानपि इममर्थं व्याचष्टे '**मत्स्थानि[1] सर्वभूतानि न चाहं तेष्ववस्थितः। न[2] च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्**' इति। तस्माद्दधे वा न दधे इत्येवंरूपस्य भगवत ऐश्वर्ययोगमायाविलासरूपत्वात्सगुणमेवेति सिद्धं न्यायतो युक्त्या च, तस्मादनादित्वान्नास्त्यस्य जगदुत्पत्त्यादिहेतुः कोऽपि यदर्थमीश्वरः तत्कर्तृत्वाद्विषमः स्यादिति तात्पर्येण '**को[3] अद्धा वेद क इह प्रवोचत्**' इत्यादिश्रुतय ईश्वरवैषम्यं परिहरंति। अतो '**नासदासीत्**' इत्यादिवर्गार्थसंग्रहतया श्रुतयो भगवन्तं स्तुवन्त्यो जगत्कर्तृत्ववैषम्यं त्वयि भगवति न युज्यत इत्याहुः—**क इह नु वेद बतावरजन्मलयोऽग्रसरं यत उदगादृषिर्यमनु देवगणा उभये। तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदेति।** तस्मात् श्रीधरायैर्यद्व्याकृतं तत्प्रौढत्वात्सम्यगनालोच्येति सिद्धम्। एवमेव सर्वव्याख्यास्थले तद्दूषणं ग्रंथविस्तारभयहेतुभूतम्।

---

१ भ. गी. ९।४। २ भ. गी. ९।५। ३ ऋ. सं. ८।७।१७।

अथ भगवान् श्रुतिकल्पलताकारः प्रकृतमनुसृत्य श्लोकद्वितीयार्धं व्याकरोति । नन्वनादित्वात्तदुद्भवहेत्वभावो यदि साध्यते तर्ह्यनादेरुत्पत्तिरेव नास्तीति ब्रूमो जगदनादित्वस्य न कदाचिदनीदृशमिति पक्षोपयोगित्वात्, तावता त्वनादेराद्यंताभावात् कालत्रयाबाधितरूपत्वात् सत्यत्वं चोपपादयाम इत्याशंक्य **'नासदासीन्नो सदासीत्तदानीम्'** इत्याद्याः श्रुतयो जगतः सृष्ट्यादेः प्रवाहरूपानादित्वं साधयितुं पूर्वं प्रलयमाहुः—तर्हि न सन्नित्युत्तरार्धेन—

## तर्हि न सन्न चासदुभयं न च कालजवः
## किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥ २४ ॥ (११) ॥

यदा शयीत तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्रेत्यन्वयः । यत उदगाद्दपिर्ब्रह्मा स ईश्वरोऽपि जगदुत्पत्तिहेतुं न वेदेति पूर्वार्धेनोक्तः स ईश्वरो यदा शयीत तर्हि तदा न सत् स्थूलं कार्यं । न च असत् सूक्ष्मं कारणम् । यद्वा न सत् प्रतिबिंबचैतन्यं, न च असत् उपाधिभूतं आविद्यकं स्वकारणेन सहितं जडं तत्कार्यकारणयोश्चासत्त्वात् । सतः प्रतिबिंबचैतन्यस्य सत्त्वात् । **'सदेव सौम्येदमग्र आसीत्'**[1] इति श्रुतेर्बिंबमेकं सदेवासीन्न प्रतिबिंबं, तथा च **'असद्वा इदमग्र आसीत्ततो वै सदजायत'**[2] इति श्रुतेः असज्जीवोपाधिहेतुभूतः प्रतिबिंबः । सतोऽनादित्वेऽपि मुहुरुत्पत्तिश्रवणात्तयोरत्रोत्पत्तिक्रमेण व्युत्क्रमतो लयः । **'नासदासीन्नो सदासीत्'** इति श्रुतेः । सदेवादौ सतोऽसत्तो लयस्तु प्रतिबिंबहेतुभूतः जलस्येवासतो भावि यत्तदसदित्यभिप्रायात् । तत्रासतो जीवोपाधेर्लये प्रतिबिंबस्य बिंबैक्यान्न तत्रासन्न चासदित्यर्थः । ननु बीजे वटवत्प्रलयेऽपि सच्चासच्चोभयमप्यासीदिति ब्रूम इति चेत्सत्यम्, किंतु प्रकृतिपुरुषयोरुभयोर्योगेनोभयप्रसिद्धिस्तत्र प्रलये तयोर्विश्लेषात्, सदसतोः प्रतीतिविषयत्वाभावान्न सन्न चासत्तदानीमिति सूत्रयंत्य आहुः—उभयमिति । उभयं प्रकृतिपुरुषयोगरूपमुभयप्रतीत्या तदुभयप्रसिद्धिकरं न तर्हीत्यनुषंगः । सुषुप्तौ तमसि लीने सत्त्वे यथा तु प्रतिबिंबस्य बिंबैक्यान्नोभयप्रतीतिस्तथा, किंतु सुषुप्तावीश्वरस्य सुषुप्तिसाक्षित्वादुपाधिसद्भावः । यावद्द्रष्टा तावद्रज्ज्वामहिरितिवत्प्रलये परमेश्वरे योगनिद्रया निद्रिते न सन्न चासदिति तात्पर्येण यदा शयीत तर्हि न सन्न चासदुभयं न चेत्युच्यते । एतावतेयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा नेति श्रुत्युक्तं जगदसत्यत्वं स्फुटयंति । एतस्याः श्रुतेर्वर्गसंग्रहरूपत्वात् । अयमर्थः—यथा कश्चिदगुणज्ञोऽपि गुणे भासमानं मिथ्या फणिं पश्यति, तथेश्वरः

१ ऋ. सं. ८।७।१७। २ छा. ६।२।१। ३ तै. २।७।

स्वस्वरूपे जगन्नास्त्यपि जीवदृष्ट्या नानाकारेण भातीति साक्षित्वेन पश्यतीति, स च यदा शयीत तर्हि सुप्ते द्रष्टरि यथा न रज्ज्वामहिरेवं नहि ब्रह्मणि सन्न चासन्न चोभयं, तस्माज्जगन्मृषाप्यनादितया यदा यदा द्रष्टा तदा तदा शुक्तौ रजतवद्ब्रह्मणि जगत्ततो नेश्वरस्तत्कर्ता विषम इति तात्पर्यम्। ननु '**नासदासीन्नो सदासीत्तदानीं**'[1] इति श्रुतेस्तदानीमिति पदात्तर्हि न सन्न चासदिति श्रुत्युक्तस्तुतिवाक्येऽपि तर्हीतिपदात्तत्र कालो गम्यते, तावता तु सुप्तेऽपि द्रष्टरि कालो यदा विद्यते इति सिद्धं तदा द्वैतं सुसिद्धमेव। सुप्ते द्रष्टरि यदा द्वैतं तदा जगदपि सत्यमित्याशंक्य '**न[2] मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्**' इत्याद्याः श्रुतय आहुः—न च कालजव इति। न च कालस्य जवो वेगो दिवारात्र्यादिलवनिमेषादिरूपस्तर्ह्यासीदित्यर्थः। ननु रात्र्यादिलवनिमेषादिकालस्य सूर्यादिगत्या परिसंख्यमानत्वात्तदानीं कालजवो नासीदित्युक्तं भाति। किंतु यः कालो लवादिसंख्यया नभ इवांगुलिवितस्त्यरत्न्यादिप्रमाणैरनंतत्वेऽपि परिगण्यते स कालस्तु तत्रास्तीत्येव वाच्यम्। कदा न सदाद्यासीदित्यपेक्षायां च प्रलयकाल इत्येवावश्यकतया वक्तव्यत्वादनाद्यनंतः कालस्त्वासीदेवेति चेत् कदा वा स काल आसीत्। ननु प्रलय इति चेत्प्रलयः सर्गादिकालवत्कालभेदो वा स्वयमनादि-कालो वा? आद्ये प्रलयकालेऽप्यनादिकाल इति वक्तव्ये प्राप्ते तु सृष्ट्यादि-कालवत्प्रलयकाल एकः कालः। तदन्य एकोऽनाद्यंनतः कालः। यस्मिन् सृष्ट्यादि-कालत्रयस्य द्विपरार्धसंख्या भवति। तथा सत्युभौ नित्यौ वा नित्यानित्यौ वा? तत्रोभयोः को वा नित्यः कश्चानित्यः? यद्युभौ नित्यौ तर्हि सृष्टिकालेऽपि लय-कालो वाच्यः। अस्त्विति चेल्लयेऽपि सृष्टिस्थितिकाला वा सत इति वाच्यम्। तयोरभावे तु तयोर्न नित्यत्वं सिद्धम्, लयकालोऽप्यनित्य इति सिद्धम्, कालत्रये कालत्वसाम्यात्। तस्मान्नोभयनित्यत्वम्। किंत्वेको नित्यस्तत्र लयकालो न नित्यः, किंत्वनाद्यनन्तः कश्चन कालश्चतुर्थः स एव नित्य इति सिद्धम्, तस्मात् '**नासदासीन्नो सदासीत्तदानीं**'[3] इति श्रुत्या च तर्हि न सदिति वाक्येन च न लयकालोऽभिधीयते। लयकालस्येश्वरयोगनिद्रापर्यंत-त्वात्तत्र लयकर्तरि न प्रलयकालस्तस्मान्नेति तदानीमिति यः कालः स लया-नंतरकालः, स च कालो ब्रह्मैव यल्लयशेषमित्यभिधीयते। तदुक्तं भागवते तृतीय-स्कंधे—'**गुणव्यक्तिकरः[4] कालो निर्विशेषोऽप्रतिष्ठितः। पुरुषस्तदुपादान-**

१ ऋ.सं. ६।७।१७। २ ऋ.सं. ८।७।१७। ३ ऋ.सं. ८।७।१७। ४ भा. स्कं. ३।१०।११।*

४ * गुणव्यतिकरः कालः स्वभावः सूत्रमेव च।
पुरुषः प्रकृतिर्व्यक्तमहंकारो नभोऽनिलः॥ भा. स्कं. ११।२२।१३।१४॥

मात्मानं लीलयाऽसृजत्' इति। पुरुषस्योपाधिरीश्वरो यदुपादानकमात्मानं लीलयाऽसृजत्तु लयशेषं ब्रह्मैव। तथा च प्रस्तुतश्रुत्यापि यस्मिन्नासदासीदित्युच्यते स कालत्रयशक्तिबीजरूपः कालाख्य इत्येव सूच्यते। तदित्थम्—नासदासीदित्यादिसर्वाभावो यस्मिन्नुच्यते तत्किमित्यपेक्षायां '[१]सदेव सौम्येदमग्र आसीत्' इत्यादिश्रुतिभिः सत्यज्ञानादिलक्षणं ब्रह्मेत्यर्थत एव गम्यते। '[२]अनाद्यनंतं महतः परं ध्रुवम्' इति श्रुतेः। तथापि श्रुत्या तद्ब्रह्मेति नोच्यते। तच्च कालकृतद्वैताभासशंकयैव ब्रह्मणि तदानीं नासदादि किमप्यासीदित्युक्ते तदानीमितिशब्देन कालो गम्यते। स एकोऽथ ब्रह्मैकमेवं द्वैताभासो माभूदित्यत्र यस्मिन्नासदादि किमपीत्युक्तम्। तदानीमिति तर्हीति काल एवेत्यभिधीयते। तावता कालशब्दवाच्ये ब्रह्मणि नासदादि किमप्यासीदिति सूच्यते। नन्विष्टमेतत् यद्यनया ऋक्श्रुत्या तदानीमितितर्हीतिशब्दाभ्यां कालः सूच्यते इति चेत् '[३]सदेव सौम्येदमग्र आसीत्' इति सामश्रुत्या ब्रह्मासीदित्युच्यते। तथाच '[४]असद्वा इदमग्र आसीत्' इति यजुषा त्वसदप्यग्र आसीदित्युच्यते। तस्मात् कालश्च ब्रह्म च असच्छब्दवाच्या माया चेति त्रयं तदानीमस्तीति ब्रूम इति चेन्मैवम्। '[५]तस्माद्धान्यन्न परः किंचनास' इति श्रुत्या तदानीं तर्हीति कालशब्दवाच्यं यल्लयशेषमभिधीयते तस्मात् ह्य अन्यत् न परः किंचनासेति तदितरमात्रस्य निषेधितत्वात् अत्र तस्मादिति तच्छब्देन पूर्वपरामर्शः सूच्यते। तत्र कस्मादिति विचार्यमाणे तु यस्मिन्नासदादि किमपि तस्मात्तत्कस्मिन्नित्यपेक्षायां तु तदानीमिति तर्हीति कालशब्दवाच्यमेवाधिकरणं तस्मादिति पूर्वपरामर्शेन लभ्यते। न ततोऽन्यत्पुराणादिषु मुनिभिः। लयांबुसद्भावस्तु ज्ञानहीनसगुणोपासकजनमनःप्रोत्साहार्थमभिधीयते। तेषां करचरणादिविशिष्टमूर्त्येकनिष्ठानां प्रलयानंतरकाले तदभावश्रवणात् अस्मद्देवोऽप्यहो कदाचिदभावं गच्छतीति, अतः किं तदाराधनेनेति तत्त्वज्ञानशून्यानां माभूदुभयभ्रष्टत्वमतः शेषपर्यंके लयसलिले स्वपिति च तत्रैव प्रबुध्यते चेत्यभिधानात्तेषां भगवतो मायामात्रे लीलाविग्रहे सत्यत्वधियां तत्सद्भावं दर्शयितुं योगनिद्राद्यंतयोः प्रस्वापप्रबोधकालयोर्द्रष्टुर्गुणे फणिवत्सलिलादिसद्भावस्य दृश्यत्वादेवमभिधीयत इति न श्रुतिपुराणयोरन्योन्यविरोधः। किंचैतावता श्रीमद्वैकुंठलोकस्य तत्रत्यानां मुक्तानां च भगवल्लीलाविग्रहाविर्भावतिरोभाववत्प्रस्वापप्रबोधयोरिव प्रलयाद्यंतकालयोरनुभवश्च लयानंतरमीश्वरत्वाविर्भावात्प्राक्काले तु सुषुप्तिवन्न कापि प्रतीतिर्न च लये लयो न च कालकृतानावृष्टितत्कालार्कतापसंकर्षणमुखानलदाहादिजनितदुःखं न च सर्गे सर्गो न च सर्गानन्तरकाले पृथक्त्वेनावस्थानमिति द्वितीय-

१ छा. ६।२।१। २ जाबाल ३।१५। ३ छा. ६।२।१। ४ तै. २।७। ५ ऋ. सं. ८।७।१७।

स्कन्धादौ ब्रह्मणः शतवर्षतपःसमाप्त्यनंतरं वैकुंठदर्शनेन तत्रत्यानां मुक्तानां वर्णनेन च सृष्टेः प्राक्काले वैकुंठलोकसद्भावादयं गूढाभिप्रायः सूच्यते। तस्माद्भगवतः प्रबोधसमये शेषशयनादिलयसलिलादीनां च वैकुंठलोकस्य चाविर्भाव इति तत्त्वम्। शेषस्य वैकुंठस्य मुक्तानां च भगवल्लीलाविग्रहोपाधरंतःपातित्वात्। यच्च विकुंठायां वैकुंठावतारे रमया प्रार्थ्यमानेन वैकुंठलोकः कृत इत्यभिधीयते, तच्च लक्ष्म्याः क्षीरसमुद्रादिवाविर्भावस्तत्कन्यात्वप्रसिद्धिरिवोपचारः। किंच महाभारतादीनामनादित्वेऽपि श्रीवेदव्यासकृतत्वमिवानादित्वेऽपि वैकुंठावताररचितत्वमौपचारिकम्। वस्तुतो भगवल्लीलाविग्रहवदनादितया क्वचिदाविर्भावः क्वचित्तिरोभावस्तथैव तत्रत्यानां मुक्तानां चेत्यनवद्यम्। एवं भगवता श्रुतिकल्पलताकृता क इह नु वेदेत्याद्ययं श्लोको व्याकृतस्तत्रावशिष्टानि चत्वारि चरमपदान्युत्तरार्धस्य शास्त्रमवकृष्य शयीत यदेति तदर्थं व्याकरोति—निखिलनिगमाननो भगवान् सूक्ष्मरूपो यदा शयीत तदा किमपि न तत्रेत्युक्तम्। तत्र किं कृत्वा शयीतेत्यपेक्षायां—'**यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनंदं ब्रह्मणो विद्वान्**'[1] इत्याद्याः शब्दब्रह्मात्मयोगपराः श्रुत्यो योगनिद्रालक्षणमुपपादयंत्यश्चरमतः स्वलयमप्याहुः—शास्त्रमवकृष्येति। शास्त्रं वेदाख्यस्थूलसूक्ष्मभेदेन द्विविधं भगवद्वचोरूपं यच्च पूर्वत्र व्याकृतं '**चत्वारि वाक्परिमिता पदानि**'[2] इत्यादिश्रुतेः, तदवकृष्य परादिरूपवाक्शक्तीराकृष्य ताः सदेकमात्रे लयं नीत्वा यदा शयीत तदा किमपि न तत्रेत्यनुषंगः। प्रलयान्ते सर्वाभावसाक्षिणो भगवतो योगनिद्रेयमुपपाद्यते। अयमर्थः—योग इव योगो निद्रेव निद्रेति योगनिद्रा। यदि योगस्तर्हि अनुभवे सत्त्वमनुभवधर्मात्मकं निर्धर्मकाकारं परिणम्य तिष्ठतीति वाच्यम्। तच्च तदानीं न संगच्छते। नासदासीदिति पूर्वत्रासतो मायाकार्यकारणमात्रस्याभावस्योक्तत्वात्। तदभावे सुषुप्तिरिति वाच्यम्। तावता तत्रापि तमोलीनं सत्त्वं तत्कृतद्वैतं, तत्तु सुतरां न संगच्छते। ततो न योगो न च निद्रा, तथापि सकललयसाक्षिणः शुद्धसत्त्वोपाधेश्च दिवसचरमभागे मृषांभसः किरणकदंबे लय इव लयो भवतीत्यतो लयविवक्षया निद्रेत्युच्यते, तथापि न तमसि लयः, किंतु ब्रह्मणि लीयमानत्वाद्योग इत्यपि चोच्यते, ततो योगनिद्रेति प्रसिद्धिः। तथा तु जीवन्मुक्तानां स्वरूपाकारपरिणतं सत्त्वं प्रारब्धपरिसमाप्तिकाले ब्रह्मण्येव लीनं भवति। न ततस्त्वनुभवात्मकं तेषां सत्त्वं पुनर्दग्धपटप्रायत्वमप्यवलम्बते च। नित्यमुक्तोपाधेश्च न हि लयांतरकाले अनुभवधर्मत्वम्, किंतु जीवन्मुक्तस्य न पुनरुत्थानम्। ततो न तेषां मुक्तेर्योगनिद्रेतिसंज्ञा भवति। भगवतो नित्यमुक्तोपाधेः पुनराविर्भावदर्शनाद्योगनिद्रेति प्रसिद्धिः। तत्र नित्यमुक्तस्याखंडानंदानुभवरूपत्वाद्योगस्तु नित्य एव, किंतु साक्षित्वादिसधर्मक-

१ तै. २।४।१। २ ऋ. सं. २।३।२२।

त्वान्नित्यं निर्धर्मकाकारपरिणतमेव सत्त्वं तिष्ठति न तु लीनं भवति तस्माद्योग एवेति वाच्यं न तु योगनिद्रेति। यदा तु साक्षित्वादिसधर्मकत्वं जहाति तदा नित्ययोगरूपं सत्त्वं चाधिष्ठाने दिनान्ते किरणेषु मृगांभ इव लीयते तदा तु योगनिद्रा भवतीत्यतस्तद्विवक्षया शास्त्रमवकृष्य शयीतेत्युच्यते। मायोपाधेः शुद्धस्य मलिनस्य वा स्थूलसूक्ष्मभेदेन द्विविधशब्दरूपत्वात् सूक्ष्मस्य नित्यचिदाश्लिष्टरूपत्वात् स्थूलस्य पंचाशन्मातृकारूपत्वान्निगमशब्दरूपो भगवत उपाधिः। तथाच श्रुतिः—'**यावद्ब्रह्म विष्ठितं तावती वाक्छंदसां योगमावेद धीरः**' इति। विष्ठितं ब्रह्म सगुणं यावत्तावती वाक् वेदवाणीत्यर्थः। सा च सत्त्वचैतन्ययोगेन सर्वज्ञत्वादिप्रत्ययहेतुभूता सूक्ष्मा शब्दरूपेण परिणममाना वेदरूपा भवति। '[1]**यन्मनसा ध्यायति तद्वाचा वदति**' इति श्रुतेः। सकलानुभूत्या च तत्रेश्वरस्य नित्यविद्योपाधित्वात्सत्त्वैकमात्रोपाधित्वान्निरंतरयोगरूपं तस्यापि लयो निद्रा, सा निद्रा यदा तदा न वेदाः शब्दरूपोपाधित्वात्। अतः शास्त्रमवकृष्य मौनमवलम्ब्य यदा शयीत तदा लयानन्तरकाले कालैकमात्रस्वरूपे कालत्रयशक्त्यंकुरबीजरूपेण किमपि, सुप्ते द्रष्टरि न हि कापि कल्पनेति न्यायात्। नहि तत्र वेदानां सूक्ष्मं रूपं तत्र लीनं यदा शास्त्रमवकृष्य शयीत तदा न किमपीत्युच्यते। एतावता श्रुतिस्तुतिवक्ता सनंदनोऽत्र-'[2]**ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः। कथं चरन्ति श्रुतयः साक्षात्सदसतः परे**' इति प्रश्नस्योत्तरं व्याकरोति—शास्त्रमवकृष्य यदा शयीत तदा किमपि न तत्रेति। शास्त्रं श्रुतयः स्थूलसूक्ष्मरूपेण द्विविधास्तत्र स्थूलमात्रं रूपं न सूक्ष्ममिति चेच्चतुर्विधवाचां मौनेऽपि योगिनां चित्तं स्वरूपाकारपरिणतमनुभवे तिष्ठत्येव तदा किमपि न तत्रेति यदुच्यते तद्विरुद्धम्। तस्मात्स्थूलं वैखरीरूपं सूक्ष्मं सत्त्वैकमात्रं नित्यचिदाश्लिष्टं द्विविधं श्रुतीनां रूपं शास्त्रं तदवकृष्य यदा शयीत तदा न किमपीत्येतावता श्रुतयस्तु निर्गुणे निर्गुणाकारपरिणताः सत्त्वसूक्ष्मरूपेण चरन्त्यः स्थूलरूपेणोच्चरन्ति ता अवकृष्य यदा शयीत तदा न किमपि न तदा सत्त्वचैतन्ययोगेनेश्वरोपाधिरस्तीति। अत ईश्वरोपाधिरूपेण श्रुतयो निर्गुणे चरंतीत्युत्तरम्। अतः सदसतः परे इति प्रश्ने श्लिष्टगतद्वितीयप्रश्नेऽप्यत्रोत्तरं दर्शयति सनंदनः–सदसल्लयशेषे कालैकमात्रे श्रुतयश्चरन्ति '[3]**नासदासीन्नो सदासीत्तदानीं**' इत्यभिधानात्, तच्च कथं चरंतीति प्रश्नस्यापीदमेवोत्तरं शास्त्रमवकृष्य यदा शयीत तदा किमपि न तत्रेति। किमपि न तत्रेत्यनेन न हि तस्मिंल्लयानंतरकाले श्रुतयः सन्ति किंतु यथा सुप्तोत्थितः पुरुषः सुखमहमस्वाप्सं न किंचिद-

१ कौषीतकि, २।४। २ भा. स्कं. १०।८७।१। ३ ऋ. सं. ८।७।१७।

वेदिषमिति यथाह तथेश्वरो निगमवचोभिर्नासदासीदित्याद्यभिधत्ते । यथाच सुषुप्तौ स्थूलसूक्ष्मरूपस्य द्विविधशब्दस्याभावेऽपि तत्र सत्त्वे तमसि विलीने न च कश्चन प्रत्ययोऽपि । न तत्रत्यं सुखं किमपि वेदनं चाभिधत्ते । वेदनस्य बुद्धिकर्मरूपस्य बुद्धौ तमसि विलीनायामभावत्वान्न किंचिदवेदिषमित्याह । तावता तत्र प्रत्ययः कोऽपि नास्तीति सिद्धम् । यदि प्रत्ययस्तर्हि न किंचिदवेदिषमित्यसिद्धम् । ननु प्रत्ययोऽस्त्येव किंतु विस्मृत्यादिहेतुना न स्फुरतीति चेत् समाधिरिति वाच्यम् । न सुषुप्तिः । वृत्तिशून्यत्वेऽपि आत्मत्वप्रतीतेः । यदि क्वापि विषयस्फूर्तिरपि तत्रास्तीति चेत् स्वप्नावस्थेति वाच्यम् । तदा सुषुप्तिरेव नास्तीति सिद्धे विरुद्धम् । तस्मात्सुषुप्तावहमितिस्फूर्तिरस्तीति यावन्तो मतप्रवर्तका आहुस्तावन्तोऽप्यदीर्घदर्शिन इति सिद्धान्तः । तर्हि सुखमहमस्वाप्समिति यदाह स एव तत्रत्योऽनुभव इति चेन्न किंचिदवेदिषमित्यसिद्धम्, तर्हि कथं सुखानुभव इति चेज्जागरे बुद्ध्यात्मनोर्योगसमये तावत्पर्यन्तं वृत्तिराहित्याद्वृत्तेः परिच्छिन्नत्वाद्दुःखरूपत्वात्तदभावात्तत्र सुखावस्थितिरनुमीयते, आत्मनः सुखैकमात्रत्वात् । नहि गुडस्य गुडांतरेण माधुर्यं संभवति । '**यो वै भूमा तत्सुखम्**'[1] इति श्रुतेः '**अथ यदल्पं तन्मर्त्यं तद्दुःखम्**'[2] इति श्रुतेर्वृत्तेः परिच्छिन्नत्वाद्दुःखरूपत्वम्, तदभावकाले तु सुखमित्यनुमानमित्यलम् । यस्मान्न सुषुप्तौ कोऽपि प्रत्यय एवं प्रलये निर्धर्मके सच्चिदानंदैकमात्रे ब्रह्मणि न कोऽपि मायावृत्तिकृतः प्रत्ययधर्म इत्यतो न तत्र श्रुतयस्तथापि नासदासीदित्यादितदानीं लयानंतरकाले न किमपीति यदाहुस्तत्तु स्थूलरूपश्रुतीनां सर्वज्ञस्येश्वरस्य वचोरूपत्वात्सूक्ष्मरूपेण तासामेव श्रुतीनां तस्य सर्वज्ञस्य चिच्छक्तिरूपत्वाद्योगनिद्रादिपुनःप्रबोधकालपर्यंतमशेषप्रपंचकल्पनामूलभूतायाः स्वचिच्छक्तेः प्रत्ययाभावादसदादिप्रपंचजातं किमपि न तत्रासीदिति चिच्छक्त्या प्रतीतम् । तामेव स्थूलशब्दरूपेणाविष्करोति '**नासदासीन्नो सदासीत्तदानीम्**'[3] इत्यादि । स्वचिच्छक्तेः प्रत्ययाभावाद्यथा प्राकृतो न किंचिदवेदिषमित्याह, किंतु प्राकृते सुप्ते स्वीश्वरो द्रष्टृत्वेन सुषुप्तौ मदीयं चिदेकप्रतिबिंबं तदानीं मयि लीनमस्तीति तदुपाधिभूतं सत्त्वं तमसि विलीनमस्तीति ततोऽस्य न कोऽपि प्रत्ययोऽस्तीति साक्षित्वेन द्रष्टृधर्मेण पश्यतीत्यस्योपाधिस्तमोविलीनः प्रत्ययरहितोऽपि वर्तते । लयानंतरकाले तस्यापीश्वरस्योपाधेर्निर्धर्मके विलीनत्वान्न तस्य कोऽपि प्रत्ययः । ततो द्रष्टुरप्रत्ययात्वान्नहि रज्ज्वामहिरस्तीति न्यायान्नासदादि किमपि तत्रेतीश्वर एवाभिधत्त इति प्रलयानन्तरकालस्य कथमभिधानमित्यस्योत्तरम् । ननु प्रत्ययाभावाच्छून्यमेव तदिति चेन्न सुषुप्तिलयानन्तरकालयोर्जीवात्मपरमा-

---

१ छा. ७।२४।१। २ छा. ७।२४।१। ३ ऋ. सं. ८।७।१७।

त्मनोरनुभवसाम्यात्। सुषुप्तौ तमःशबलिते पंकच्छुरिते जले प्रतिबिंबस्य बिंबैक्यवद्दुःखरूपोपाधिविश्लिष्टस्य प्रतिबिंबचैतन्यस्य सुखैकमात्रबिंबचैतन्यैक्येन स्थितस्य पुनः प्रकृतिंगते सत्त्वे निर्मले जल इव पुनः प्रतिबिंबस्योपाध्याश्लिष्टस्य सुखमहमस्वाप्समित्यात्मसुखस्य प्रतीयमानत्वात्। नहि शून्यमानंदस्वरूपं भवितुमर्हति। तच्च प्रबोधे तृप्तस्योद्गार इव सुषुप्तिसुखप्रत्ययः सर्वेषामस्त्येव। नहि करकंकणस्य दर्पणापेक्षा। तस्माद्यदेवानन्दस्तदेव चैतन्यम्। तथा च श्रुतिः–'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' इति। अयमर्थः—को ह्येवान्यात्कश्चेष्टयेन्मनोमयं लिंगदेहम्। मनसः कल्पना कस्य सत्तया भवेदित्यर्थः। कः प्राण्यात् कः प्रकर्षेण चेष्टयेत् स्थूलदेहमिन्द्रियविषययोगरूपभोगादिचेष्टाः कस्य वा सत्तया भवन्त्वित्यर्थः। यद्येष आकाश आनन्दो न स्यात्। यद्ययमाकाशरूपो निरवयवः सर्वगतोऽप्यसंग आनन्दो न स्यात् शून्यमेव यदि स्यात्तर्हि को वा देहद्वयरूपोपाधिं चेष्टयेत्? न कोऽपीत्यर्थः। देहद्वयस्य जडत्वादानंदश्चिदेकमात्र इति सूच्यते। तत्र यद्येतच्चैतन्यं न स्यादिति वक्तव्ये यद्येष आनन्दो न स्यादित्यनेन सुषुप्तौ चिच्छक्तेस्तमोलीनत्वान्नास्ति चित्स्वरूपत्वप्रत्ययः। नहि काष्ठादिकोपाधिं विनाग्निः प्रकाशते। तत उपाधिं विना स्वप्रकाशः प्रकाश्यप्रकाशकोऽप्यात्मा, किंतु प्रबुद्धस्य सुखमहमस्वाप्समित्यभिसंधानादात्मा त्वानन्दमात्र एव, स चानन्दो न शून्यं भवितुमर्हति सकलपुरुषार्थफलरूपत्वात्, तस्माद्यद्यात्मा न शून्यं किंतु आनन्दस्तर्हि आनन्द एव चित्स्वरूपस्ततः स देहद्वयरूपोपाधिप्रवर्तको निर्धर्मकोऽप्ययस्कांतोपलस्यायोभ्रमणस्वभाववदयमानंदात्मैवान्यात् प्राण्यादिति श्रुत्याऽभिधीयते। स एव लयानंतरकालरूपः कालत्रयशक्तिस्तरुबीजरूपोऽवशिष्यते ततो न शून्यमिति राद्धांतः। एवं च क इह नु वेदेति श्लोकेनेश्वरवैषम्यनैर्घृण्यपरिहाराय सृष्ट्यादेरनादित्वाभिधानप्रसंगेन जगदुपादानस्य कालत्रयाबाधितत्वं च जगतः सृष्ट्यादेः प्रवाहरूपानादित्वमुपपादयितुं प्रलयानंतरकाले सृष्टेः प्राङ् मायामात्रस्यापि द्वैतस्याभाव इत्युक्तम्। तत्र जगतः कार्यकारणरूपस्याप्यभावात्तत एव यदा तूद्भवः तदानीं मृदुद्भूतमृत्पिंडघटादिविकाराणां मृदेकमात्रत्वाद्विकाराणां वाचारंभणत्ववज्जगतः कारणकार्यरूपस्य मायामात्रत्वादधुनाप्यद्वैतमिति 'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिश्रुतय उपपादयंति, तदेतद्भेदवादिनां शिरःशूलप्रायत्वात्प्रलयानन्तरकालेऽपि कालोऽस्ति तदानीमिति श्रुतेरिति कुतर्कः खण्डित एव। किंचाद्वैताभावरूपं द्वैतमस्त्येवेति केचिदाहुः। तत्र भूतले घटो नास्तीतिवत्तत्र जगन्नास्तीति तेषां न्यायः। तच्च भूतलघटयोस्तद्द्रष्टुश्च सत्त्वात्संभवति। नहि सुप्ते द्रष्टरि रज्ज्वामहेः शुक्तौ रजतस्याभाव इति वक्तुं

१ तै. २।७।१ २ छा. ६।४।१।

शक्यते। यस्य भावो वक्तव्यस्तस्यैवाभावात्। तस्माद्यावद्द्रष्टा परमेश्वरो लयांभसि न साक्षित्वेन धर्मं जहाति तावद्रज्ज्वामहेस्तत्सत्यत्वधियां द्रष्टॄणामभावेऽपि रज्जुज्ञ-द्रष्टृसद्भावान्मिथ्यासर्पो नास्तीति मायामात्रस्यापि द्वैतस्याभाव इदानीमिति प्रत्य-यधर्मिणो विद्यमानत्वादुक्तुं शक्यते। तदनंतरं द्वैताद्वैतप्रत्ययरहितस्य द्वैताद्वैतप्रत्य-यप्रकाशकमात्रस्य निर्धर्मकस्योभयप्रत्ययराहित्यादुभयोरवस्तुत्वान्नहि सर्वाभावा-द्वैतस्यावसरः। द्वैतस्थितिकालेऽपि तस्याऽसत्त्वात्। स्थितिकालसत्यत्वस्य द्रष्टुर-भावेऽपि तदानीमभावान्न द्वैतं घटेत। यदा सत्यं तस्याप्यभाव इति चेन्नास्ति तस्या-भाव इति वाचारम्भणस्यायं पूर्वपक्ष इति सिद्धम्। यद्वा मृदीव घटवन्मृषांबुप्रा-दुर्भावकालात्प्राग्यथा रविकरकदंबे मृषांबु तद्वद्यत्र माया तत्राविद्या च विद्या च द्वैतं चाद्वैतं च सर्वमप्यस्त्येव। तथैव द्वैताभावरूपं च द्वैतं च तस्यां मायायामस्तु वा तत्र यत्र चराचरं तत्र तदभावोऽपि। तदभावे तदभावः। वाचारम्भणमात्रस्य घटादि-प्रपंचस्योद्भवात्प्राक् तल्लयानंतरं वा यथा मृदि घटादिप्रपंचोऽस्तीति गम्यते, तथा लयानंतरकाले यथा जगदस्ति तथास्तु नाम तदभावरूपं द्वैतम्। तदुद्भवानंतरं तस्य सद्भावस्य मिथ्यात्वे तु तदभावस्य मिथ्यात्वमिति किं वक्तव्यम्?। यथा स्वप्ने वंध्यासुतस्य ख्यातिस्ततः सुषुप्तौ वंध्यासुताभावाद्वैतं च, वस्तुतया विचार्यमाणे यदि तस्याः सुतसद्भावस्तर्हि तस्याभावस्तथा सति तदानीं अभावद्वैतं चेति वक्तुमवसरः स्यात्। तदभावे तदभावः। अलमित्यादिविस्तरैः॥ २४॥ (११)॥

**नादिर्न हेतुर्जगदुद्भवादेस्त्वं तस्य कर्ता विषमो न तस्मात्।**
**अनादिबद्धैकविमुक्तिहेतुं सेतुं भवाब्धेर्भगवन्भजे त्वाम्॥ १॥**

इति श्रुतिकल्पलतायां श्रीमद्भागवते श्रुतिस्तुतावेकादशश्लोकव्याख्यानंनाम सप्तदशोऽध्यायः॥

॥ इति सप्तदशोऽध्यायः॥

---

## अष्टादशोऽध्यायः।

निर्गलितार्थमाहुः। यदा प्रलयसमये न बह्वंतरमस्ति तदापि साधनाभावान्न तत्त्वज्ञानमतस्त्वदेकशरणतया श्रवणकीर्तनादिभक्तिरेव सुकरेति, तस्मात्प्रलये जीवानां ब्रह्मणि बह्वंतराभावेऽपि ज्ञानसाधनराहित्यान्न तत्त्वज्ञानं भवतीति प्रलयाभिधानमिति चेदेवमपि न बह्वंतरम्। सति प्रलये साधनाभावाद्यदि न भवति सुषुप्तौ तथैव तु साधनसद्भावाच्च न बह्वंतरस्य प्रलयसाम्याच्च,

तस्मात्प्रलयविवक्षा न तत्त्वदुर्ज्ञेयत्वविषयेति सिद्धम् । किंच ये तु शुद्धसत्त्वा ज्ञानाधिकारिणस्तेषां प्रलये यदा ब्रह्मणि न वह्नंतरं तदा तत्त्वज्ञानं स्यादिति वाच्यम्, तन्न घटते गुरुशास्त्रबुद्ध्यभावात् । एवं शुद्धमलिनयोरविशेषात्तदानीं सर्वेषां तत्त्वदुर्ज्ञेयत्वविवक्षया प्रलयाभिधानमिति सिद्धे न मलिनचित्तदुर्बोधत्वमिति सिद्धम् । ततस्तु तद्विरुद्धम् । न तु तदानीं बह्नंतराभावत्वेऽपि न ज्ञानं किमुतेतरकाल इति भावात् प्रलयाभिधानमिति चेद्दरिद्रस्य क्लीबस्यांकगतायाः कामिन्या अपि भोगो न घटते इति न्यायात्तत्र धनिकस्य क्लीबस्यापि भोगसंभवसाधारण्यान्न दरिद्रत्वं भोगाभावहेतुभूतं, तथा यस्य कस्यचिदंधस्य सूर्य इव मलिनचित्तानां तत्त्वं, तावता यैरधिगतं तत्त्वं तेऽपि प्राङ्मलिनाचित्ता एव, यदि तेषां चित्तशुद्ध्या ज्ञानं तथैतेषामपि स्यादेव तन्न बह्नंतरमिति यदुच्यते तत्किं जीवानां जीवोपाधिशबलितत्वेन वा निरुपाधितया ब्रह्मैक्येन वा ? आद्ये '[1]नासदासीन्नो सदासीत्' इत्यादिश्रुतिभिरेव, तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्रेति यदुच्यते तेन विरोधापत्तेस्तदसिद्धम् । द्वितीये जीवोपाधीनां च तत्प्रकाशकचिदंशानां च ब्रह्मैक्यान्न तत्रापि । एवं श्रौतसिद्धांतमुक्त्वा स्वीयमेकमेवाद्वैतमतं न्याययोगसिद्धं सिद्धं '**सर्वारंभास्तंडुलाः प्रस्थमूला**'—इति, तथात्मत्वमबाधितं यत्र तदेव मतम् तदन्यत्र बाला यथा तंडुलादिहीना अपि प्रस्थविडंबनेन क्रीडंति तथान्यानि मतानि, बाधितात्मत्वात् । ततस्तद्भ्रांतत्वं स्फुटयंत्यः कानिचिदनुवादमात्रेण न्यायविरुद्धानीत्युपपादयंत्य आहुः—जनिमित्यर्धेन—

**जनिमसतः सतो मृतिमुताऽऽत्मनि ये च भिदां**
**विपणमृतं स्मरंत्युपदिशंति त आरुपितैः ।**

असतो जडात् संतश्चैतन्यस्य जनिमिति केचित्स्मरंत्युपदिशंतीति सर्वत्रान्वयः । असत इति पदस्य पुनरन्वयान्मतांतरोपन्यासः । असतः सतो जनिं मृतिं चेति केचित् । आत्मनि भिदां केचित् । विपणं ऋतं केचित् । ते आरुपितैः आरोपितैः स्मरंत्युपदिशंतीति क्रमेण मतचतुष्टयखंडनम् । असतः सत्ताहीनात् सतः सत्तास्वरूपस्य जनिमुत्पत्तिं स्मरंति चोपदिशंति । तस्मादतीव मंदा इत्यर्थः । तत्र '[2]**तद्धैक आहुरसदेवेदमग्र आसीत्**' इति श्रुतेरस्य पूर्वपक्षस्यानुवादः । असदेवाग्रे आसीत्सतः कारणत्वेनेत्यर्थः । तन्न घटत इति '[3]**कथमसतः सज्जायेत**' इतिन्यायोपबृंहितश्रुत्याऽस्य मतस्य खंडनं विधीयते । एके असदेवेदमग्रे आसीदित्याहुस्तन्न घटते । असतः सत्कथं जायेत । नहि घटान्मृदुद्भवतीति न्यायात् ।

१ ऋ. सं. ८।७।१७। २ तै. २।७। ३ छा. ८।७।१।

तत्रासदेव मृत्, घटः सदिति ब्रूम इति चेत्तर्हि देहो मृत्त्वं घटश्चेतनः सच्छब्द-वाच्यस्तथा सति त्वं घटो मृदं दर्शयसीति सिद्धं, तद्विरुद्धम् । नहि घटो मृदं दर्शयति, यदि मृदं दर्शयति यदि घटो मृदः प्रकाशकः स्यात्तर्हि असतः सज्जायेत । तदभावे तदभावः। अयमर्थः—ये त्वसतः सजायत इत्याहुस्त एव किलासंतं प्रकाशयंति । तेषां कार्यकारणज्ञानरूपत्वान्नासतो जडस्यार्थं विवेकः संभवति । यदि संभवेत्तर्हि असन्मृतशरीरं तस्याप्येवं विवेकक्षमत्वं संभवेत, तदभावे तदभावः । तस्मात्सतः कारणत्वमिति सिद्धम् । यदि असत्कारणमिति रूपं ज्ञानमसत उत्पद्येत तर्हि ज्ञानं कार्यमसत् कारणं प्रकाशयतीति प्राप्ते घटो मृदं प्रकाशयतीति सिद्धं। तथा सति न्यायविरुद्धम्। घटमृते मृद्दर्शनान्मृदमृते घटस्यादर्शनान्न्यायविरुद्धत्वात् 'कथमसतः सज्जायेत'[1] इति श्रुत्यात्रोच्यते । असतः सतो जनिं स्मरंति स्वयमित्यर्थः । उपदिशंत्यन्यानित्यर्थः । घटो यथा मृदं प्रकाशयतीत्यहो मंदा इत्यभिप्रायः। अत आहुः—आरुपितैः आरोपितैर्न्यायैरन्याये न्यायधिया त एवं स्मरंत्युपदिशंति, तस्माद्भ्रांता इति भावः । बाधितात्मत्वनिरूपणात् द्विजोऽहमिति यो द्विजो न वेद स भ्रांत इति प्रसिद्धं, तस्मादबाधितमात्मत्वं यत्र तदेव मतमिति सर्वत्र। तस्मात् 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्'[2] इति न्यायाम्नायसिद्धः सिद्धांतः । सतोऽसतः प्रकाशकत्वादसतः सदेकप्रकाश्यत्वात्। अथ केचित्पूगपर्णादियोगेन यथा रागस्तथाऽऽकाशादिभूतसंघातयोगादसतः सच्चैतन्यमहंप्रत्ययगम्यमुत्पद्यते । नभआदीनां वियोगे च तन्नश्यतीत्याहुस्तदनुवदंत्यः खंडयंति—मृतिमिति । मृतिं च जनिं च असतः सतः स्मरंत्युपदिशंतीत्यनुषंगः। असत आकाशादियोगात् सतश्चैतन्यस्य जनिं मृतिं चासतो वियोगादित्यर्थः । य एवं स्मरंति तेऽप्यारुपितैर्न्यायाभासैरित्यर्थः । पूगादेस्तदुत्पन्नस्य रागस्य च परस्परप्रकाश्यप्रकाशकत्वधर्मराहित्याज्जडचैतन्ययोः प्रकाश्यप्रकाशकधर्मत्वान्मूले कुठारवत्तत्सिद्धांतमूलस्य न्यायस्यानुभवानुपयोगित्वात्प्रत्यक्षैकप्रमाणवादिनां प्रत्यक्षविरुद्धोऽयं न्यायः । तांबूलतद्रागयोर्यदि जडत्वेऽपि प्रकाश्यप्रकाशकत्वं घटमृद्वदंगीकृत्योच्यते तर्हि मृद्यथा घटं प्रकाशयति तथा पूगादि तदुत्पन्नरागं प्रकाशयति । नहि रागं विना पूगाद्यदर्शनं वक्तुं शक्यते यथा घटं विना मृद इति दृष्टांतवद्दार्ष्टांतिकेऽपि यद्याकाशादियोगादुत्पन्नं चैतन्यमस्तु, किंतु यदि च तद्विनाप्याकाशादिसिद्धिः स्यात्तर्हि नारोपितो न्यायस्तदभावे तु न्यायत्वारोप एव न न्यायः । चैतन्यं विनाऽऽकाशाद्यदर्शनात् । ननु चैतन्येनादृष्टमप्याकाशादिकमस्त्येवेतिचेत् दृष्टमिति केनोच्यते । ननु चैतन्येन दृष्टं तेनैवोच्यते दृष्टस्य जडस्य पुनर्दर्शनादितिचेद्दृष्टस्य

१ छा. ८।७।१। २ छा. ६।२।१।

कुंडलस्य कनकैकप्रकाश्यस्य पुनरपि कनकेनैव यथा दर्शनं, तथा जडदृष्ट्या चिदाश्लेषेणैव सर्वस्य दृष्टादृष्टजडस्य दर्शनात्स्वप्रकाशत्वमसिद्धम् । ननु तर्हि स्वदेहादितरत्राप्यात्मास्तीति सिद्धं, तथा सति भूखननादिना स्वदेहे दुःखासंभवान्न घटते इति चेद्दीपशिखातत्प्रकाशवत्स्वदेहादितरत्रात्मास्तीति त्वयांगीकर्तव्यम् । चैतन्यैकप्रकाश्यत्वस्य प्रत्यक्षत्वान्न प्रत्यक्षमात्रप्रमाणवादिनं बोधयामः । अस्मद्रीत्या सर्वगत आत्मा नभ इव, घटजलप्रतिबिंबात्मानो जीवा उभयचैतन्येन भोक्तृत्वं तदितरजडप्रकाशकत्वं साधयामः । साधकस्य कारणत्वात्साध्यस्य कार्यत्वान्मृदिव वयं घटमिव जडं प्रकाशयामः । त्वन्मते तदसंभवादनुभवविरुद्धं तव मतम् । कुत इतिचेत्तत्सद्भावस्तेनाकाशादिनैव साध्यते उत तदुत्पन्नेन चैतन्येन ? । आद्यपक्षो न घटते प्रतीत्यभावात् । द्वितीये तदस्तित्वसिद्धिर्न तदधीना किंतु तदुत्पन्नादिति सिद्धे शिशोरधीनं मातृजीवनमिति सिद्धम् । किंच पूगाद्यस्तित्वचिद्धीश्च तदुत्पन्नरागाधीनेति सिद्धे तव तन्न घटते । रागं विनापि पूगादेरस्तित्वसिद्धेर्न्यायविरुद्धमिति सिद्धम् । ननु सुषुप्तौ जडप्रतीतिराहित्येऽप्यस्ति जडमिति चेत्तव मतरीत्या तूत्पन्नस्य तांबूलरागोपमितस्य नाश एवेति सिद्धम्, जाग्रत्स्वप्नवदात्मप्रतीत्यभावात्स्वरूपहानिः । पुनरुत्थितस्य मातृगर्भोत्पन्नस्येव चैतन्यांतरस्य स्वपूर्वनामाद्यशेषस्य प्रत्यभिज्ञा न स्यात्ततस्तदस्ति स एवाहमिति प्रतीत्या तावता जडप्रकाशकः केनापि स्वस्वरूपेण तस्मिन्जडे तदानीं तिष्ठतीत्यंगीकर्तव्यम् । पदादि यत्र कुत्रापि चालिते प्रबुध्यत इति दर्शनात् । अंगीकृते तु स आत्मेति सिद्धम् । तस्य ज्ञानाभावादात्मानं न वेद स भ्रांतस्ततस्त्वन्मतं भ्रांतमतं भ्रांतकृतत्वादतस्तेन सूक्ष्मरूपेणात्मा सर्वत्राकाशादिष्वस्तीत्यनुमीयताम् । अनुमानानंगीकारे तु सुषुप्तौ नात्मा न च जडं भवतामनुवर्तमानं वर्तते । तस्मादेवंरीत्या त्वदुक्तं सर्वमसिद्धम् । एतावता त्वसत्कारणवादिनां सर्वेषां मतं न्यायविरुद्धमिति सिद्धम् ।

अथ केचिदात्मा चिद्गुणः केचिच्चित्परिणामवानित्याहुस्तन्निराकुर्वंति—उतात्मनि ये च भिदां स्मरंत्युपदिशंतीत्यनुषंगः । तेऽप्यारुपितैः । आत्मा च तद्गुणश्च तथैवात्मा च तत्परिणामश्चेति भिदां स्मरंति तन्न घटते । गुणगुणिनोरभेदे गुणत्वकल्पनाया निरर्थकत्वम् । आत्मनश्चिद्गुणस्य विश्लेषादर्शनादग्नितत्प्रकाशकत्ववत्, भेदे त्वात्मा जड-ज्ञानाख्यगुणस्य ततोऽन्यत्वादिति सिद्धे सुखदुःखभोगो नात्मन इति सिद्धं । तदभावे तदभावः । ननु देहस्य सुखदुःखभोग आत्मन इति किं न स्यादितिचेद्देहोऽहमित्यनुभवात्तदभिमानाच्चैतन्यस्य स्वेतराभिमानिनो दुःखाद्यनुभवस्य घटनात् । आत्मनि जडे जडस्य तन्न घटते देहस्येति चेत् ? तत आरोपितन्यायमतं न न्यायमतमिति सिद्धम् । परिणामः किं कनकस्य कुंडलवत् उत दुग्धस्य

दधिवत् ? आद्ये कुंडलनाशे कनकस्य नाशाभावाद्दुःखाद्यनुभवस्य चिदेकनिष्ठत्वान्नात्मन इति सिद्धं । तदभावे तदभावः । ननु पटनाशे तंतुनाश इति ब्रूम इति चेत्, किं दाहादिरूपो नाशः उत कुंडलादिविकृतिनाशवन्नाशः ? आद्ये तु कालेन कनकादिनाशोऽपि दृश्यते, तद्वत्पटस्य दाहादिरूपो नाशो न स नाशोऽत्र दृष्टांते युक्तः, किंतु पटात्पृथक्कृतेषु निष्काशितेषु तंतुषु पटाभावस्तंतुसद्भावश्च दृश्यते । न च पटकुंडलादिरूपेण तंतुकनकादीनां परिणामस्तेषामन्यथात्वानुपपत्तेः, किंतु तंडुलोदनवत् दुग्धदधिवत् परिणामस्तंडुलादेरन्यथात्वसिद्धेः पुनस्तंडुलत्वाघटनात् स एव परिणामः । तथा सति पूर्वं दुग्धवदात्मा जडः स एव चिद्रूपेण परिणत इति सिद्धं दधिवत् । तच्च कुतः प्रमाणाद्वा न्यायप्राप्तत्वाद्वा ? आद्ये तु '**विज्ञातारमरे केन विजानीयात्**'[1] '**अयमात्माऽनंतरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे**'[2]त्यादिप्रमाणसिद्धत्वान्न कदाचिदात्मा जड इति श्रूयते । द्वितीये तु पूर्वं जड इदानीं चिद्रूप इति कथं ज्ञात्वा साध्यते ? जडत्वे ज्ञानाभावात् ज्ञानरूपत्वे जडत्वस्य दध्नि दुग्धत्वस्येवादर्शनात् पुनर्जडत्वासिद्धेर्दध्नो दुग्धत्वस्येव येन केन वात्मनः पूर्वं जडत्वं साध्यते सोऽप्यात्मैव । तस्य पूर्वरूपस्यास्फुरणान्मतप्रवर्तकस्यादीर्घदर्शित्वमिति सिद्धम् । स्वजडत्वोपपादकस्यानुपलब्धत्वेऽपि तत्प्रतिपादकत्वात् । यदि सुप्तोत्थितो न किंचिदवेदिषं ततस्तदानीं जडत्वेन स्थितोऽहमधुना चिद्रूपेण परिणतोऽस्मीति चेत् सुखमहमस्वाप्समित्यनुभवसिद्धत्वान्न हि जडस्य तत्र सुखं भवितुमर्हति । न च चिद्रूपेण परिणतस्य मुहुः सुप्तौ जडत्वं वक्तुं शक्यते । दध्नो दुग्धत्वास्यासंभावितत्वात् । तस्मादारोपितैर्न्यायैरेवं वदंतीति सिद्धम् । अथ केचिदहंप्रत्ययरूपमात्मत्वमुपपादयंति तन्निराकुर्वंति—विपणमृतमिति । विपणं विपरीतव्यवहाररूपमहं स्थूलः कृशः अहं मरिष्यामीति । यदि त्वं स्थूलः कृशः तर्हि त्वं मरिष्यसि । स्थूलत्वादिधर्मको देहस्तु मृतानां दृश्यते तदा विपणस्तं ऋतं सत्यं कालत्रयाबाधितमात्मानं स्मरंति, एतत्प्रत्ययैकरूप आत्मेति प्रतिपादयंतीत्यर्थः । ये चैवं तेऽप्यारोपितैरेव यस्मात् ऋतं कालत्रयाबाधितं तदहंप्रत्ययैकरूपमात्मत्वं यदि चेत्सुषुप्तावहंप्रत्ययस्य स्फुरणाभावात्तस्य ऋतत्वभंगान्नाहंप्रत्यय आत्मा किंत्विंद्रियाणां वृत्तिवदंतःकरणचतुष्टये साप्येकाऽहमितिरूपा वृत्तिः । यदि तदेकस्वरूपश्च सुप्तौ तदभावश्च तर्हि कुंडलैकरूपस्य कनकस्य कुंडलत्वदर्शनाभावकाले कनकत्वाभाव इति सिद्धं । तदभावे तदभावः । कनकसद्भाववत्सुखमहमस्वाप्समितींद्रियवृत्तिमिवाहंकारं पुरस्कृत्य स्वस्वरूपाविद्ययाहंप्रत्ययमात्रात्मवत्सुखमहमस्वाप्समित्याह । सुषुप्तावहमितिरूप आत्मास्तीति चेज्जागरस्वप्नवैलक्षण्याभावात्सुषुप्तिरेव

---

१ बृ. २।४।१४। २ बृ. ४।५।१३।

न घटते । किं च न किंचिदवेदिषमिति सर्वानुभवविरोधः । अहमित्यात्मानं यदि वेद न किमप्यवेदिषमिति जनानुभवो न स्यात्, तस्मात्तद्विरुद्धम् । अत्र महाजनोऽपि बभ्राम । केचिच्चिदहंकार इत्याहुः । केचिन्नामरूपातीतोऽहंप्रत्यय आत्मेति । तन्न घटते । सुषुप्तौ तदभावात् । प्रबोधेऽपि यथा त्वमिति परविषयः प्रत्ययस्तथाहमित्यात्मविषयः उभयप्रत्ययसाक्षित्वात्तदुभयविलक्षणः । यथा न त्वंकारसहितस्फूर्तिरात्मा न च तथाहंकारसहितोऽपि । तस्मात्केवलो व्यतिरेकगम्यो गुरुमुखैकवेद्यो नाहंस्फुरणरूप आत्मा, किंत्वहंप्रत्ययप्रकाशकस्तत्र समन्वयात्, प्रत्यगात्मा तु न शब्दगम्यप्रतीतिविषयः, किंतु '**यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह**' स एवात्मा । अत्राहुः केचित्—त्वंकारादिषु सर्वप्रत्ययेष्वहंप्रत्ययरूपस्त्वस्त्येव । कुत इति प्रश्ने त्वात्मनः सद्भावादित्याहुः । तथा सति सुषुप्तावपि स एवाहंप्रत्ययरूपोऽस्त्येवेत्याहुः । तच्छ्रोतारोऽप्यात्मसद्भावाद्गुरूक्तवाक्यश्रद्धया ॐइत्यंगीकुर्वंति, तदग्रे बुद्धिप्रवेशाभावात्, किं त्वनुभवैकवेद्यत्वान्नैवं घटते । अहमित्यात्मविषयप्रतीतिसमये त्वमितिरूपपरविषयप्रत्ययाभावात् । त्वमिति परविषयप्रत्ययसाक्षिणि चिदात्मन्यहंप्रत्ययस्यानुभवगोचरत्वाभावात् । सुषुप्तावप्रतीयमानत्वाच्च । महाजनेष्वपि य एवमात्मत्वं स्मरंत्युपदिशंति तेऽप्यारोपितैर्न्यायैरेव नत्वयमात्मा न च ते तत्त्वविदोऽपीत्यभिप्रायः । समन्वयेनाहंप्रत्ययगम्योऽपि देहात्मप्रत्ययरूपोऽप्यात्मैव, घटोऽपि मृदेवेति न्यायात्, किंतु व्यतिरेकमुखेन जडनिषेधे क्रियमाणे त्वहंप्रत्ययः शाखैव न चंद्रः, यत एवं तत एवं योगं निराकुर्वंति केचित् । केचिदुपेक्षमाणास्तन्नामैव नोच्चारयंति । अहंप्रत्ययान्वितस्यात्मन आत्मनिर्विशेषत्वानुभवाद्यभावात् अहो निर्विशेषं ब्रह्माप्यहमिति जपन्नेवास्ते । नन्वहमित्यनुच्चरन्नेवाहंरूपस्फुरणैकस्वरूपमास्ते इति चेद्भवतामनाद्यविद्ययाहंप्रत्ययस्य प्रतीतित्यागासंभवादेवं स्फुरति यद्यहमित्यनुच्चरन्नास्ते तर्हि तस्याहंरूपस्फुरणत्वमेव कुत उपपाद्यते । तथाच श्रुतयः '**अस्तीत्येवोपलब्धव्यः**' इति '**यतो वाचो निवर्तन्ते**' इति, '**विज्ञातारमरे केन विजानीयात्**' इति, तस्माद्बुद्धिस्थौल्यादेवं स्मरंति । केचिदहंप्रत्ययगम्यश्चिदाभासः स्वयं प्रत्ययस्फुरणरूपः कूटस्थ इति किमहो तत्राहं स्वयंरूपत्वप्रयोजनं ? नाहमिति स्वयं न स्वयमप्यहम् । ननु स्वयंशब्दस्य त्वं स्वयमहं स्वयं स स्वयमिति सर्वत्र दर्शनादित्यपि केचित् । शब्दचातुर्यमात्रमेतन्नानुभवः । '**यतो वाचो निवर्तन्ते**' इति श्रुतेः । नत्वनुभवे स्वयं स्वयमिति चिदेकरसे जपो दृश्यते । क्व तत्राहं क्व च तत्र स्वयं ? स्वयमहमोः शब्दान्वयाप्रतीतिरूपत्वान्न निःशब्दात्मायं तत आत्मानं तु महाजनत्वेन प्रसिद्धा अपि विदुरलमतिविस्तरेण ।

१ तै. २।४।१। २ तै. २।४।१।

प्रकृतमनुसरति भगवान्। एवमुक्तेषु मतेषु यदात्मत्वमेव बाधितमिति सिद्धं, तदा तु तत्तन्मतकारा भ्रांता इति सिद्धमेव किं तन्मतदूषणेन मृतमारणवदिति भावः। एवंसत्यपि केचिद्वैदिकंमन्या जीवेश्वरयोरभेदो न घटते विरुद्धधर्मत्वादित्याहुस्तत्खंडनमिषेण 'स[१] यश्चायं पुरुषे यश्चासावादित्ये स एकः स आत्मा तत्त्वमसि' इत्याद्याः श्रुतय उपाधिविरुद्धत्वमंगीकृत्य चिदैक्येनैक्यमुपपादयंत्य आहुः—त्रिगुणेत्यर्धेन—

त्रिगुणमयः पुमानिति भिदा यदबोधकृता
त्वयि न ततः परत्र स भवेदवबोधरसे॥२५॥(१२)॥

अवबोधरसे चिदेकमात्रे निरुपाधिके ब्रह्मणीत्यर्थः। त्रिगुणमयः पुमान् त्रिगुणमयः सत्त्वादिप्रचुरः स पुमान् जीव इति कृत्वा त्रिगुणमयत्वादित्यर्थः। त्रिगुणमयत्वहेत्वोः भेदाभेदस्त्रिविधाहंकारकार्यस्य देहस्याभिमानतया दृश्येषु जडेषु भेदं मनुते इत्यर्थः। किमु तादृशादीश्वरादखिलं चिदात्मकं भिन्नं वेत्तीति वक्तव्यमिति भावः। एवं 'स[२] यश्चायं पुरुषे' इत्यनेन तत्त्वंपदेन जीवोपाधिस्वरूपमविद्याकृतमित्युपपाद्य 'य[३]श्चासावादित्ये' इत्यनेन तत्पदेन चेश्वरोपाधिर्विद्यैकमात्र इत्युपपाद्यते—यदबोधकृता त्वयि न ततः परत्र स भवेदिति। ततः परत्र त्वयि यदबोधकृता भिदा सा नेत्यनुषंगः। ततः पुंसः अविद्योपाधिशबलितात्तत्त्व प्रतिबिंबस्वरूपात्सकाशात्परत्र घटसाक्षिण इव घटात्परत्र सर्वसाक्ष्युपाधिरूपे भेददृष्टिशून्ये त्वयीति भावः। यदबोधकृता भिदा यत् या अबोधकृता अविद्यारचिता अवबोधरसस्यात्मनो निरुपाधेरुपाधिव्यतिरेकरूपज्ञानाभावाद्देहात्मत्वरूपेत्यर्थः। सा भिदा त्वयि नास्तीत्यर्थः। यदबोधकृतेति यच्छब्दात्सा भिदेति तच्छब्दग्रहणम्। एतावता ततः परत्र त्वयीत्यनेनाविद्याविद्योपाधिकृतो विरुद्धधर्मो भेदश्च निरूपितः। त्वयि सा भिदा नास्तीत्यनेन तदृष्टिगोचरो भेदस्त्वयि नास्तीत्यैक्यं च सूचितम्। बिंबप्रतिबिंबयोस्तु प्रतिसुषुप्ति चिदैक्यान्न स्वरूपभेद इति तात्पर्यम्। स एक इति पदाभ्यां 'स[४] यश्चायम्' इति श्रुत्या असीतिपदेन 'त[५]त्त्वमसि' इति श्रुत्या चाभेदः प्रतिपादितः। यतस्त्ववबोधरस एवैतौ द्वावप्युपाधी जीवस्य सुषुप्तिकाले ईश्वरस्य योगनिद्रावसरे द्वयोरविशेषदर्शनात्। एतावता न विरुद्धधर्मत्वहेतुभेदवादिनामत्रावसरः सुषुप्तौ विरुद्धधर्मिणोर्विरुद्धधर्ममूलभूतस्याहंप्रत्ययस्यादर्शनात्। अहं सुखी दुःखीति रूपोपाधेः सुषुप्तावभावदर्शनात्। स्वरूपेतरधर्मत्वादल्पप्रज्ञत्वसर्वज्ञत्वानित्यबद्धत्वानित्यमुक्तत्वाद्युभयविरुद्धत्वस्य सुषुप्तिप्रलययोरदर्शनात्। तत्र जीवोपाधेरिहैवानुभवगम्यत्वात्।

१ तै. २।८।१ २ तै. २।८।१ ३ तै. २।८।१ ४ तै. २।८।१ ५ तै. २।८।१

ईश्वरोपाधेर्योगनिद्रायां 'नासदासीन्नो सदासीत्'[1] इत्यादिश्रुतिसिद्धत्वस्य पूर्वपद्ये 'तस्माद्धान्यन्न परः किंचनास'[2] इत्यादिश्रुतिभिः-किमपि न तत्र शास्त्रमवकृष्य शयीत यदेत्युपपादितत्वाद्व्याख्यायाम्नायानुभवविरुद्धत्वात् विरुद्धधर्मत्वहेतुभेदसाधकं मतममतमिति सिद्धम्। ननु संति प्रमाणानि कानि 'सत्य आत्मा सत्यो जीवः सत्यं भिदा' इत्यादि श्रुतेरिति चेन्मैवम्। '[3]नेति नेतीति होवाच याज्ञवल्क्यः' इत्युपसंहारविरोधात्। ननु सत्य आत्मेत्यत्रापि नेतीति निषेधासंभवान्नेदमुपसंहारवाक्यमिति चेदात्मशब्देनेश्वरस्य तदुपाधेश्च मिथ्यात्वादीश्वरत्वस्य च मायिकत्वात्तत्रापि सत्यत्वनिषेधसंभवादिदमेवोपसंहारवाक्यम्। नन्वस्माभिः कुत्राप्युपसंहारवाक्यमिदं न श्रूयत इति चेदस्माभिरुपक्रमवाक्यं च कुत्रापि न श्रूयते तावता कल्पितेयं श्रुतिरिति सिद्धम्। ननूपसंहारवाक्यमंगीकृत्य भेदपरत्वेन व्याकुर्म इतिचेत् 'अहरहः संध्यामुपासीत' इति श्रुतिं दिनेदिने संध्यां। संध्यानाम स्त्रीपुरुषसंधिः संध्येति प्रत्यहसुरतविषयोऽयं विधिरिति वात्स्यायनमतप्रौढा एवं वदिष्यंति। श्रुतीनामप्रतीयमानार्थव्याख्याप्रामाण्यात्। ननु 'ऋतौ भार्यामुपेयात्' इत्यादिनियमश्रवणान्नैवमिति चेज्जात्येकवचनात्सर्वेष्वप्यृतुषु भार्यां भरणयोग्यां भृञ् धारणपोषणयोः सुरूपायाः स्वप्रीतिविषयाया वा पोषणस्य योग्यत्वात्तां भार्यामुपेयादिति व्याकरिष्यंति। यथा तत्त्वमसीति श्रुत्याऽभेदः साध्यते तथा विधिवाक्यानां चास्त्वेवमर्थः, तस्मात्परिहासास्पदं श्रुतीनामन्यथाव्याख्यानं तत्रेयमप्रसिद्धा श्रुतिः। ननु '[4]द्वा सुपर्णा' इति श्रुतेरिति चेत्किं यथाश्रुतप्रतीयमानार्थव्याख्ययाऽनया श्रुत्या भेदः साध्यते उत तत्त्वमस्यादिवदभेदः ?। आद्ये भेदाभासतयात्र भवद्भिर्यथाश्रुतोऽर्थोऽगीक्रियते तत्त्वमस्यादिष्वन्यथा व्याक्रियत इति सिद्धम्। तथापि किं द्वाविति द्विवचनमात्रत्वादुताहो तयोर्भेद इति विहितत्वात्? आद्ये रामकृष्णावितिवद्रामकृष्णयोरैक्यश्रवणादिति चेत् '[5]तत्त्वमसि' इति '[6]स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इत्येतयोश्च बहुधैक्यश्रवणात्। '[7]ममैवांशो जीवलोके जीवभूतः' इत्यादिस्मरणाच्च यथाश्रुतव्याख्याप्रामाण्याच्च 'अहरहः संध्यामुपासीते'तिवत्। द्वितीये त्वत्र वान्यत्र वेदवाक्येषु भेदस्याश्रवणादसिद्धम्। ननु '[8]तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्य' इति विरुद्धधर्मत्वादितिचेत् सीतैकरमणत्व-गोपीजारत्ववद्विरुद्धलक्षणत्वेऽप्यैक्यं तथैव जीवेशयोश्च तयोर्भेदस्याविहितत्वात्। नन्वन्यशब्दाभ्यामितिचेत्? अत्रान्यशब्देन यदि भेदो व्याक्रियत इतिचेत्तयोरिति द्विवचनात्तयोरन्य एक

१ ऋ. सं. ८।७।१७। २ ऋ. सं. ८।७।१७। ३ बृ. २।३।६। ४ मुं. ३।१।१। ५ छा. ६।८।७। ६ तै. २।८।१। ७ भ. गी. १५।७। ८ मु. ३।१।१।

इत्यर्थे सिद्धे किलान्यशब्दाद्भेदो विवक्षितः स्यात्, अन्यथा तयोरन्यस्तयोर्भिन्नस्तृतीयः पुनस्तयोरन्यश्चतुर्थस्तस्मात्तद्घटनात्तयोरन्य एकः पिप्पलादः स चान्यशब्दविशिष्टत्वात्ततोऽन्य इति व्याख्यारंभे तु नात्र तयोर्भेदो विधीयते, किंतु भेदोपासना निषिध्यते। 'अथ योऽन्यां[1] देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' इति श्रुतेः भेदे प्रमाणांतराभावाद् द्विवचनमात्रत्वादन्यभेदबलाद्भेदप्रमाणाभासं भेदप्रमाणमित्याहुस्तदसिद्धम्। एवमेव 'द्वाविमौ पुरुषौ लोके' इति गीतावाक्येषु पुराणाद्यनेकवचनादुपासनार्थतया धर्मत्वहेतुत्वादभेदं व्याकुर्वंति तत्र तत्रैवमेव द्रष्टव्यम्। द्वयोर्भेदस्यानुक्तत्वादुपक्रमोपसंहारविरोधात्प्रमाणांतरबाधितत्वात्। यथाच 'ममैवांशो[3] जीवलोके जीवभूतः' इत्युपक्रम्य तत्र कुतकैरंतर्यामित्वं साधयंति तच्च न घटते, विषयानुपसेवत इत्युक्तत्वात्। 'अनश्नन्नन्यो[4] अभिचाकशीति' इत्यंतर्यामिणो विषयाशनत्वाघटनात्। तथाचोत्तरत्र 'कर्षयंतः[5] शरीरस्थं भूतग्राममचेतसः। मां चैवांतःशरीरस्थं तान्विद्ध्यासुरनिश्चयान्' इति वक्ष्यमाणत्वान्मां चैवांतःशरीरस्थं कर्षयंति व्यथयंति। तत्रांतर्यामिणः कर्षणत्वाघटनान्मां च कर्षयंतीत्यनेन भेदस्याघटनादगत्याप्यैक्यस्यांगीक्रियमाणत्वात्कथं द्वाविमाविति द्विवचनमात्रेण भेदः स्यात्? भोगस्य प्रतिबिंबनिष्ठप्रतीतार्थत्यागादप्रतीयमानार्थग्रहणादप्रसिद्धानधिगतार्थत्यागात् प्रसिद्धाधिगतार्थग्रहणादहरहः संध्यामुपासीतेति विधिवाक्येषु वा यथाश्रुतार्थे कथं श्रद्धा स्यादहो वैदिकमर्यादातिक्रांतं मतमिदम्। अप्रसिद्धार्थः प्रसिद्धविधेरेवास्त्वहरहः संध्यामुपासीतेत्यादिवाक्यैरित्यादिबहुदोषदुष्टत्वादलमतिविस्तरैः ॥ २५ ॥ (१२) ॥

जन्म स्यादसतः सतः कथमहो मृत्युः सतश्चिद्गुणः
किं वा चित्परिणामवानहमिति स्फूर्तिश्चिदात्मा कथम्।
भेदोपाधिकृतः स्वरूपत इति स्याद्वा क्व जीवेशयो-
स्तस्माद्द्वयमेकमेव सततं सत्यं परं धीमहि ॥ १ ॥

इति श्रीश्रुतिकल्पलतायां श्रुतिस्तुतौ द्वादशपद्यव्याख्यानं नामाष्टादशोऽध्यायः ॥

॥ इति अष्टादशोऽध्यायः ॥

---

१ बृ. १।४।१०। २ भ. गी. १५।१६। ३ भ. गी. १५।७। ४ मुं. ३।१।१। ५ भ. गी. १७।६।

# एकोनविंशोऽध्यायः।

एवं सकलमतसिद्धांतपूर्वपक्षत्वेनाद्वैतमेव तत्त्वमिति सिद्धांतो वैदिकमतात्मत्वस्याबाधितत्वादिति सिद्धम्। नन्वात्मैक्येऽपि जडभेदस्य दृष्टत्वात्सिद्धांतस्यानैकांत्यात्तदसिद्धमित्याशंक्य, बृहदुपलब्धमेतदितिस्तुतिद्वितीयपद्येन जडस्यापि ब्रह्मणि न द्वितीयत्वमस्तीत्युपपादितमपि परमतखंडनेन वितंडत्वपरिहाराय पूर्वत्र मिथ्यात्वमर्थात्सिद्धमप्यत्रोपपत्तिभिर्जगन्मिथ्यात्वं साधयंत्यो 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः', 'विकल्पो विनिवर्तेत कल्पितो यदि केनचित्' इति; 'असतोऽधि मनोऽसृजत' इत्याद्याः श्रुतय आहुः—

सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्
सदभिमृशंत्यशेषमिदमात्मतयाऽऽत्मविदः।
नहि विकृतिं त्यजंति कनकस्य तदात्मतया
स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितम् ॥ २६ ॥ (१३) ॥

असत्सदिव विभातीत्यन्वयः। असदविद्यमानं सदिव विद्यमानमिव विभाति। कमिव? त्रिवृन्मन इवेति इवशब्दस्य पुनरन्वयः। त्रिभिर्गुणैर्वृतं त्रिवृत्। मनःकल्पितनगरमिवेत्यर्थः। मनःकल्पिताकाशादीनां शब्दादितन्मात्रासहितानां मनोमयानामपि तामसत्वात्तद्ग्राहकेंद्रियवृत्तीनां राजसत्वात्। नहि मनोमयशब्दादीनां मनोमयश्रोत्रादिवृत्तिं विना ग्रहणं संभवति, तथैवात्मचैतन्ये तद्विषयेंद्रिययोगज्ञानधर्मस्य चिच्छक्तियोगात् चिच्छक्तेः सत्त्वैकमात्रत्वात् त्रिवृन्मनःकल्पितं पांचभौतिकं नगरं यथा मिथ्या तथैवैतत् त्रिगुणमयं विषयेंद्रियचिच्छक्तिगम्यमात्मनि कल्पितं मिथ्येति भावः। नन्वश्रद्धेयमेतत् यदविद्यमानं तत्कथं विभातीत्याशंक्य दृष्टांतं सूचयंत्य आहुः—त्वयीति। त्वय्यधिष्ठाने तवाधिष्ठानसत्तया शुक्तावविद्यमानरजतवदित्यर्थः। प्रपंचस्य नानारूपस्य शुक्तिरजतन्यायेन साध्येऽपि मिथ्यात्वे शुक्तिरजतयोः शौक्ल्यसादृश्यात् ब्रह्मप्रपंचयोर्वैलक्षण्यमतो मनःकल्पितनगरवदित्युक्तं, चिन्मनसोरधिष्ठानवैलक्षण्येऽपि चित्सत्यत्वस्य मनःकल्पितमिथ्यात्वस्य सर्वानुभवगम्यत्वात्। दग्धस्य पितुः कलेवरस्य मनसि यथावद्दृश्यमानत्वेऽपि तन्नास्तीति मिथ्यात्वानुभवान्मिथ्यात्वेऽपि विद्यमानत्वस्यानुभूयमानत्वात्, तथा सत्यपि न तदश्रद्धेयमिति त्वयीत्यनेनाधिष्ठानसत्तया शुक्तिरजत-गुणफणिन्यायेन मनःकल्पित-

१ गर्भ. १।१७। २ गौड. १।१८। ३ बृ. २।२।९-१०।

मधिष्ठानसत्तयैवाभातीति साधितम्। अयमर्थः—शुक्तिरधिष्ठानं रजतं विवर्तः। तथात्माधिष्ठानं त्रिवृन्मनो विवर्तः। यथाह्यतिदीर्घे गुणेऽपि फणिस्तु यत्र दृष्टिः प्रसरति तत्रैवोत्पद्यते, एवमपरिच्छिन्ने स्वात्मनि यावद्विस्तारं नगरं चिच्छक्तिः रजस्तमोभ्यां कल्पयति तावदेव विभाति न तदग्रे, ज्ञातृज्ञानयोरनन्यत्वात्, यत्र यद्यज्जानाति तदात्मनैव तस्मात्तत्रात्मास्त्येव। 'अरेऽयमात्माऽनंतरोऽवाह्यः कृत्स्नः प्रज्ञानघन एव'[1] इति श्रुतेः। अविद्यया त्वेकस्मिन्नेव देहेऽस्तीत्यवभाति। तत्रापि चिच्छक्त्या स्मृतमंगमेव प्रतीतिविषयं भवति नान्यदिति सर्वानुभूतं तत्रात्मा कार्ये सर्वगतोऽर्थोदयःप्रकाशकोऽप्यग्निः काष्ठाद्युपाधिं विना यथा न प्रतीतिविषयस्तथा नात्मा, चिच्छक्तिं विनातीतसर्वांगोऽप्यात्मा चिच्छक्त्या न यावत्स्मर्यते न तावदस्तीति स्फुरति, ततश्चिच्छक्तिर्यदंगं स्मरति तत्र संतमात्मानमाश्लिष्य तदंगं स्मृतिगोचरं करोति, तथास्माच्चिच्छक्तियोगादिंद्रियवृत्तिकल्पनाद्वारा कल्पितगजस्यापि स्मृतमंगमेव मनसि दृश्यते नान्यत्, तस्माद्गुणं विना न फणिः प्रकाशते, तथा नात्मचैतन्यं विना मनःकल्पितं किमपि यथा तथैव बाह्येंद्रियगम्यं जगदपि, किंतु स्वमनःकल्पितस्य ध्यानविसर्जनं प्रलय एव तत्तस्य न बाह्यस्येश्वरमनःकल्पितत्वादस्मृतमप्यात्मनोंगमस्त्येव दृष्टमेव पुनर्दृश्यते च। यद्यपि सुषुप्त्यादौ किमपि न प्रतीतिविषयं भवति तथापि तत्कल्पकस्येश्वरस्य योगनिद्रावसरपर्यंतं तत्सर्वमस्त्येव। विचार्यमाणे तु मनःकल्पितवन्मिथ्यैवेत्यतिनिगूढाभिप्रायः सतामनुभवैकवेद्यः। तथाच श्रुत्यर्थोऽपि 'असतोऽधि मनोऽसृजत मनः प्रजापतिमसृजत प्रजापतिः प्रजा असृजत तद्वारेदं मनस्येव परमं प्रतिष्ठितं यदिदं किंच'[2] इति। असतः सद्विलक्षणात्प्रकृतेरित्यर्थः। अधि अधीश्वरः प्रथमं द्रष्टृत्वधर्मेणाविर्भूतः स इत्यर्थः। स मनः असृजत सुप्तोत्थितस्य यथा कश्चन प्रथमः संकल्प एवम्। अत ईश्वरोपाधेः सकाशादीश्वरः मनः असृजत सगुणेन सृष्टिसंकल्पः कृत इत्यर्थः। मनः प्रजापतिमसृजत। स संकल्पो ब्रह्माणं निर्मितवान् अमोघसंकल्पत्वात्प्रजापतेर्महदात्मत्वान्महत्तत्त्वमेव भगवतो मनस्तदात्मानं प्रजापतिरूपेणासृजदित्यर्थः। स च प्रजापतिः प्रजाः मरीचिमन्वादीनसृजदित्यर्थः। तत्तस्मात्कारणात्। वा इति निर्धारणे। इदं दृश्यं मनस्येव परमं केवलं प्रतिष्ठितम्। मनःकल्पितनगरवत्सर्वं जगदित्यर्थः। यदिदं किंच तत्सर्वमपि मनस्येव प्रतिष्ठितमित्यनुषंगः। स्वायंभुवशतरूपाख्यमिथुनस्य मनोमयत्वात्तेन मिथुनेन भक्षितस्यान्नस्य च मनोनिर्मितत्वात्तेन रसेनोत्पन्नस्य संतानस्य तत्कारणस्य कश्यपादेश्च मानसत्वमेव, तत्पितुर्मरीचेश्च मानसत्वान्मातुश्च मनोः कन्याया देवहूतेः प्रसूतता। अयमर्थः—तन्मातामह्या देवहूत्यादिस्त्री-

१ बृ. ४।५।१८। २ बृ.२।२।९-१०।

वृंदस्य मानसमनुसमुत्पन्नत्वात् गर्भवासादिनिमित्तोत्पन्नस्य चराचरस्य मानसत्वमेवेत्यर्थः। 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिसृष्टिक्रमेण ब्रह्मांडोत्पत्तेश्च मनोमयत्वमिति सिद्धम्। सनकादीनां पांचभौतिकदेहत्वेऽपि मानसत्वात्। तथाच श्रुतिः–'मानसं वै प्राजापत्यं पवित्रं मानसेन मनसा साधु पश्यति मानसा ऋषयः सुराः' इत्यादि 'तस्मान्मानसं परमं वदंति' इत्यादि श्रुतेश्च प्राजापत्यं ब्रह्मांडं तत्पवित्रं देहे अस्थिशोणितादीनां पृथ्वीसलिलादिविकाराणामपवित्राणां जीवकर्मसमुद्भूतानां मानसमृज्जलादिना पावित्र्यसंपादकत्वात् 'मृत्तिके हर मे पापम्' इत्यादिश्रूयमाणत्वात्, प्राजापत्यं पवित्रं परमेश्वरमनोमयत्वात्। नन्वीश्वरकृतस्य विद्योद्भूतत्वान्मनःकृतमसत्यमित्येव कुतः प्रतीतिविषयं न भवतीति चेदाविर्भूता माया, परमेश्वरोपाधिर्विद्या 'उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश' इतिश्रुतेस्तयैव विद्यया पुनर्यथावदसत्यं मनःकल्पितमिति सद्भिर्गम्यत एव। तावत्पर्यंतं प्रथमजामनंतरमाविर्भूतया जीवोपाधिरूपया अविद्यया प्रतिबिंबत्वेन स ईश्वर एव सत्यत्वेन पश्यतीति विधीयते। मानसेन मनसा साधु पश्यतीति मानस इति चैत्य इति जीवपर्यायनामानि। मनोमयोपाधिनिर्मितत्वान्मानसस्तेन रूपेण तदुपाधिरूपमनसा साधु सम्यक् असत्यमपि सत्यवदेव पश्यतीति मानसेन मनसा साधु पश्यति। वस्तुतः प्रस्तुते—सदिव मनस्त्रिवृत्त्वयि विभात्यसदित्येव तत्त्वमिति तात्पर्यमित्याद्यर्थः स्पष्टः। मानसा ऋषयः सुराः प्रसिद्धा एवैवं श्रुत्यर्थः श्रुत्यंतरप्रसिद्धः।

अथ प्रकृतमनुसरति श्रुतिकल्पलताकृद्भगवान्। अत एव श्रुतयोऽप्याहुः—आमनुजादिति। मनुः स्वायंभुवः तस्मात् शतरूपायां जातः प्रजाकदंबो मनुजस्तमभिव्याप्य त्रिवृन्मन एवेदं जगदसत्त्वयि सदिव विभातीत्यनुषंगः। मनुसंततेरन्नरसमयोत्पत्तिरपि त्रिवृन्मनोमात्रैव। ततः परं तु मनुमरीच्यादीनां ब्रह्मणो मानसत्वम्। तस्य च भगवतः पद्मनाभस्य मनउद्भूतत्वं प्रसिद्धमेव। संशयस्तु मनुजादेव, तस्य च मनोमयत्वमेवेति भावः। शुक्रशोणितद्वारा प्रजोत्पत्तिरतो न मानसं जगदिति पूर्वपक्षोऽत्र निरस्तो मनुजादिति। तस्माज्जगन्मिथ्येति सिद्धम्। 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' इत्यादिश्रुतिसिद्धत्वात्, न्यायाम्नायानुभवसिद्धत्वाच्च। नन्वसद्वा भवतु, तथापि सदिव विभाति यच्च विभाति तस्य चानादित्वादेकं सदपरमसच्चेत्येतद्रूपं वास्तु, द्वैतं तु सिद्धमितिचेत्, यावत् शुक्तिविषयाज्ञानं तावदेव शुक्तिरेका रजतमेकं, ततः परं यदि तत्र रजतं विद्येत तर्हि द्वैतं

---

१ तै. २।१। २ महाना. २३।१। ३ महाना. २३।६। ४ महाना. ४।६। ५ गर्भ. १।१७।

सिध्येत्, तावच्च परमार्थतो नास्त्येव रजतम् । '**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः**'[1] इति श्रुतेश्च । तस्मादसन्नास्त्येव सदेवास्ति, किंतु ज्ञानोत्तरकालीनमिदं वास्तवं ज्ञानमित्याहुः—सदभिमृशंत्यशेषमिदमात्मतयात्मविद इति । आत्मविदो निवृत्ताविद्या अभ्रांता इत्यर्थः । इदमशेषं खलु मनःकल्पितवद्यदीश्वरमनःकल्पितं तच्च सदभिमृशंति । अभि सर्वत्र सदेवेति मृशंति जानंति । चैतन्यं विना वस्त्वंतरानुपलभ्यत्वात् । कनककुंडले सर्वत्र कनकैकमिव मनसि कल्पितपदार्थे सर्वत्रात्मचैतन्यमिव चिदेकगम्यं जगच्चिदेव । कनकैकगम्यत्वात् कुंडलादिकं कनकमात्रमिवेति जानंतीत्यर्थः । ननु तथापि द्वैतमेव सिद्धम् । तदेकं सदेवासदिति ज्ञाता यः स चैक इत्याशंक्याहुः—आत्मतयेति । आत्मैव सत् सदेव चित् चिदेव सत् शुक्तिरेव रजतमिति न्यायेनात्मतया सदभिमृशंत्यशेषमिदं न ज्ञातृज्ञानयोर्भेद इति वक्तुं शक्यते । नह्यात्मनोऽन्यच्चैतन्यं दृश्यते इत्यनुभवात् । '**येन रूपं रसं गंधं शब्दान्स्पर्शांश्च मैथुनान् । एतेनैव विजानाति किमत्र परिशिष्यते**'[2] इति श्रुतेश्च । '**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च । अधिष्ठाय मनश्चायं विषयानुपसेवते**'[3] इति स्मृतेश्च विषयेंद्रिययोगज्ञानं येन ज्ञानेन भवति तज्ज्ञानस्यैवात्मस्वरूपत्वात् । नह्यात्मानमृते किमपि चैतन्यांतरं दृश्यते । तस्मान्न केनाप्यंशेन द्वैतमिति सिद्धम् । नन्वेवं ज्ञातेऽपि सति पुनरसदाभासयुक्तमेव सत्कुतः पश्यंतीति चेत्तत्राहुः—नहि विकृतिं त्यजंति कनकस्येति । कनकार्थिनो दात्रा दत्तानि कुंडलादीनि न त्यजंति, अपि तु गृह्णंत्येव, तथा ब्रह्मजिज्ञासुभिर्ज्ञाते ब्रह्मणि नहि चराचरजगद्दर्शनं निवार्यते । कुत इति चेत्तत्राहुः—तदात्मतयेति । कनकविकृतेः कनकात्मकत्ववद्ब्रह्मणि या चराचराकृतिरूपा विकृतिः सापि ब्रह्मात्मिकैव, वस्त्वंतराभावात् । तेषां मोहजनकत्वराहित्यादस्तु नाम दृष्टिगोचरं जगदिति तत्र न जुगुप्संत इति भावः । अयमभिप्रायः—वस्तुतो जगन्न दृश्यत एव । यच्च शब्दादिपंचविषयरूपं प्रपंचाख्यं पंचभिरिंद्रियैर्गृह्यते तद्गृह्यं तद्ग्राहकेंद्रियविषयबुद्धिसहितं जगदेव जगति जगद्दृश्यते नात्मनि । बुद्धेस्तदाकारत्वे विशेषादर्शनात् । '**यदा पंचावतिष्ठंते**'[4] इत्यादिश्रुतेः । यया बुद्ध्या ब्रह्मापरोक्षं भवति तया प्रारब्धभोगावसरे जगत्तु दृश्यतेऽपि न तत्र जगदिति तेषां बुद्धिरलंकारप्रियाणां कर्णादिषु धार्यमाणत्वात् कुंडलादिबुद्धिवत्, किंतु कनकत्वेन तदीक्षमाणानां केवलकनकार्थिनां यथा कनकमेव, तथात्र ज्ञानिनां भोगेच्छाराहित्याच्चराचरं ब्रह्मैव, ततस्ते तदीक्षणं न वर्जयंतीत्यलं विस्तरैः । नन्वेकमेव सत्तदेवासत् कनकतद्विकृतिभेदराहित्यादेवाद्वैतमिति चेदंगीकुर्युः, कनकमृते कुंडलादेरदर्शनमिव चैतन्यं विना

---

१ गर्भ. १।१७। २ काठ. ४।३। ३ भ. गी. १५।९। ४ का. १।६।१०।

जडस्यादर्शनात्, किंतु जीवबहुत्वाच्चैतन्यानां परस्परं दुःखाद्यनुभवराहित्यात्परस्पर-भेददर्शनात् एकेन चैतन्येनान्यचैतन्यप्रकाश्यस्य तत्कृतकर्मफलरूपस्य जडस्य निरीक्ष्यमाणत्वान्नायमद्वैतसाधको न्याय इत्याशंक्य परिहरंत्यो भगवंतं स्तुवंत्य आहुः—स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितमिति । त्वया भगवता स्वयं कृतं जीवकर्मानुरूपं समष्टिरूपं जगत्स्वकृतं चानुप्रविष्टं तत्तत्कर्मफलानुसारकृत-कमुपाधिमनुलक्षीकृत्य अणुत्वमहत्त्वेन प्रविष्टमनुप्रविष्टं प्रतिबिंबकदंब-मित्यर्थः । एतत्सर्वं त्वया स्वस्वरूपेतरत्वेन न मन्यंत इत्याहुः—इदं चिदचिद्रूपं प्रतीयमानमात्मतया स्वयं स्वरूपतयाऽवसितं निश्चितं **'यन्मनसा ध्यायति तद्वाचा वदति'**[१] इति श्रुतेः त्वया श्रुतिरूपया वाचा जीवकदंबात्मैक्यस्योपपाद्यमानत्वात् **'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्'**[२] **'यत्पूर्वं तपसो जातमद्भ्यः पूर्वमजायत'**[३] **'गुहां प्रविश्य तिष्ठंतं यद्भूतेभिर्विपश्यति एतद्वै तत्'**[४] इति श्रुतेः । श्रुत्यर्थाद्भगवानिममर्थं स्फुटयति—यत्पूर्वसर्गादौ तपसः शुद्धविद्याया हेतोः, **'यस्य ज्ञानमयं तपः'**[५] इति श्रुतेः । जातमाविर्भूतं ब्रह्मणि प्रथमाविर्भूतया मायया सर्वज्ञत्वादिगुणैरीश्वरत्वं यद्योगनिद्रितं सदुत्थितमित्यर्थः, तत्कस्मात्पूर्वमि-त्यपेक्षायां जीवोपाधिभ्य इति विधीयते । **'अद्भ्यः पूर्वमजायत'** इति जीवचैत-न्यस्य प्रतिबिंबत्वादुपाधीनां सलिलसाम्यादविद्यारचितजीवोपाधिकदंबोत्पत्तेः प्रागिति विवक्षयाऽद्भ्यः पूर्वमजायतेत्युक्तम् । **'यतः प्रसूता जगतः प्रसूतिस्तो-येन जीवान्व्यचसर्ज भूम्याम्'**[६] इति श्रुतेः । **'यथा ह्ययं ज्योतिरात्मा विविस्वानपो भिन्ना बहुधैकोऽनुगच्छन्'**[७] इति श्रुतेः । एवं दृष्टांतमुखेन जीवोपाधिप्रादुर्भावात्प्रागित्युक्तम् । अथ श्रुत्या दार्ष्टांतिकमुखेन जीवोपाधि-वृंदप्रादुर्भावानंतरं तस्मिन्प्रविश्य नानात्वेन प्रतीतिविषयं जातमित्यभिधीयते । **'गुहां प्रविश्य तिष्ठंतं यद्भूतेभिर्विपश्यति'**[८] इति । गुहां बुद्धिं प्रविश्य तिष्ठंतं तथा स्थूले तिष्ठंतमित्यर्थः । **'तोयेन जीवान्व्यचसर्ज भूम्याम्'**[९] इति श्रुतेः । तोयशब्देन गुहा तदद्भ्यः पूर्वमित्यनेनोक्तत्वात्सूक्ष्मोपाधेरुक्तप्रायत्वा-त्तिष्ठंतमित्यनेन भूम्यां स्थूले देहे तिष्ठंतमिति सूत्रितम् । ननु प्रविष्टमंतर्या-मित्वेनेति ब्रूमो नत्वहं सुखी दुःखीति प्रतीतिमंतमिति चेदनुभवैनैक्यं सूच्यते—यद्भूतेभिर्विपश्यतीति । भूतैस्तत्तद्बुद्ध्या तत्तदिंद्रियवृत्तिभिः प्रतिबिंबत्वेन पश्यतीत्यर्थः । नन्वंतर्यामी साक्षित्वेनैव पश्यति न सुखभोक्ता जीव इति ब्रूम इतिचेत् स्पष्टतया प्रतिबिंबयोरैक्यमुपदिश्यते **'एतद्वै तत्'**[१०] इति ।

---

१ केन. ५। २ ब्र. बिं. २। ३ काठ. ४।६। ४ काठ. ४।६। ५ मुं. १।१। ६ महाना. १।४। ७ ब्र. बिं. २। ८ काठ. ४।६। ९ महाना. १।४। १० काठ. ४।६।

ननु तत्तज्जीवसाक्षिपरमेश्वरस्वरूपैक्यं विधीयत इत्यतिमंदमतित्वमंगीकृत्य स्वमतं यथाकथंचिदुज्जीवितमिति मन्यंते कलौ वैदिकंमन्याः । कुत इति चेत्प्रतीतस्य भेदस्यैक्यमभिधीयते उत अप्रतीतस्य भेदस्यैक्यमभिधीयते ? । आद्यपक्षे त्वीश्वरस्वरूपभेदस्य प्रतीयमानत्वात्, द्वितीये महाकाशे महाकाश एतद्वै तदिति विहितुमयोग्यत्वाद्भेदस्याप्रतीयमानत्वादुपदेशनैरर्थक्यात् । ननु घटाकाशयोरिवैक्यं विधीयत इति साधयाम इतिचेत् घटेषु पृथक्त्वेन दृष्टाकाशजनविषयोपदेशो वा उत तदन्याधिकारिविषयः । आद्ये नहि घटेष्वाकाश इवेश्वरः केनापि पृथक्त्वेन दृष्टोऽस्ति यद्विषयोऽयमुपदेशः स्यात् । दृष्टेश्वरस्योपदेशासंभवाच्च । द्वितीये सति कुड्ये चित्रं भेदादर्शनादभेदविधेरयोग्यत्वात् । श्रुत्यप्रामाण्यकारणत्वसिद्धेः । ननु सर्वत्रेश्वरोऽस्तीति श्रुतजनविषयोऽयमुपदेश इति चेत्सर्वेषु घटेष्वाकाशोऽस्तीति श्रवणमात्रमेवैक्यज्ञानसिद्धेस्तस्याप्यैक्योपदेशस्य पिष्टपेषणन्यायेनैतद्वै तदिति विधानाद्वेदानामप्रामाण्यकारणत्वसिद्धेर्नायमर्थः । अतएव द्वैतभजनस्य पशुसाम्यं श्रुत्याभिधीयते '[1]अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' इति । तस्मात् 'यद्भूतेभिर्विपश्यति' इत्यनुभवात्, '[2]गुहां प्रविश्य तिष्ठंतम्' इतिश्रवणात्, 'एतद्वै तत्' इति ऐक्योपदेशात्, 'तत्त्व[3]मसि' इत्याद्यनेकश्रुतिसिद्धत्वात् अद्वैतवैदिकमतमिति सिद्धम् । ये त्वंतर्यांम्यैक्यं व्याकुर्वंति ते भ्रांताः न्यायाम्नायानुभवविरोधात् । अलमतिविस्तरैः ।

प्रकृतमनुसरति व्याख्याकृद् भगवान् । एवं बिंबप्रतिबिंबयोरैक्याच्छुक्तिरजतयोरिव चिन्मनोऽधिष्ठानविवर्तैक्याच्च स्वकृतमनुप्रविष्टमिदमात्मतयावासितमित्युक्तं, अत्राप्याहुर्वैदिकंमन्याः—मायोपाधौ ब्रह्मणोऽसंगस्य कथं प्रतिबिंबत्वमिति । नहि जले प्रतिबिंबितोऽर्कः स्वयं जलक्लिन्नो भवति मायाब्रह्मणोर्योगो न घटत इत्याहुः। शुक्तिरजतयोरिवायं योगोऽपि न घटते । रजते शुक्तिप्रतिबिंबत्वं न घटत इत्याहुस्तत्केवलत्वेन न घटते । अविद्यासु जीवा ईश्वरस्य प्रतिबिंबाः, अत एव यत्पूर्वं तपसो जातं तद्गुहां प्रविश्य भूतेभिर्विपश्यतीत्यभिधीयते । शुक्तिरजतयोगवद्ब्रह्मणि मायायोगेनेश्वरत्वं तस्य बिंबत्वेन भोगो न संभवतीति प्रतिबिंबत्वेन भोक्तृत्वं विधीयते । तस्य मायाशबलितस्य बिंबप्रतिबिंबत्वं संभावयितुं सगुणस्य प्रतिबिंबा जीवा इति विधीयते । सगुणत्वं नाम ब्रह्मणि सधर्मकत्वं तत्त्वतस्तदेव तत् घटे मृदिति न्यायात् । ननु जगन्मिथ्यात्वज्ञानस्य जीवेश्वरैक्योपासनायाश्च गीतासु भगवता आसुरसंपत्तयाभिहितत्वाद्वयं जगत्सत्यत्वं च जीवेशभेदं च सर्वत्र व्याकरिष्यामः । तदुक्तं '[4]असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' इति, '[5]ईश्वरोऽहमहं भोगी'

१ बृ. १।४।१०। २ काठ. ४।६। ३ छा. ६।८।७। ४ भ.गी. १६।८। ५ भ.गी. १६।१४।

इति चेत् किमत्र मताभिमानेन स्वमताचार्यत्वभंगभयात् 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' इत्यनेन जगन्मिथ्यात्वं च 'ईश्वरोऽहमहं भोगी' इत्यनेन जीवेश्वरैक्यमित्युपपाद्यते, उत श्रुतिसमन्वयेन निरभिमानतया तत्त्वमीमांसया न्यायप्राप्तमर्थमंगीकृत्य व्याक्रियते । आद्ये पक्षे यथेष्टं व्याकुरुत नाम । यदि प्रामाणिकरीत्या व्याक्रियते तर्हि नायमर्थो घटते । 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति श्रुतेर्जगन्नानात्वस्यैव नानात्वस्य दुर्वारत्वात् । नन्ववतारनानात्वविषयोऽयं नानात्वनिषेध इति चेत्तत् 'नेह नानास्ति किंचन' इति श्रुतेरेवं न घटत इति पूर्वत्र सिद्धम् । किंच जगन्नानात्वदर्शनेनैव मृत्योरनंतरं मृत्युरिति सर्वेषामस्त्येव प्रतीतिः, सर्वेषां नानात्वप्रतीतेर्दुर्वारत्वात् । अथावतारनानात्वादिदर्शनेऽप्ययमेव किल मृत्योरनंतरं मृत्युः । यदि कश्चन निवृत्तमृत्युश्चेत्तस्यावतारनानात्वदर्शनान्मृत्योरनंतरं मृत्युरितिवाच्यम् । नचावतारनानात्वं प्रतीतिविषयं यद्दर्शनादियं फलश्रुतिरिति स्यात् । किंच पश्यतीति श्रुतिपदात्प्रत्यक्षदर्शनं वा शास्त्रदृष्ट्या वा ? । आद्ये त्ववतारनानात्वस्य साधारणादर्शनात् । द्वितीये त्वेकस्यानेकावतारश्रवणेनैव नानाबुद्धिभंगात्फलश्रुतेर्निरर्थकत्वान्नायमर्थः । प्रत्यक्षत्वेऽपि येषामवतारज्ञानं नास्ति तेषामेको मृत्युरस्त्येव । 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' इति । 'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्याद्यनेकश्रुतिसिद्धं जगन्मिथ्यात्वं 'असत्यमप्रतिष्ठं ते' इत्यनेनैव कथमन्यथा स्यात्, बहूनामनुग्रहो न्याय्यः । तथा च वेदानामभिविगतजगन्मिथ्यात्वनिरूपणस्य प्रामाण्यकारणत्वात् प्रत्यक्षतयापि यथा घटो मिथ्या मृदं विना न प्रकाशते तथा जगतः चिदेकप्रकाश्यत्वात् । तस्मात् 'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः । न शौचं नापि चाचारो न सत्यं तेषु विद्यते' इति पूर्वश्लोकेन न सत्यं तेषु विद्यते इत्युक्तं विवृणोति 'असत्यमप्रतिष्ठं ते आहुः' इति । अतत्त्वमित्यर्थः । किं तत् ? । 'जगदाहुरनीश्वरम्' इति । अतः कृतस्य कर्मणः फलदाता न कोऽप्यस्तीति न शौचं नापि चाचारो न सत्यं तेषु विद्यते इति पूर्वमुक्तम् । अत एव अपरस्परसंभूतं प्रकृतिपुरुषसंयोगेन संभूतं परस्परयोगसंभूतं तन्न मन्यंते किंत्वपरस्परसंभूतं स्वत एवैवं तिष्ठतीत्याहुरित्यर्थः । अतः कारणांतराभावात्कामहेतुकमित्याहुः । स्त्रीपुरुषसंयोगमात्रमत्र हेतुर्नान्यः प्रत्यक्षैकप्रामाण्यात् । यस्मादेवं नेश्वरकृतं जगन्नच प्रकृतिपुरुषसंयोगसंभूतं नच तदा वेदाः प्रमाणं प्रत्यक्षमात्रस्य प्रामाण्यादतस्तेषु न सत्यं तत्त्वं विद्यते, तत एव नापि चाचारो न ते प्रवृत्तिं विदुः स्वर्गाद्यदृष्टपुरुषार्थं

---

१ भ. गी. १६।८। २ भ. गी. १६।१४। ३ का. २।४।११। ४ बृ. ४।४।१९। ५ गर्भ. ११७। ६ छा. ६।४।१। ७ भ. गी. १६।८। ८ भ. गी. १६।७। ९ भ. गी. १६।८।

न मन्यंत इत्यर्थः। नच निवृत्तिं मुक्तिमार्गमिति पूर्वश्लोकोक्तं विवृणोति—किमन्यदिति। अन्यत्किमस्तीत्याहुरित्यनुषंगः। प्रवृत्तिनिवृत्तिशौचाचारफलस्य प्रत्यक्षत्वाभावादिति पूर्वश्लोकोक्तहेतूनुक्त्वा तत्रैव तदुक्तमन्याय्यमित्याह—अप्रतिष्ठमिति। न प्रतिष्ठा विद्यते यस्येत्यप्रतिष्ठं, कुतः? न्यायविरोधात्। तच्चात्र श्रुतिस्तुतौ यथा--जनिमसतः सतो मृतिमिति पद्येन प्रत्यक्षमात्रवादिनां च मतं खंडितम्, अन्येषु गौतमादिशास्त्रेषु च तस्य दूषितत्वात्। एवं सामंजस्येनार्थस्य सर्वश्रुतिसमन्वयानुकूलत्वेन सिद्धत्वाद्वैदिकंमन्या आसुरा एव य एवं व्याकुर्वंतीति स्फुटं गम्यते। नन्वसत्यं जगदाहुरित्येके अनीश्वरमाहुरित्येके इत्यादि बहुविधा आसुरा जना इति व्याकुर्म इतिचेन्मताभिमानेन व्याकुरुत। प्रामाणिकरीत्या जगदसत्यत्वस्य सकलवेदपुराणसंमतत्वादासुरसंपदंतर्भूतत्वं न घटते। ननु विश्वं सत्यमथवा नेति 'सत्यासत्यस्य करणानि वोचम्' इत्यादिश्रुतिसिद्धत्वाज्जगदसत्यत्वं न घटते, ततस्त्वासुरसंपत्त्यैवासत्यं जगदाहुरिति व्याकुर्म इति चेत् जगत्सत्यत्वं विश्वं सत्यमिति श्रुत्यैवाधिगतं वा, स्वत एव स्वानुभवाद्वा? आद्ये स्वतो मिथ्यात्वेन प्रतीयत इति सिद्धं। तन्न घटते। श्रुतिश्रवणं विनैव सर्वेषां जगत्सत्यत्वप्रतीतेः। द्वितीये स्वत एव सत्यत्वेनाधिगतस्य सत्यत्वबोधकत्वे वेदाप्रामाण्यकारणत्वान्नायं श्रुतेरर्थः। देहात्ममानिनोऽयं तव देह इत्युपदिशतीति न्यायात्। तस्माद्विश्वं सत्यं नाम, विश्वं ब्रह्मैव 'सत्यं ज्ञानमनंतं ब्रह्म'[1] इति श्रुतेः। किंच यदि विश्वं सत्यमिति श्रुत्याऽभिधीयते तर्हि चराचरे जगति सत्ये तत्कारणस्य ब्रह्मणस्तदेव प्रमाणं, तथापि ब्रह्मसत्यत्वं निरर्थकमिव। 'सर्वं खल्विदं ब्रह्म'[2] इति श्रुतेः। तत्र विश्वस्य गुणे फणिवन्मिथ्यात्वाद्गुणं विना फणेर्वस्त्वंतराभावत्वात्फणिर्गुण इति न्यायेन मिथ्यात्वसत्यत्वयोरैक्यविधेरनधिगतोऽबाधितोऽयमेव श्रुत्यर्थः। तथैव 'सत्यासत्यस्य करणानि वोचं' सत्यस्येश्वरस्य करणानींद्रियाणीत्यर्थः। तानि सत्यासत्यानीत्यर्थः। इंद्रियाणामात्म्यैकप्रकाश्यत्वात्कनकैकप्रकाश्यानां कुंडलादीनां कनकत्ववदीश्वरस्येंद्रियाणां त्वगादीनां वाय्वादिजीवोपाधींद्रियदेवतारूपाणां सत्यत्वं ब्रह्मत्वघटनात् 'पुरुष एवेदं सर्वं'[3] इत्युपक्रम्य 'यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किमस्य कौ बाहू कावूरू पादावुच्येते'[4] इति गुण एव फणिरिति न्यायेन पुरुष एवेदं सर्वं इति यदुक्तं तस्य सर्वस्य पुरुषे कतिधा व्यकल्पयन्निति कल्पितत्वाभिधानात्पुरुषे गुणे फणित्वमुपपाद्य 'ब्राह्मणोऽस्य मुखमासीत्'[5] इत्यादि 'पद्भ्यां भूमिः'[6] इत्यादिसर्वस्य मिथ्यात्वं च दर्शितम्। स एवार्थः 'सत्यासत्यस्य करणानि वोचम्' इति

---

१ तै. २।१। २ छा. ३।१४।१। ३ मुं. २।१।६। ४ मुं. २।१।१३। ५ ऋ. सं. ८।४।१९। ६ ऋ. सं. ८।४।१९।

श्रुत्या प्रतिपादितः । अर्थस्यानधिगताऽबाधितत्वाद्यमेवार्थः । जगत्सत्यत्वविषय-स्यार्थस्याधिगतवेदकत्वादाबालगोपालादिवादिनस्तस्य सत्यत्वस्य वेदैकगम्यत्वाघटनात् । नन्वसत्यं जगदिति सिद्धांतो न घटत इति तन्मतखंडनाय श्रुतिः सत्यत्वमुपपादयतीति ब्रूम इतिचेत्तावता देवदत्तदेहस्य यज्ञदत्तदेहत्वं न घटत इति वेद उपपादयतीति न्यायाद्यदि सत्यमेव जगत्सत्यत्वेनैव प्रतीयमानं च तदसत्यमित्युक्तेऽपि कथमसत्यं स्यादिति बुद्धिः कस्य वा न स्यात् ? तस्मिन्विषये वेदानां प्रवृत्तेरघटनान्नायमर्थः । यद्वा किं '[1]तद्धैक आहुरसदेवेदमग्र आसीत्' इत्यसत्कारणवादमनूद्य '[2]कथमसतः सज्जायेत' इतिवदत्र श्रुत्या जगदसत्यत्वं न घटत इत्युच्यते, उत यथाकथंचित् श्रुतेः स्वमतानुकूलत्वेऽपि प्रामाण्यं घटत इति बलात् साध्यते ? आद्ये तु तदनभिधानाद्विश्वं सत्यमिति सदसतोर्गुणफणिवदैक्यस्य न्यायतः सिद्धत्वात्सत्यासत्यस्य करणानीति पुरुष एवेदमित्यादिश्रुतिसमन्वयेन न्यायेन चार्थस्य सिद्धत्वान्नात्र जगन्मिथ्यात्वखंडनावसरः, किंतु जगत्सत्यत्वविधिर्वा भवतु न्यायतस्तदसिद्धेः प्रमाणांतरविरोधाज्जडचैतन्ययोः फणिगुणयोरिवैक्यं वास्तु । न तृतीयः पक्षोऽत्र युज्यते नानात्वदर्शनस्य मृत्युफलत्वात्, नेह नानेति विधानात् '[3]सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' इत्यादि श्रुतेः । गुणफणिनामवच्चराचररूपाणि नामानि कृत्वाऽभिवदन्नास्त इत्यादिन्यायसिद्धत्वात् 'मायामात्रमिदं द्वैतं', '[4]विकल्पो विनिवर्तेत कल्पितो यदि केनचित्' इत्यादि बहुधा जगन्मिथ्यात्वखंडनं श्रुत्या विधीयत इति न घटते । द्वितीये तु यत्किमपि कुलं स्वकुले पवित्रमिति न्यायाद्भवत्सदस्येव स पक्षः शोभनोऽस्तु, न वैदिकविद्वत्सभायाम् । ननु '[5]रूपाणि सर्वाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' इति श्रुतेस्तु मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दन इत्यर्थः । नचात्र रूपाणि मिथ्याभूतानीति श्रुत्यर्थं इति चेन्मैवम् । '[6]वेदाहमेतं पुरुषम्' इत्युपक्रमे ब्रह्मसाक्षात्कारानंतरं रूपाणि नामानि कृत्वाऽभिवदन्नास्त इत्युक्तत्वात् । सर्वशब्दैर्जनार्दन इति व्याकरणवित्कोऽपि व्याकरिष्यति । यूयं वैदिकमानिनो मैवं साहसं कुरुत, ग्रासराज्योऽप्यारनालं पिबतीतिवद्ब्रह्मसाक्षात्कारवान्सर्वशब्दैर्जनार्दनं व्याकरोतीति विरुद्धम् । किंच नामानि सर्वाणि जनार्दनपराणि कुरुत इत्यश्रवणात्, किंतु सर्वाणि रूपाणीत्यनेन रूपाण्येव नामानि करोति मृगजलकल्लोलरूपाणीव नाममात्राणि न वस्तुत इत्येवार्थः । रूपाणि नामानि करोतीत्यत्र यदि सत्यानि

---

१ छा. ३।१९।१। २ छा. ८।७।१। ३ श्वे. ३।७। ४ गौ. १।१८। ५ श्वे. ३।७। ६ श्वे. ३।८।

रूपाणि नामानि करोतीति चेत् रूपत्वहानिर्यतो रूपाण्येव नामानि करोति । यदि रूपाणि नामानि च संति तर्हि रूपाणि सर्वाणि विचित्य धीरो नामानि कृत्वेत्येवमनुक्तं स्यात् । रूपाणां च नाम्नां च यथापूर्वं विद्यमानत्वे तु देवदत्तं यज्ञदत्तं करोतीतिवत् भ्रांतलक्षणवत्किमिदं साक्षात्कार-लिंगमित्याद्यप्रयोजका अर्थाः किंतु जगन्मिथ्यात्वादेवाधिगते कनके कुंडला-दीनि नामान्येव, ज्ञातायां मृदि घटादिरूपाणि नामान्येव, '[1]वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतिसिद्धन्यायस्यार्थस्य सामंज-स्यान्न भवतामाम्ना वेदाः, मुख्यार्थप्रदत्वाभावात् । अयमेवार्थो द्वितीयस्कंधेऽप्युक्तः-'[2]शाब्दस्य हि ब्रह्मणः' इत्यादि । तस्माज्जगतः सत्यत्वाभिधानमपि यदि क्वचित्स्यात्तत्र गुणफण्यैक्यविवक्षया लोकप्रतीतिविवक्षयेत्यर्थः स्याद्यथा चात्र श्रीमद्भागवते दशमे गर्भस्तुतौ–'[3]सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं नि-हितं च सत्ये । सत्यस्य सत्यमृतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः' इति प्रपंचस्य सत्यत्वाभिधानपूर्वकमसत्यत्वमुपपाद्यते । सत्यस्य योनिं निहितं च सत्ये सत्यात्मकमित्यनेन प्रपंचसत्यत्वमुक्तं तथा प्रतीयमानत्वात् । एवं प्रत्यक्षसत्य-त्वमुक्त्वा निराकुर्वंति । कथंभूतं ? सत्यस्य योनिं त्रिसत्यं कालत्रयसत्यं । तस्मा-दादावंते यत्कनकं तदेव मध्ये कुंडलाद्याकारेण परिणतायां विकृतौ व्याप्य तिष्ठतीति त्रिसत्यं कुंडलादेः प्रतीयमानत्वात्सत्यत्वं नादावंते च । तस्मान्मध्येऽपि नास्त्येव वस्त्वंतराभावात् । अत एव सत्यस्य सत्यमिति विशेषणेन कुंडलादेर्विद्यमानत्वे सत्यत्वस्य कनकैकमूलत्वात् । तथाच वक्ष्यत्येकादशे—'[4]यथा हिरण्यं स्वकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य । तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत्' इति भगवद्वाक्यं । सुतरामकृतं स्वकृतं । शेषं स्पष्टम् । तत्रैव-'[5]न यत्पुरस्तादुत यन्न पश्चान्मध्ये च यन्न व्यपदेशमात्रम् । भूतं प्रसिद्धं च परेण यद्यत्तदेव तत्स्यादिति मे मनीषा' इति । परेण कनकेन, मृदा, शुक्त्या यद्भूतं प्रसिद्धं च कुंडलं, कलशो, रजतं तदेव, तस्मात्कुंडलं कनकमेव, घटो मृदेव, रजतं शुक्तिरेवेति मे भगवतो मनीषेत्यादि सर्वपुराणेषु जगदसत्यत्व-सिद्धेः सत्यत्वाभिधानाच्चाऽसत्यत्वस्यैवोपपादनाद्न्यायसिद्धत्वान्मिथ्यात्वे प्रमाण-बाहुल्यादसत्यमप्रतिष्ठमित्यनेन जगदसत्यत्वमाहुरासुरा इति नायमर्थो न घटेत । तत्रासुराश्च द्विविधाः अवैदिका वैदिकंमन्याश्चेति । असत्यमित्यादिप्रत्यक्षवादिनो यावत् '[6]कोऽन्योऽस्ति सदृशो मया' इति ततो 'यक्ष्ये दास्यामि मोदिष्ये'

---

१ छा. ६।४।१। २ भा. स्कं. २।२।२। ३ भा. स्कं. १०।२।२६। ४ भा. स्कं. ११।२८।१९। ५ भा. स्कं. ११।२८।२१। ६ भ. गी. १६।१५।

इत्यादि 'यजंते नाम यज्ञैस्ते' इत्यादिवेदोक्तप्रवृत्तिमार्गपरा अपि दांभिका याज्ञिका इत्युक्ताः। अथ यच्च 'ईश्वरोऽहमहं भोगी' इत्यनेन जीवेश्वरैक्यमासुरमिति चेदीश्वरोऽहमित्येव मात्रं यदि चेदद्वैतोपासनापरत्वे न व्याकर्तुमवसरः क्वचित्स्यात्, किंतु 'ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी। आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया' इत्यादिवक्ष्यमाणत्वात्। ये त्वीश्वरोऽहमित्युपासकास्तेषां कोऽन्योऽस्ति सदृशो मयेति वा वक्तुं क्वावकाशः ? नहीश्वरसात्मैक्येन मदन्यत्र भेदेन तमुपासते किंत्वखिलैक्यम्। तत्र मया सदृशः कोऽन्योऽस्ति ? न कोऽपि, अहमेवाढ्योऽभिजनवानित्यादि। अन्येत्वनाढ्या अनभिजनवंत इत्यादिमानिनोऽद्वैतोपासनापरा इत्याहुस्ते एवासुराः। अद्वैतदूषणस्यालभ्यत्वात्। एवंभ्रमाणा भिक्षार्थमटमाना अपि कुत्राप्यलब्ध्वा तदाभासमात्रमुपलभ्याहो लब्धमिति श्लाघंते। नन्वीश्वरोऽहमित्येकेनैव पदेनाद्वैतोपासका अन्यैः पदैरन्य इति व्याकुर्म इतिचेत् 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' इति श्रुतेः पशुत्वभजनस्य दैवीसंपत्त्वे भविष्यत्यद्वैतभजनस्यासुरत्वम्। प्रत्युत 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति श्रुतेः, तस्मादैक्यात्तत्त्वमसीति नवकृत्व उपदेशसिद्धत्वात्। 'येन रूपं रसं गंधं शब्दान्स्पर्शांश्च मैथुनान्। एतेनैव विजानाति किमत्र परिशिष्यते एतद्वै तत्' इति जीवेश्वरैक्यस्यानेकश्रुतिसिद्धत्वाद् द्वैतभजनस्य पशुसाम्येन निराकृतत्वात्। तत्र तत्र बीजाद्यंतर्गतेश्वरमूर्तीनामैक्योपासनापरत्वेनैक्यपरश्रुतीनां च भेदोपासनानिषेधश्रुतीनां व्यवस्थाया न्यायविरुद्धत्वाज्जीवेश्वरयोर्भेदविषयप्रमाणाभावाच्च कथं तत्त्वजिज्ञासवो जना अहो क्वचिदीश्वरोऽहं समर्थोऽहमित्यासुराणामहंमानित्वोपपादने लब्धावसरैरुपपादितमद्वैतदूषणमंगीकरिष्यंति। ये तु प्रस्तोभितधनिकशिष्यकदंबलब्धधनमानास्ते वदंतु यथारुचि। कलावेवं भविष्यंतीति पूर्वमेव सद्भिर्गीश्चितत्वात्। तदुक्तमत्र पूर्वार्धे 'निशामुखेषु खद्योतास्तमसा भांति न ग्रहाः। यथा पापेन पाखंडा नहि वेदाः कलौ युगे' इति। तत्रैव तस्मिन्नेवाध्याये 'जलौघैर्निरभिद्यंत सेतवो वर्षतीश्वरे। पाखंडिनामसद्वादैर्वेदमार्गाः कलौ यथा' इति। अतो वामनात्मना भगवानत्रात्मनो भगवतः प्रार्थनारूपं पद्यं रचयति—

कथं त्वामात्मानं विदुरसति लोला मतखलाः
कुलाये बाला ये कुमतकृतसत्यत्वकुशलाः।

---

१ भ. गी. १६।१७। २ भ. गी. १६।१४। ३ बृ. १।४।१०। ४ गै. २।८।१। ५ काठ. ३।४। ६ भा. स्कं. १०।२०।८। ७ भा. स्कं. १०।२०।२३।

समुद्रे देहेऽस्मिन्स्मरसुखसमुद्रे गुरुशिलां
गले वध्वा मग्नाश्चरणयुगुले तेऽपि कितवाः ॥ १ ॥

अलमित्यादिपाखंडखंडनविस्तरैः।

प्रकृतमनुसरति भगवान् श्रुतिकल्पलताकृत्। एवमशेषश्रुतितात्पर्यसंग्रहतो मनःकल्पितनगरवदीश्वरमनःकल्पितमिदं जगदिति श्रुतिभिः कृतोऽत्र सिद्धांतः। यथोक्तं भगवता 'मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः'[1] 'नच मत्स्थानि भूतानि पश्य मे योगमैश्वरं'[2] इति। मत्स्थानि सर्वभूतानि गुणे फणिवत्। गुणाविद्यावतां दृष्ट्येत्यर्थः। नचाहं तेष्ववस्थितः। नहि गुणज्ञदृष्ट्या गुणः सर्पो विद्यते सर्पाभावात्। ननु मत्स्थानीत्यंगीकृत्य कथं न चाहं तेष्ववस्थित इत्युच्यते तत्राह—न च मत्स्थानि भूतानीति। वस्तुतो यदि भूतानि मत्स्थानीति चेत्तेषु नाहमिति वक्तुमयोग्यं स्यात्। यच्च संतीत्युच्यते तच्छुक्तौ रजतवत्। तस्माद्भूतानि ब्रह्मांडविग्रहादिचतुर्मुखादिलीलारूपाणि मयि संत्यपि न संत्येवेत्युक्तम्। 'इयं विसृष्टिर्यत आवभूव यदि वा दधे यदि वा न'[3] इति श्रुतेः। तस्मादसत्यत्वं बोधयितुं एवमुपदिश्य एतज्जगदिति धिया मा पश्य किंतु मद्युक्तिचातुर्यमित्येव पश्येत्याह—पश्य मे योगमैश्वरमिति। तथाच—'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा'[4] इत्यष्टविधायां चतुर्विंशतितत्त्वरूपेण प्रकृतेरंतर्भूतत्वात्सर्वं प्राकृतं जगत्प्रकृतिरेव माया। 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं'[5] इति श्रुतेः मायेति पदव्युत्पत्त्या मिथ्या, तस्मान्मिथ्या कार्यकारणरूपा काचिदीश्वरशक्तिः गुणफणिवद्ब्रह्मणि जगदाकारेण भातीत्यलं विस्तरैः ॥ २६ ॥ ( १३ ) ॥

मनःकृतपुरं यथा सदिव भाति चित्सत्तया
तथाऽखिलमिदं जगत्त्वयि च मायिकं माधव।
किरीटकटकादिकं न कनकं विना दृश्यते
चराचरमतो नहि त्यजति हेमविद्ब्रह्मवित् ॥ १ ॥

इति श्रीमद्भागवते दशमस्कंधे श्रुतिकल्पलतायां त्रयोदशश्लोकव्याख्यानं नामैकोनविंशोऽध्यायः ॥ १९ ॥

॥ इति एकोनविंशोऽध्यायः ॥

---

१ भ. गी. ९।४। २ भ. गी. ९।५। ३ ऋ. सं. ८।७।१७। ४ भ. गी. ७।४। ५ श्वे. ४।१०।

# विंशोऽध्यायः ।

अहो यद्येवं न्यायसिद्धं जगन्मिथ्यात्वं च ब्रह्माद्वैतं भवतीभिरुपपाद्यते तर्हि किं '**जयजय जह्यजामजित**' इत्याद्यविद्याहरणाय मम प्रार्थनया—इत्याशंक्य '**नायमात्मा प्रवचनेन लभ्यः**' इत्यादि '**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्**' इत्याद्याः श्रुतयस्त्वत्परिचर्यया लब्धत्वत्प्रसादा एवाविद्यावरणभंगद्वारा मृत्युं तृणीकुर्वंति, न केवलं वयं श्रुतय एवाविद्याहरणे क्षमाः प्रत्युताभक्तांस्त्वं वेदरूपाभिर्वाग्भिर्विविधस्वर्गादिकामनापाशैर्बध्नासीत्याहुः—

**तव परि ये चरंत्यखिलसत्त्वनिकेततया**
**त उत पदाऽऽक्रमंत्यविगणय्य शिरो निर्ऋतेः ।**
**परिवयसे पशूनिव गिरा विबुधानपि तां-**
**स्त्वयि कृतसौहृदाः खलु पुनंति न ये विमुखाः ॥२७॥(१४)॥**

ये परि चरंति त उत निर्ऋतेः शिरः पदा आक्रमंतीत्यन्वयः। ये परिचरंतीत्यत्र परि ये चरंतीति छांदसत्वं। छंदसि व्यवहिताश्चेत्यदोषः। ये परिचरंति त्वामिति शेषः। श्रवणवर्णनादिना ये परिचर्यां तव दास्यं कुर्वंतीत्यर्थः। त उत त एव किल निर्ऋतेर्मृत्योः शिरः प्रधानांगं कालरूपेणायुर्हरणमित्यर्थः। तदाक्रमंति तव परिचर्यया तेषामेवायुर्न गच्छतीत्यर्थः। सफलत्वान्मृत्युनिवारकत्वात्। शिरआक्रमणाद्बलवतः शत्रोस्ततः परं बलं व्यर्थमिव प्रारब्धभोगांते तेषां देहपातो न मृत्योः प्रभाव इति भावः। लिंगदेहाकर्षणराहित्यात्। '**न तस्य प्राणा उत्क्रामंति इहैव समवलीयंते**' इति श्रुतेः। ननु तावता भगवत्परिचारकाः स्वमृत्युपरिहाराय भगवद्दास्यं विदधति न निर्व्याजप्रेमरसनिम्नमा इत्याशंक्याहुः—अविगणय्येति। न गणयित्वैवेत्यर्थः। आयुर्गतमियदुर्वरितमियत्कथं वा मृत्युं तरिष्याम इति गणनापि न तेषामिति भावः। भगवत्प्रेमरसाप्लुतत्वात्। इममर्थं कैमुतिकन्यायेनाहुः—पदेति। पादेनैव मृत्युशिर आक्रमंतीत्यर्थः। स्वचरणेन स्वचरणशरणानां मृत्युभयं निवारयंति तेषां तस्य न गणनेति किं वक्तव्यमिति भावः। ननु श्रवणादिना परिचरंतो यदि मृत्युं तृणीकुर्वंतीति

१ भा. स्कं. १०।८७।१। २ मुं. ३।२।३। ३ बृ. ४।४।६।

चेदनिवृत्ताविद्याः सर्वात्मकं मामविदित्वैव तरंतीति सिद्धम् । तावता 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा' इति श्रौतसिद्धांतविरुद्धमित्याशंक्य तव सर्वात्मतयैव परिचरंतीत्याहुः-तवाखिलसत्त्वनिकेततयेति युष्मच्छब्दस्यात्रान्वयः । तव या अखिलसत्त्वनिकेतता तया । अखिलसत्त्वानां चराचरप्राणिनां निकेतं निवासस्थानं तव स्वरूपमखिलसत्त्वविवर्ताधिष्ठानं तस्य भावस्तत्ता तया तवाखिलसत्त्वनिकेततया । तथाचाखिलसत्त्वेषु निकेतं निवासस्थानं यस्य सोऽखिलसत्त्वनिकेत इति वासुदेवपदव्युत्पत्त्या भगवदुक्तस्वभक्तमहत्त्वं स्मारयंति— 'बहूनां जन्मनामंते ज्ञानवान्मां प्रपद्यते । वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' इति । वसंति भूतानि यस्मिन्स वासुदेवः । वसति भूतेषु अतः स महात्मा महानतिविस्तृतः सकलात्मत्वानुभवे आत्मा चित्तं यस्य स महात्मा सुदुर्लभः यः स्वपदा स्वचरणशरणानां मृत्युभयं हरति ततः सुदुर्लभो दुःप्रापः । प्राप्तोऽपि दुर्ज्ञेयस्तस्यानुभवं विरला अधिगत्य तत्पदा मृत्युं तरंतीत्यभिप्रायः । एवं तवाखिलसत्त्वनिकेततया सर्वात्मतया विश्वरूपतया श्रवणादिना परिचारका मृत्युं तुच्छीकुर्वंतीति श्रुतीनामभिप्रायः । एवं भगवत्परिचर्याफलमुक्त्वा तदितराणां मूढानां शास्त्रविदां वा गतिं किं ब्रूमः ? यतो लौकिकवैदिकद्विविधवाग्व्यवहारेण त्वमीश्वर एव तत्तत्संस्कारानुरूपेण तान्बध्नासीति 'तस्य वाक्तंतिर्नामानि दामानि तस्येदं वाचा तंत्या नामभिर्दामभिः सर्वं सितं । एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष उ एवासाधुकर्म कारयति तमधो निनीषत' इत्याद्याः श्रुतय आहुः— परिवयसे पशूनिव गिरा विबुधानपीति । अपिशब्दात्पशूनिव मूढान्बध्नासीति किं वक्तव्यम् । यतस्तु विबुधानपि, तत्रादौ मूढबंधनं व्याक्रियते विबुधानिति । ततः परं पशूनिव गिरा वाचा परिवयसे बध्नासि । केवलं लौकिकानिवेत्यर्थः । तत्र लौकिकाँल्लौकिकगिरा त्वमेव बध्नासि । विश्वरूपस्त्वं लौकिकशब्दव्यवहारेण विविधकुकथाश्रवणजनितदुरंतकामपाशैर्बध्नासीति भावः । 'अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम्' इति श्रुतेः । अफलां ज्ञानकांडरहितां वाचं अपुष्पां स्वर्गादिपुष्परूपकर्मकांडरहितां वाचं शुश्रुवान् शृण्वन्नेव पुमान्वेदविमुखः केवललौकिकव्यवहारपर इत्यर्थः । अधेन्वा मायया वंध्यया गवा दुग्धवत्सरहितया केवलयाऽविद्यया चरतीत्यर्थः । स्वर्गापवर्गयोरेकफलस्याप्यभावात्, एवमेव स्वर्गादिफलकामनया विबुधान् शास्त्रज्ञानपि बध्नासि तव परिचर्यां विना अविद्या-

१ श्वे. ३।१८। २ भ.गी. ७।१९। ३ छा. ४।१५।२,३।४। ४ ऋ. सं.८।२।२३।

निवृत्त्यभावात्केवलकर्मकांडनिरतानां न मृत्युतरणम् । 'न कर्मणा न प्रजया' इति श्रुतेः केवलकर्मनिष्ठानां नात्मज्ञानमित्यर्थः । 'नान्यः पंथा विद्यतेऽयनाय' इति श्रुतेः । ननु तानुभयविधान्के वा पावयंति इत्यपेक्षायां तत्र सत्या यदेत्याहुः — तांस्त्वयि कृतसौहृदाः खलु पुनंति न ये विमुखा इति । त्वयि कृतसौहृदाः पूर्वोक्ता एव खलु निश्चयेन पुनंति, न ये विमुखाः केवलकर्मश्रद्धाभराक्रांताः । '[3]अंधेनेव नीयमाना यथांधाः' इति श्रुतेः ॥ २० ॥ (१४) ॥

परिचरंति पदं तव ते पदं दधति मृत्युशिरस्त्वगणय्य तम् ।
अखिलसत्त्वनिकेततया हरे खलु पुनंति जगत्प्रणतोऽस्मि तान् ॥१॥

इति श्रीमद्भागवते दशमस्कंधे श्रुतिकल्पलतायां श्रुतिस्तुतौ चतुर्दशश्लोकव्याख्यानं नाम विंशोऽध्यायः ॥ २० ॥

॥ इति विंशोऽध्यायः ॥

---

# एकविंशोऽध्यायः ।

ननु यद्यपि सकामास्तथापींद्रादिदेवानुपासते एव तान् मयि कृतसौहृदा एव पुनंतीति कुतोऽयं नियम इत्यपेक्षायां '[4]अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स एव वेद्यं न च तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराणम्' इत्याद्याः श्रुतयः तवेश्वरस्य कालात्मनो देहेंद्रियातीतत्वादकर्तुरनिंद्रियस्यापि स्वेच्छैकहेतुकत्वादिंद्रादीनां कर्मपरिपाकजनितदेहेंद्रियात्मकत्वात्तव दत्ताधिकारिण इति सेव्यतारतम्यात्सेवकतारतम्यं ततोऽयं नियम इत्याशयेनाहुः—

त्वमकरणः स्वराडखिलकारकशक्तिधर-
स्तव बलिमुद्वहंति समदंत्यजयाऽनिमिषाः ।
वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो
विदधति यत्र ये त्वधिकृता भवतश्चकिताः ॥२८॥ (१५)॥

त्वमकरणः करणानींद्रियाणि तद्रहितः । ननु दर्शनश्रवणादिरहितस्य कथमखिलशास्तृनियंतृत्वमित्याशंक्याहुः—अखिलकारकशक्तिधर इति । अखिलानां कारकाणामिंद्रियाणां शक्तीर्धरतीति तथाऽनिंद्रियोऽप्यकर्तापि स्वत एव व्यापकत्वाच्चिच्छक्ति-

---

१ महाना. १०।५। २ छा. ७।१।३। ३ काठ. २।५। ४ श्वे. ३।१९।

नियंतुः सर्वं संभवतीति श्रुत्यर्थं स्फुटीकुर्वन्ति–'अपाणिपादो जवनो ग्रहीते'ति । अपादोऽपि जवनः । पृथ्वी पलायमानस्य पुरत एवेति न्यायात् । अपाणित्वेऽपि ग्रहीता अपरिच्छिन्नभोक्तृत् । पश्यत्यचक्षुः स शृणोत्यकर्णः । 'चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्' इत्यादिश्रुतेः । यया चिच्छक्त्या अखिलेंद्रियाणां प्रकाशकस्तया किं किं न संभवतीत्यर्थः । एवं भगवतो देहेंद्रियरूपकर्मानुबंधराहित्यात्तद्युक्तानां त्वमीश्वर इत्युक्त्वाऽथ विद्याविद्योपाधित्वात्सेव्यसेवकत्वादितारतम्यमित्याहुः—त्वं स्वराडिति । स्वस्वरूपेणैव राजसे प्रकाशस इति स्वराट् । विद्योपाधित्वादनवरतस्व-प्रकाश इत्यर्थः । अतस्त्वं सेव्यस्ते सेवका इत्याहुः—तव बलिमुद्वहंति समदंत्यजया-ऽनिमिषा इति । अनिमिषा देवाः अजया अविद्यया तव बलिमुद्वहंति तव पूजामुच्चैः शिरोभिर्वहंति, समदंति सम्यक् भक्षयंति च । अयमर्थः—इंद्रादिनामभिस्त्वदुद्देशेन हुतान् हविर्भागांस्ते शिरसा आनीय त्वां समर्पयंति । त्वदाज्ञया स्वयं चाश्नंति । यतो मुख्य इज्यस्त्वमेव । ते त्वौपचारिकाः । तथा च श्रुतिः 'स प्रथमः स प्रकृतिः स प्रथमो मित्रावरुणोऽग्निः स प्रथमो बृहस्पतिश्चिकित्वान् तस्मा इंद्राय हविराजुहोमि' इति । एतदेव दृष्टान्तमुखेनोपपादयन्ति—वर्ष-भुजोऽखिलक्षितिपतेरिवेति । वर्षं भूखंडमात्रं भुंजते इति वर्षभुजस्ते मंडलेश्वरा अखिलक्षितिपतेर्बलिमिवोद्वहंति समदन्ति चेत्यर्थः । सार्वभौमं यथा स्वस्मै स्वप्रजादत्तं धनादि सर्वं प्रयच्छन्ति स्वयं चाश्नन्ति तदिव, न केवलं त एव किं तु विश्वसृजोऽनश्नाना अपि । किंच त्वया च ते सार्वभौमेन स्वबलेनैव वशीकृताः न तु तद्दत्तं भूखंडराज्यं, देवास्तु तव दत्तपदाधिकारिण इत्याहुः—विदधति यत्र ये त्वधिकृता इति । ये देवास्ते तु । तुशब्देन ततोऽप्यतिवश्यतां दर्शयंति । यत्र येषु पदेष्वधिकृतास्तद्विदधति । दत्ताधिकारानुरूपं तव शासनमनुवर्तंत इत्यर्थः । तत्रापि न स्वातंत्र्यमित्याहुः—भवतश्चकिता इति । भवतः सकाशाद्भीताः संतो मुहुरालोक्य दत्ताधिकारं कुर्वंतीत्यर्थः । अतस्तत्सेवकानां तव सेवकाः पुनंतीति किमत्र चित्रमित्यभिप्रायः ॥ २८ ॥(१५) ॥

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स एव वेद्यं न च तस्य वेत्ता तमीश्वरं विश्वसृजां प्रपद्ये ॥ १५ ॥

इति श्रीमद्भागवते दशमस्कंधे श्रुतिकल्पलतायां पंचदशश्लोकव्याख्यानं नामैकविंशोऽध्यायः ॥ २१ ॥

॥ इति एकविंशोऽध्यायः ॥

---

१ श्वे. ३।१९। २ केन. २।

## द्वाविंशोऽध्यायः ।

ननु मदधीना अपि देवाः स्वर्गादिफलप्रदास्तदुपासकानां स एव पुरुषार्थः किं न स्यादित्याशंक्य 'यतः प्रसूता जगतः प्रसूतिस्तोयेन जीवान्व्यचसर्ज भूम्याम्। यदोषधीभिः पुरुषान्पशूंश्च विवेश भूतानि चराचराणि॥' इत्याद्याः श्रुतयोऽविद्यानिमित्तकृतकर्मभिर्जीवानां प्रलयानन्तरकाले ब्रह्मणि लीनानामपि चराचरयोनिसंभवस्य दुर्वारत्वं च 'एतद्यो वेद निहितं गुहायां सोऽविद्याग्रंथिं विकिरतीह सोम्य', 'भिद्यते हृदयग्रंथिश्छिद्यन्ते सर्वसंशयाः। क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इत्यादि विद्ययैव संसारनिवृत्तिः सा च त्वत्प्रसादलभ्या अतस्त्वद्भजनमेव मुख्यमित्याशयेनाहुः—

स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो
विहर उदीक्षया यदि परस्य विमुक्ततः ।
न हि परमस्य कश्चिदपरो न परश्च भवे-
द्वियत इवापदस्य तव शून्यतुलां दधतः ॥ २९ ॥ (१६) ॥

अजया अविद्यया उत्थनिमित्तयुजः उत्थितैर्निमित्तैः कर्मभिर्युज्यंत इति तथा। गुणकामकालाद्यविद्याकृतकर्मफलैर्बद्धा इत्यर्थः। स्थिरचरजातयः स्थावरजंगमजन्मानः स्युरित्यर्थः। विघ्नाप्रतिहतैर्यज्ञादिभिः क्वचित्स्वर्गादिप्राप्तावपि स्थिरचरयोनिसंभवो दुर्वार इति भावः। यदि परस्य उदीक्षया विहरः परस्य नित्यनिरस्तोपाधेरात्मनस्तव उदीक्षा उत् उत्कृष्टा ईक्षा तया आत्मसाक्षात्कारेणेत्यर्थः। यदि विहरः विहारः सर्वं ब्रह्मेत्यनुभवेन विहरणमित्यर्थः। 'आत्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति' इति श्रुतेः। सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते' इति भगवदुक्तत्वाद्यदि ज्ञानेन विहारस्तर्हि मुक्त एवेत्याहुः। यदि विहर इत्यत्र यदीतिशब्देन यदि कस्यचित्तव श्रवणकीर्तनादिप्रभावेनेति सूचयंति। ततः सगुणभजनेन किमत आहुः—तव विमुक्ततत इति। तर्हि विमुक्ततत एव ब्रह्मैक्यम्। विमुक्तश्चासौ ततश्च विमुक्ततः। विशेषादुपाधेर्मुक्तश्चरमचूरया प्रत्यगात्मदर्शनात्। तत आत्मज्ञोऽपरिच्छिन्नत्वात् ततः विस्तृतः सर्वत्र व्याप्त इत्यर्थः। तदुक्तं भगवता गीतासु 'यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि

१ महाना. १।४। २ मुंड. १।१०। ३ मुं. २।२।८। ४ बृह. ४।४।२३। ५ भ. गी. ५।७। ६ भ. गी. ४।३५।

पांडव । येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥' इति । तथा च त्रयोदशेऽध्याये 'यदा भूतपृथग्भावमेकस्थमनुपश्यति । तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥' इति । 'य एवं वेद ब्रह्माहमस्मीति स इदं सर्वं भवति ।' एतावता देवतांतरोपासकानामविद्यया कर्मपारतंत्र्यात् स्थिर-चरजातित्वं च भगवद्भक्तस्यात्मतत्त्वसाक्षात्कारेण, विमुक्तत्वं च साक्षित्वेन स्वमनः-कल्पितनगरवत् स्थिरचरसत्त्वकदंबव्यापकत्वं चेत्युपासकयोर्महदंतरे सिद्धे भगवति स्वभक्तपक्षपातवैषम्यं प्राप्तं परिहरंत्यः 'आकाशवत्सर्वगतश्च नित्यः ।' 'आकाशशरीरं ब्रह्म' इत्याद्याः श्रुतयः आकाशसाम्येन समत्वमुपपादयन्ति—नहि परमस्य कश्चिदपरो न परश्च भवेद्वियत इवापदस्येति । परमस्य श्रेष्ठस्य निरस्त-स्वपरभेदस्येति । कश्चिदपरो न हि पर इतरो न भवतीत्यपरः स्वीयः कश्चन मदीय इति नेत्यर्थः । अभिमानशून्यत्वान्न परश्च पर इतरो न, मदीय इति च न । सर्वात्मकत्वात् । कथंभूतस्य--वियत इवापदस्येति । आकाशस्येव तत्सदृशस्येत्यर्थः । पदं स्थानं तद्रहितस्य । किं तद्दृश्यते । यस्मिन्स्थाने आकाशोऽस्तीति वक्तव्यं अपरि-च्छिन्नत्वात् सर्वत्र तस्यैव विद्यमानत्वात् एवं आकाशवत्सर्वगतस्य कः परः को वा अपरः । यद्येकं पदं स्यात्तर्हि तत्र योऽयमाकाशो नान्यत्र इति स्वीयपारक्यं तदानीं वा स्यात्, न च तदप्यस्ति तथापि फलवैषम्यं दृश्यते । तत्र घटे घटाकारो मठे मठाकार उपाध्यनुरूपस्तत्र तत्र तथा तथा नभो दृश्यते, एवं भजनानुरूपं फलं, स्वयं त्वविद्यायां विद्यायां देवोपाधिषु चेश्वरोपाधौ च सर्वत्र तत्तदुपाध्यनुरूप-फलेषु च सम एवेत्यर्थः । ननु जडस्य नभसस्तथा वक्तुमुचितं ज्ञानस्वरूपस्येश्वरो-पाधिशबलितस्य पक्षपातो दुष्परिहार इत्याशंक्य परमेश्वरस्य सततस्वस्वरूपानुभव-रूपत्वात् स्वरूपस्य धर्मराहित्यात्तदेकमात्रस्य तव ज्ञानस्वरूपत्वेऽपि स्वपारक्यं न संभवतीत्याहुः—तव शून्यतुलां दधत इति । शून्यसादृश्यं धारयतश्चिदेकरसस्य त्वमहमित्यादिप्रतीतिरहितस्य स्वपारक्यं बुद्धिकृतं न संभवतीत्यर्थः । अत्र शून्या-दिवादिनां बुद्धिस्थौल्यं सूत्रयंति—शून्यतुलां दधत इति । तुलाशब्देन कनकगुंजा-साम्यन्यायेन निर्धर्मकत्वस्य न तु समतुलारोपितत्वात् कनकस्य गुंजात्वं संभवतीति भावः । केचित्सुषुप्तौ प्रतीत्यभावात्तत्र शून्यत्वं लक्षयंति स्थूलबुद्धित्वात् । यदि सुखमहमस्वाप्समिति न किंचिदवेदिषमिति प्रबुद्धस्य तत्रत्यसुखस्य प्रतीतिर्न स्यात्तदानीं शंकावसरोऽपि न स्यात् । न हि शून्यस्य पुनर्बुद्ध्या शबलितत्वे सुखानु-भवत्वं बुद्ध्यादिविश्लेषे सुखरूपत्वं वक्तुं शक्यं, तथापि शून्यत्वाभावेऽपि त्वमहमिति प्रतीतिमात्रविदुषां तद्रहितं चैतन्यं चैतन्यवन्न भातीत्यतः शून्यत्वादिकल्पनां

१ भ. गी. १३।३०। २ छा. ७।२४।१। ३ तै. १।६।२।

कुर्वन्ति । केचिच्चिद्गुणत्वेन केचिच्चित्परिणामत्वेन यथारुच्यात्मत्वं व्याकुर्वन्ति । श्रुतयस्तु ज्यायस्त्वेन चिद्धेमनुलामारोप्य निर्धर्मैकत्वमुपपाद्याहुः—शून्यतुलां दधत-स्तव त्वमहमित्यादिवृत्तिशून्यवस्तुत्वान्न स्वीयपारक्यमित्युक्तम् । सुपुप्तौ तामामेव त्वमहमित्यादिवृत्तीनां प्रतीत्यभावात्प्रबोधे तदेकप्रकाश्यत्वे सिद्धे यदि तस्यापि काचित् वृत्तिरूपा प्रतीतिः स्यात्तदा प्रकाशांतरापेक्षा स्यादेव वृत्तिरूपप्रतीतेः परप्रकाश्यत्वात्, तथा त्वनवस्थायां किमप्येकं परप्रकाशकं स्वयं वृत्तिप्रकाशरहित-मंगीकरणीयं स्यात्तदेवात्मा यः सुपुप्तौ वृत्तिप्रत्ययरहितः । यथाग्निः काष्ठाद्युपा-धिरहितः क्वचिदपि केनापि न दृष्टस्तथापि अग्निः प्रकाशकः काष्ठादीनां तत्प्रकाश्यत्व-मित्याद्यलमतिविस्तरेण ॥ २९ ॥ ( १६ ) ॥

अविद्ययोत्थान्यसुरप्रयासैर्ध्रुवं जनिः स्यात्स्थिरजंगमेषु ।
भजन्ति ये त्वामभिमानशून्या मुक्तास्ततस्ते स्थिरजंगमेषु ॥ १ ॥

इति श्रीमद्भागवते महापुराणे श्रुतिस्तुतौ श्रीश्रुतिकल्पलतायां षोडशश्लोक-व्याख्यानंनाम द्वाविंशोऽध्यायः ॥ २२ ॥

॥ इति द्वाविंशोऽध्यायः ॥

---

# त्रयोविंशोऽध्यायः ।

एवं शून्यतुलां धारयंतमशून्यं वृत्तिप्रत्ययशून्यमेकं जगत्प्रकाशकं किमपि तद्ब्रह्म सर्वसममिति सिद्धेऽपि तस्मिन्नखिलात्मनि उपाधिकृतनानात्मसु नानात्म-वादिनो मिथो भेदमुपपादयंति तावता वृत्तिप्रत्ययप्रकाशका वृत्तिप्रत्ययशून्या अनेकाः किं न स्युरित्याशंक्य 'एकमेवाद्वितीयं ब्रह्म'[1] इत्याद्याः श्रुतयः आत्मना-नात्वखंडनं विदधति—

अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगता-
स्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा ।
अजनि च यन्मयं तदविमुच्य नियंतृ भवेत्
सममनुजानतां यदमतं मतदुष्टतया ॥ ३० ॥ ( १७ ) ॥

अपरिमिता असंख्याताः ध्रुवाः शश्वदेकस्वरूपाः ह्रासवृद्धिरहिता इत्यर्थः । तनुभृतो देहधारिणः यदि यद्युच्यंते इत्यर्थः । इति पूर्वपक्षानुवादः । तदसंभावितत्वं

---

१ छा. ६।२।१।

साधयिष्यंत्य आहुः—सर्वगतास्तर्हीति। तर्हि सर्वगता इत्यंगीकुरुत इत्यर्थः। तनुभृत्त्वात् ध्रुवत्वात् सर्वगतत्वं दुर्वारमिति भावः। कुतः, यद्यतिसूक्ष्मरूपास्तर्हि तिमिंगिलादितनुभृत्त्वं न स्यात्। तनुव्यापकत्वासंभवात्, अव्यापकत्वे सुखाद्यनुभवाभावात्, यदि बहुविस्तीर्णरूपास्तर्हि मशकादितनुभृत्त्वं न स्यात्, स्वरूपऱ्हासत्वासंभवात्। यदि संभवेत् तदा ध्रुवत्वं न स्यात्। ऱ्हासवृद्धिधर्मिणो ध्रुवत्वादर्शनात्। तस्मात्सर्वगतत्वमंगीकुरुत। उपाध्यनुरूपाणुत्वमहत्त्वेऽपि ध्रुवत्वात् नभोवत्। तथा चेदपरिमितत्वं न स्यादिति भावः। ध्रुवाणां व्यापकानामनेकानामेकत्रादर्शनादसंभावितत्वादन्यारयं मतं सिद्धम्। इत्यवैदिकसकलनानात्ववादमतखंडनम्। अथ वैदिकमानिनां नानात्मवादिनां मतमसंभावितमप्यंगीकृत्य विशेषतो दूषयन्ति—न शास्यतेति नियम इति। एवं सति न शास्यता न च नियम इत्यर्थः। ध्रुवपदपुरःस्थितौ द्वितीयो नकारः। शास्यस्य शास्तृसमानधर्मत्वात्। सर्वेषु सर्वगतेषु तनुभृत्सु सोऽप्येकः सर्वगत इति तनुभृतां न शास्यतेति भावः। तथा च नियमो न स्यात् सर्वगतेष्वात्मसु, तस्मान्न संभवति नानात्मत्वमिति पुनस्ततोऽपि विशेषतः सिद्धं सर्वेषां सर्वगतत्वमसंभावितं तदंगीकृतेऽपि शास्त्रविरोध इति। नन्वेकात्मपक्षेऽप्युपाधिऱ्हासवृद्धावात्मनोऽपि तद्दुर्वारत्वादध्रुवत्वमेव। यद्याकाशवेदकः सर्वेषामात्मा ध्रुवः सर्वगतस्तर्हि द्वैताभावात् सर्वेषां ध्रुवत्वे सर्वगतत्वे शास्तृशास्यभेदे शास्यतानियमो न स्यादित्याशंक्य 'यत्पूर्वं तपसो जातमद्भ्यः पूर्वमजायत', 'गुहां प्रविश्य तिष्ठंतं यद् भूतेभिर्विपश्यति', 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽव्ययात्मा' इत्याद्याः श्रुतय आहुः—ध्रुव इतरथा अजनि च यन्मयं तदविमुच्य नियंतृ भवेदिति। हे ध्रुव, इतरथा एकात्मपक्षे शास्यतानियमश्च संभवतीत्याहुः। तत्र प्रथमं तनुव्यापकत्वे ऱ्हासवृद्धित्वेऽपि ध्रुवत्वमुपपादयन्ति ध्रुवेति संबोधनेन। त्वं बिंबस्थानीय ईश्वरो ध्रुवः, तव ध्रुवत्वेन प्रतिबिंबानामुपाधिमात्रव्यापकानामपि ध्रुवत्वम्, उपाध्यणुत्वेऽणुत्वम्, तन्महत्त्वे महत्त्वं तथापि बिंबध्रुवत्वेन ध्रुवत्वमित्यर्थं सूत्रयंति। एतावता बिंबप्रतिबिंबैक्येन ध्रुवत्वे च सिद्धे प्रतिबिंबस्योपाधिमात्रव्यापकस्य बिंबात्मना सर्वगतत्वेऽपि प्रतिबिंबत्वे शास्यता च परापरोपाधिभेदात्तावन्मात्रव्यापकेषु सर्वव्यापकत्वान्नियमोऽपि संभवतीत्याहुः—अजनि च यन्मयं तदविमुच्य नियंतृ भवेदिति। अजनि उत्पन्नं यत्प्रतिबिंबं यन्मयं बिंबमयं यत्प्रचुरं जले प्रतिबिंबितस्याकाशस्य यथा महाकाशप्रचुरत्वं। एतावता प्रतिबिंबस्य यस्यांतर्बहिर्बिंबस्य

१ काठ. ४।६। २ काठ. ४।६। ३ ब्र. बिं. २।

शास्तुर्व्यापकत्वे तदैक्येऽपि तत्साक्षित्वं च संभवति । तस्मात् शास्तृत्वं च संभवतीत्याहुः—तदविमुच्य नियंतृ भवेदिति । तत्प्रतिबिंबं अविमुच्य स्वस्मात् पृथक् अकृत्वेत्यर्थः । सुषुप्ते लयादौ तमःपुंजक्षुब्धजल इव प्रतिबिंबादर्शनान्मुहुर्बिंबैक्यात् 'सति संपद्य' इति श्रुतेः, तथापि प्रतिबिंबत्वेऽपि कूटस्थत्वेन तस्य व्याप्यस्य व्यापकत्वात् नियंतृ भवेत् नियंता स्यादित्यर्थः । ननु नानात्मवादिभिश्च न्यायप्रमाणपुरःसरमेव स्वमतं साध्यत इत्याशंक्याहुः—सममनुजानतां यदमतमिति । समं सर्वात्मकमेकं ब्रह्म तदनुजानतां अनुभवेन लक्षीकृत्य जानतां यदमतं यदसंमतम् । नहि केवलं कुतर्कैः प्रमाणाभासवाक्यैः साधितोऽर्थस्तत्त्वं भवितुमर्हति, किं तु सतामनुभवसिद्धोऽर्थ एव तत्त्वमित्यर्थः । ननु सतामनुभवन्न एव विदुर्नान्ये, तथा सति शास्त्ररीत्या तदपि मतं कुतो नांगीक्रियत इत्यपेक्षायामाहुः—मतदुष्टतया । मतस्य दुष्टता पूर्वोक्ता तया सतामसंमतमित्यर्थः । अस्मिन्विषये तेषां न्यायाः सर्वेऽपि बाधिताश्च प्रमाणानि प्रमाणाभासमात्राणीति भावः । ननु 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति श्रुतेरात्मन आराग्रमात्रत्वमिति चेन्नैवं, बुद्धेर्गुणेनात्मगुणेन चैवेत्युपक्रमविरोधात् । चकारादुभयगुणसमुच्चयात् बुद्धेरुपाधेर्गुणेन क्वचिन्मशकादियोनिप्राप्तसूक्ष्मत्वेन तत्रात्मगुणेन तावन्मात्रचित्प्रतिबिंबेनाराग्रमात्रो ह्यवरोऽपि दृष्टः क्वचित् कर्मवशादेवमपि दृष्ट इत्यर्थः । अपिशब्दात् नखशिखांतसपदिसुखाद्यनुभवसिद्धत्वात् 'स एष इह प्रविष्ट आनखाग्रेभ्यः' इति श्रवणाच्च । तस्मादणुत्वमसिद्धम् । एवमेव यत्र यत्राणुत्वमुक्तं स्यात्तत्र तत्रतदभिप्रायकमिति चिंत्यम्, न्यायाम्नायानुभवसिद्धत्वात् । अणुत्वप्रमाणाभासस्य श्रुत्यादिप्रमाणविरोधादन्याय्यादनुभवगोचरत्वाभावादणुत्वमसिद्धम् । केचिन्महाजनेष्वेव प्रसिद्धा वेदव्याकर्तारोऽप्यत्र बभ्रमुः । 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति श्रुत्या जीवचैतन्यस्याणुत्वमुपपाद्य नखशिखसुखाद्यनुभवो न स्यादितिचेन्नाडीमार्गेण यत्रयत्र देहे सुखादिहेतुस्तत्रतत्र झटिति गत्वा तदनुभवतीत्याहुः, तन्न घटते अनुभवविरोधात् । अशेषगात्रेषु समुद्भूते दुःखे नहि दुःखानुभवः क्रमेणानुभूयते ततः स्थूलधियामित्यादयः कुतर्काः, केचित् चंदनबिंदुशैत्यस्य सर्वांगव्यापकत्वमिवाणुत्वेऽप्यात्मा व्यापक इत्याहुस्तावता शैत्यगुणस्य व्यापकत्वं न चंदनसारबिंदोर्ललाटार्द्रविनादेशे दृश्यमानत्वात् । ननु गुणगुणिनोरभेदादिति चेदणुप्रमाणं चैतन्यं तस्य व्यापकत्वलक्षणो गुणस्तयोरैक्ये गुणह्रासवृद्धियोगाद्गुणिनोऽपि ह्रासवृद्धिरिति सिद्धे त्वनित्यत्वं प्रसज्येत, यदि भेदस्तह्येकदेशे स्थितस्य न सर्वदेहसुखाद्यनुभवो घटेत, नात्र करकंकणस्येव दर्पणापेक्षा सर्वानुभवत्वात् ।

---

१ छां. ८।१२।२। २ श्वे. ६।८। ३ बृ. १।४।७ ४ श्वे. ५।८।

न च चंदनबिंदुतच्छैत्ययोरैक्यं घटते। पादे क्षिप्तेन जलेन यदि शुष्को ललाटचंदनबिंदुरार्द्रः स्यात् सर्वांगसुखदुःखानुभव एकत्रस्थितस्य चैतन्यस्यापि स्यात्। किंच भवतामुदाहरणद्वयं दीपशिखा तत्प्रभा च चंदनबिंदुस्तच्छैत्यं च। तत्र यथा निवातदेशस्थितस्य दीपस्य गृहाद्बहिः प्रसृतप्रभायाश्चंडवातहतत्वेऽपि नहि दीपशिखा चंचला दृश्यते। सा च फूत्कारमात्रेण नश्यति चंचला वा भवति, तथा यत्र जीवस्तत्रैव तावन्मात्रमांसास्थिनाडीविशेषे वा स्पृष्टे सुखं दुःखं वा तस्यानुभवगम्यं स्यान्न ततोऽन्यत्र स्पृष्टेन तस्यानुभवो वक्तुं शक्यते तदा तु गृहे स्थितस्य कुड्यादिताडनेन ममतास्पदजनितदुःखमिव सर्वांगदुःखमिति वाच्यं तदनुभवविरुद्धम्। तस्मादण्वात्मवादिनो यावंतस्तावंतोऽपि भ्रांताः। कोऽहमिति ज्ञानाभावात्। अलमतिविस्तरैः ॥ ३० ॥ ( १७ ) ॥

अमितता ध्रुवता तनुभृत्तया न विगमादनुमानतयाप्यज।
तव नियंतृतयात्मतया मतं त्वनुभवश्रुतिसिद्धमहं भजे ॥ १ ॥

इति श्रीमद्भागवते दशमस्कंधे श्रीश्रुतिकल्पलतायां श्रुतिस्तुतौ सप्तदशश्लोकव्याख्यानं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ इति त्रयोविंशोऽध्यायः ॥

---

# चतुर्विंशोऽध्यायः।

एवमात्माणुत्वखंडनेन सकलमतखंडनमिति सिद्धे न्यायाम्नायसिद्धाद्वैतवैदिकमतविरोधाभासपरिहाराय सर्वावस्थास्वद्वैतानुभव एव, किंतु बुधाबुधगम्यागम्यत्वं विशेष इति स्फुटीकर्तुमष्टादशश्लोकारंभः। तत्र पूर्वश्लोकेन जीवेश्वरयोर्नियम्यनियंतृत्वे ऐक्यं प्रतिबिंबबिंबवत् प्रतिबिंबस्य स्वदेहे सर्वगतत्वमिति यदुक्तं, तत्र प्राप्तामाशंकां पूर्वार्धेन परिहरंति। ननु बिंबादीश्वराद्यदि प्रतिबिंबरूपा जीवा जायंते तर्ह्यनादित्वभंगादनित्यत्वप्रसंगान्नूतनजीवस्रष्टुरीश्वरस्य वैषम्यापत्तिः, यद्यनादित्वं च तावता नित्यत्वं च सिध्येत्तर्हि नित्यानां पुनरैक्यं न स्याज्जीवत्वभंगप्रसंगात्। ततस्त्वनिर्मोक्षत्वप्रसक्तौ किं वृथा नानात्वखंडनादद्वैततत्त्वोपपादनाचेत्याशंक्य **'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः। अजामेकां लोहितशुक्लकृष्णाम्'** इत्याद्याः श्रुतय इत्याद्याः शंकाः सपरिकराः परिहरंत्यो भगवंतं स्तुवन्ति न घटत इत्यर्धेन—

---

१ श्वे. ४।५।२।

न घटत उद्भवः प्रकृतिपूरुषयोरजयो-
रुभययुजा भवंत्यसुभृतो जलबुद्बुदवत् ॥

प्रकृतिपुरुषयोरुद्भवो न घटते। द्विविधायाः प्रकृतेः द्विविधस्य पुरुषस्य चोद्भव उत्पत्तिर्न घटते इत्यर्थः। कुत इति चेत्प्रमाणसिद्धत्वादिति। तयोर्हेतुगर्भविशेषणेनैव तयोरुद्भवो नास्तीत्याहुः—अजयोरिति। जन्मशून्यत्वस्य तत्रेश्वरस्य वचःप्रामाण्यात् 'अजामेकाम्' इत्यादिश्रुतिसिद्धत्वादिति। एतावता नूतनजीवसर्गाभावान्नेश्वरे वैषम्यमिति सिद्धम्। ननु तर्हि सिद्धं द्वैतानादित्वमिति चेन्नेत्याहुः—उभययुजा भवंत्यसुभृत इति। उभयं च तद्युज्यत इत्युभययुक्। तेनोभययोगेन शुद्धप्रकृतिब्रह्मयोगेनेत्यर्थः। तेनोभययुजा शुद्धमलिनप्रकृतिरित्युभयम्। तत्र शुद्धाया ब्रह्मणो योगे प्रथममीश्वरत्वमाविर्भवति। ततो मलिनायां तत्प्रतिबिंबाविर्भावे तु स एकः प्रकृतिपुरुषयोग एवमुभयफलयुजा हेतुना असुभृतः प्राणाद्युपाधिधारिणो जीवाः सोपाधयो भवंतीत्यर्थः। तस्मादुभययोगात् प्राक् 'नासदासीन्नो सदासीत्तदानीम्' इत्यादि श्रुतिसिद्धाद्वैतमेवासीत्। व्यावहारिकमपि चेत्तन्नासीत्। ततो 'यतः प्रसूता जगतः प्रसूतिस्तोयेन जीवान् व्यचसर्ज भूम्याम्' इति श्रुतेर्यतः पूर्वप्रलयशेषाज्जगतः प्रसूतिर्माया प्रसूता उत्पन्ना प्रसूतिर्भवनक्रिया ततः सा जीवान् व्यचसर्ज। कस्मिन् केनेति चेदुदकुंभेषु प्रतिबिंबकदंबमिवेति विव्रियते। भूम्यां भूमौ पार्थिवे घटे देहे। उपलक्षणमेतत्। पांचभौतिक इत्यर्थः। तोयेन तोयसदृशेन प्रतिबिंबग्राहकेण सत्त्वोपाधिनेत्यर्थः। ननु 'अनादिमायया सुप्तः' इत्यादिश्रुतिसिद्धमायानादित्वात्प्रस्तुतेऽपि न घटत उद्भवः प्रकृतिपूरुषयोरित्युक्तत्वाद्यतः प्रसूतेत्यनेन जीवान्यतो ब्रह्मणो हेतोः प्रसूता न जीवादिरयेवास्त्वर्थ इति चेज्जीवान्व्यचसर्जेत्यनेनैव जीवप्रसवस्य सिद्धत्वात्पुनरुक्तिस्ततः प्रसूता उत्पन्नेत्येवार्थः। अनादित्वादिति चेज्जीवानां चानादित्वे तेषामुत्पत्तिवन्मायायाश्चोत्पत्तिरुच्यते, तथापि श्रुतिषु मायानादित्वमेव, तथैवात्रापि न घटत उद्भव इत्युच्यते तत्सत्यम्। किंतु सर्गकालात्प्राक् मायायाः पृथक्त्वेन विद्यमानत्वस्य वक्तुमशक्यत्वादुभययुजेत्यनेनोभययोगस्योपपादितत्वाद्यतः प्रसूतेति श्रुत्या च पूर्वप्रलयशेषान्निर्विशेषादुत्पन्ना प्रसूतिरित्युच्यते। ततस्तूभययोगात्प्राक् अनादित्वादिति हेतोः पृथगस्तित्वं न घटते, नासदासीदित्यादिप्रमाणविरोधात्। मायायाः पृथगस्तित्वस्य न्यायविरोधाच्च। ब्रह्मणोऽपरिच्छिन्नत्वाद्यत्रास्तीति वक्तव्यं तत्र ब्रह्मैव स्वतः पूर्वसिद्धं तस्मिन्यावन्मायामयत्वं तावद्द्रष्टृत्वं यावद्द्रष्टृत्वं तावद्विशेषाभावो न स्याद्यावद्विशेषस्तावन्निषेधशे-

१ श्वे. ४।५। २ ऋ. सं. ७।८।१७। ३ महा. १।४। ४ गरुड १।१०।

षत्वमेव न तल्लयशेषत्वं वक्तुं शक्यम्। एवं च नासदासीदित्यादिश्रुतिभिरुपपादिते लयशेषमायाया अभाव एवेति प्राप्ते सा त्वनादिमायेत्यत्रान्यत्र चाभिधीयते। तस्मादत्र न्यायस्नायतस्तस्याः प्रलये अविद्यमानत्वं च सर्गादावुत्पत्तिश्च तथाप्यनादित्वं चेति न घटत उद्भवः प्रकृतिपूरुषयोरजयोरित्यनेन तदुभयं साध्यते न घटत इति। केवलोद्भवाभावपक्षे तु तयोर्नोद्भव इत्येवालम्। न घटत इत्यनेन न्यायः सूच्यते। उद्भवेऽप्युद्भवो न घटत इत्यर्थः। अजयोरित्यनेन अजामेकामित्यादिप्रमाणसिद्धत्वं सूत्रितमप्युभययुजेत्यनेन तयोर्योगात्प्राक्प्रकृतेर्विद्यमानत्वं न घटते 'नासदासीत्' इति श्रुतेः। ततस्तस्या उद्भवे प्राप्ते 'यतः प्रसूता' इति श्रुतेः श्रूयते चोद्भवः स न घटते मध्याह्नेऽहरहः सूर्यकरमृगांबुवत् योगो दिनचरमभागे तदभावेऽपि बीजे वटवत्तदस्तीत्यनुमीयते एवमत्र चिंत्यं प्रकृतेरनादित्वात्। ननु 'नासदासीत्' इत्युपक्रमे प्रकृत्यभावे दर्शितेऽपि 'को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः' इति विसृष्टेरनादित्वश्रवणान्नासदासीदित्यादिनिषेधितमायाविशेषलयशेषबीजे वटवत्सत्यत्वेनैव प्रकृतिरस्तीत्युच्यतामितिचेन्मैवम्। मिथ्यात्वात्। 'इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न' इति श्रुत्या तदेवायमर्थः साध्यते। जगत्प्रवाहस्य मृषांबुवत्त्वात्। अयमर्थः श्रुतेः—इयं विसृष्टिर्यत आसमंतात्सर्वेष्वपि सर्गेषु यदा यदा तु बभूवेत्याकारात्सूच्यते तदा तदा स ईश्वरः यदि वा दधे यदि वा न दधे इत्यनुषंगः। एतावता धारयन्नपि सत्यत्वेन न धारयतीत्यर्थः सूच्यते। विसृष्टेर्मिथ्यात्वात्। अयमर्थः—इयं विसृष्टिर्यत आबभूव स ईश्वरः यदि वा दधे किरणकदंबो जलं यदि वा दधे इति न्यायात्, जलवद्दृश्यमानत्वाद्दधेऽपि वस्तुतो न दधे जलत्वाभावान्मृगदृष्ट्या यदिवा दध इतिवज्जीवदृष्ट्या परमेश्वरो जगद्यदि वा दधे इत्यर्थः। ननु वस्तुत्वाभावान्न दधे इत्येवास्त्विति चेत्सत्यम्। सर्वज्ञदृष्ट्या न दधे एव किंत्ववस्तुत्वेऽप्यनादितया जीवदृष्ट्या दृश्यते, ततः सर्वथा खपुष्पवन्न दध इति वक्तुमशक्यत्वाद्यदि वा दधे इत्युक्तम्। तथैव यदि वा नेत्युच्यते, यदि वा न दध इत्यर्थः। ततस्तु जगदस्तीति भात्यपि नास्त्येव नास्तीव भाति मृगांबुवदिति विसृष्टेस्तत्त्वमिति निगमतात्पर्यम्। एतन्निगमरहस्यम्। यथा च गीतासु 'राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्' इत्यादि वक्ष्यमाणमिममर्थमतिरहस्यत्वेनोपक्रम्य श्रीभगवानाह 'मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः। न च मत्स्थानि भूतानि पश्य मे योगमैश्वरं' इति।

---

१ महा. १।४। २ ऋ. सं. ८।७।१७। ३ ऋ. सं. ८।७।११। ४ ऋ. सं. ८।७।११। ५ भ. गी. ९।२। ६ भ. गी. ९।४। ७ भ. गी. ९।५।

मत्स्थानि सर्वभूतानि जीवदृष्ट्या किरणकदंबस्थानि यथांबूनि मृगदृष्ट्या, अत आह न चाहं तेष्ववस्थितः । न हि किरणकदंबोऽबुष्ववस्थितस्तदभावात् । अन्यथा त्वपरिच्छिन्ने यदा सत्यत्वेन भूतानीत्युच्यते, तदा तेष्वपि तथोक्तेषु व्यापकत्वस्य दुर्वारत्वान्न चाहं तेष्विन्यघटनाज्जगन्मिथ्येति भावः सूचितः । अत एव न च किरणेष्वंबवस्ति मिथ्यात्वादित्याह । न च मत्स्थानि भूतानि संतीत्यर्थः । भो पार्थ, तव दृष्टिमंगीकृत्य मत्स्थानि सर्वभूतानीत्युक्तं तथापि नाहं तेष्ववस्थित इति तु तस्मादुक्तं यस्मात्तु मदृष्ट्या, न च तानि मृगांबुसदृशानि मदंबुत्वेन वर्तंते यतस्तेष्वहमस्मीति मया वक्तव्यं तस्मात्त्वमधुना निवृत्तायामविद्यायां मम युक्तिचातुर्यं पश्येत्याह पश्य मे योगमैश्वरमिति, तस्मान्मम दृष्ट्यैवम् तव दृष्ट्या तु संत्येव, ततो नच मत्स्थानि केवलं तानि न संतीति वक्तुं न शक्यते । अनादितया तव दृष्ट्या सत्यत्वे न संतीति दृश्यत्वादित्याह तदुत्तरार्धेन, तत्रापि चरणैकेन 'भूतभृन्न च भूतस्थः'[1] इति भूतभृदेवाहं तव दृष्ट्या यथा विद्यमानत्वेन दृश्यंते तथा तान्यहं धारयामीतिकृत्वा भूतभृदहम् । '**इयं विसृष्टिर्यत आबभूव यदि वा दधे**'[2] इत्यंतश्रुतेः । वस्तुतस्तदभावान्न च भूतस्थः तानि तव दृष्ट्या धारयाम्यतः केवलं न धारयामीति वक्तुमशक्यत्वात् भूतभृत्त्वमंगीकृत्य न च भूतस्थ इत्युच्यते । अतः श्रुत्या केवलं न दधे इति वक्तुमशक्यत्वाद्यदि वा नेत्युच्यते तस्माज्जगत्तत्त्वमेवैतादृशं न्यायाम्नायसिद्धत्वात् । ननु तर्हि किमित्येवंरूपं विश्वं त्वया सृज्यत इति चेदनादितया मदुपाधेः सहजस्वभाव एवेत्थमिति वदन् मिथ्यात्वं स्फुटयति 'ममात्मा भूतभावनः'[3] इति । ममात्मा मच्चिच्छक्तिसृष्टः स भूतभावनः भूतानि भावयति कल्पयतीति तथा । '**असतोऽधि मनः सृजत**' इति श्रुतेः त्रयोदशे श्लोके तदुक्तत्वात् । अत्रेदं तत्त्वम्—ब्रह्मणो निर्धर्मकत्वात् स्वस्मिन् भूतानि संति वा न संतीत्युभयं वृत्तिरूपं ज्ञानं वक्तुं न शक्यते तस्मान्मायाशबलितेन ज्ञानेन तदुभयं चिंत्यम् । तत्र माया द्विविधा । त्रिगुणाऽविद्या, सत्त्वैकमात्रा शुद्धविद्या चेति । तत्र अविद्यादृष्ट्या भूतानि संतीति प्रतीतिर्विद्यादृष्ट्या न संतीति । तत्रार्जुनस्याद्या दृष्टिस्तत्प्रतीत्या मत्स्थानीत्युक्तम् । तथाप्यविद्यादृष्टेर्भ्रमरूपत्वाद्यानि संतीति प्रतीयंते तेषां दृग्भ्रमरूपमात्रत्वान्न ह्यहं तेष्वित्युक्तम् । वस्तुतः स्वदृष्ट्या न च तानि मयीत्युक्त्या जीवपरमेश्वरयोरविद्याविद्याख्यदृष्टिद्वयप्रतीतिरुक्ता । तत्र दृष्टिद्वयप्रकाशकं तत्त्वं यत्तदुभयत्र समं यदधिष्ठानमिति निगूढाभिप्रायः । तस्माज्जगन्मरीच्यंबुवदिति सिद्धम् ।

---

१ भ. गी. ९।५। २ ऋ. सं. ८।७।११। ३ भ. गी. ९।६।

प्रकृतमनुसरति भगवान् । प्रलयानंतरकाले ब्रह्मणि प्रकृतिरस्त्यनादित्वात् मृदि घटादिविकारजननी कापि शक्तिरितिवत् किरणकदंबे मृषांबुप्रसूतिरिव कारणरूपापि कार्यरूपेणाविर्भूता, पुनः कारणरूपेण दिनांते रविकरेषु मृषांबुवत् बीजे वटवत्, किंतु मृषात्वेऽपि तददर्शनादपरेऽहनि वर्धमानकाले दिनपूर्वार्धे पुनर्मृषांभसः प्रादुर्भावस्य दर्शनात् कार्यरूपाविर्भवतीति यतः प्रसूतेत्यादिश्रुतिभिः प्रकृतिप्रादुर्भाव उच्यते। ततोऽत्र प्रस्तुतेऽप्युभययुजा भवंत्यसुभृत इत्यनेन मृषांबुरविकरयोगवन्मायाब्रह्मणोर्योगस्तेनोभययोगेन द्रष्टृत्वधर्म उत्पद्यते। ततस्त्वसुभृतो भवंति 'स ऐक्षत बहु स्यां प्रजायेय'[1] इति श्रुतेस्तदीक्षणाद्गुणे फणिवत्प्राणादिजीवोपाधयो भवंति। तत्र सत्त्वस्य नैर्मल्यात्सहैव प्रतिबिंबत्वेन प्रवेश इत्यसुभृतः सोपाधयो जीवास्ते उभययुजा त्वेवं भवंति, तथा सति तदुभययोगात्प्राक् प्रकृतेरभावात्प्रादुर्भूतायां प्रकृतावुभययोगो भवतीत्यतः प्रकृतेः सादित्वप्रसंगः प्रथममेव परिहृतः—न घटत उद्भवः प्रकृतिपूरुषयोरिति । सूर्योदयकाले किरणकदंबे जलभासाभावादासन्नमध्याह्ने यथांबुभास उद्भवति, तथा सर्गादौ प्रकृतिस्तथापि ततः प्राक् सूर्यकरस्थमेव तत्तोयम्। ततोऽहरहरुद्भवेऽपि नोद्भवो घटत इति भावः। एवं यथा शुद्धा प्रकृतिस्तथैव जीवोपाधिः स चानादितया प्रतिसर्गं सति द्रष्टरि गुणात्फणिरिवोत्पद्यतेऽपि गुणानादिसादित्वात्तदनादिसादित्वं न पृथक्। न च वाच्यं ब्रह्मणो निर्धर्मकत्वान्मायाया अवस्तुत्वात् कथं तस्यास्तदंतर्भूताया आविर्भाव इति । अधिष्ठानस्य विवर्तजनकत्वात् । नन्वधिष्ठाने विवर्तस्य दृष्टियोगादुत्पत्तिर्दृश्यते न स्वतो गुणे फणिरुत्पद्यते। तस्माद्ब्रह्मणि न घटते धर्मराहित्यादिति चेत्सत्यं, किंतु रविकरकदंबे विनापि द्रष्टारं मृषांभ उत्पद्यते । दिनांते द्रष्टरि सत्यपि जलाभासस्यादर्शनान्मध्याह्ने जलाभावेऽपि जलाभास उत्पद्यते। तदितरकाले तस्यापि दृष्टिगोचरत्वान्मध्याह्न एव यदा दृश्यते तदा तु द्रष्टारमनपेक्ष्यैवोत्पद्यत इति सिद्धम्। ननु यदि द्रष्टारमनपेक्ष्य किरणकदंबे मृषांभ उत्पद्यते चेत्सत्यमिति ब्रूम इति चेन्नैवम् । जलकल्लोलस्य द्रष्टारमनपेक्ष्योत्पद्य लीयमानत्वेऽप्यसत्यत्ववत् । ननु कल्लोलस्य वातकृतत्वान्मृषांभसः स्वत एवोद्भूयमानत्वान्न साम्यमितिचेद्गुडसदृशं फलमित्यत्राप्युपमा न स्यात् वृक्षात्फलवदिक्षुदंडाद्गुडोत्पत्तेरसाम्यात् । तस्माज्जलकल्लोलवद्द्रष्टारमनपेक्ष्योत्पन्नस्य मृषांभसोऽपि मिथ्यात्वं घटत एव। न हि दृष्टांते सर्वसाम्यमिति न्यायात्। ननु गुडस्याग्निपाकवत् फलस्यार्कसंपर्कसाम्याद्युक्तमितिचेदिक्षुदंडनाशं विना न रसो गुडकारणीभूतः, एवं न हि फलकारणस्य पुष्पस्योद्गमे तरुनाशो दृश्यते ।

---

१ मुं. १।१।७।

फलोद्गमवद्वहुद्रुजीविनस्तरोः प्रत्यब्दं पुष्पवत् फलोद्गमदर्शनात्। तस्मान्नहि दृष्टान्ते सर्वसाम्यमिति न्यायातिक्रमरूपमीमांसया तु न कोऽपि दृष्टान्तो घटते। तत्र यद्यत्साम्याधिक्यं तत्तदेव ग्राह्यम्, नतु यत्र साम्यभंगस्तत्रोपमाखंडनावसरो न्याय्यः। 'यथोर्णनाभिः सृजते गृह्णते च'[1] इत्यादिश्रुत्या ब्रह्मणो जगदुद्भवस्योपमीयमानत्वात्। ननु किमपि यत्स्वत एवोत्पद्यते किरणकदंबात्तज्जलवद्भातीत्यतो मृषांभ इत्युच्यते चेत्तत्रोदकभास एव मिथ्या पानाद्यसंभवात्, किंतु जलवद्यत्किमपि भाति तत्सत्यमिति ब्रूम इति चेद्वल्मीकरज्जुसर्पयोः सत्यासत्ययोः स्वप्रकाशपरप्रकाशत्वलिंगयोर्यदत्र लिंगं सिध्येत तदेव ग्राह्यम्। तत्र सर्पिणीजठरोद्भूतांडसमुत्पन्नः सर्पः सर्पिण्यंडंविनैव यथा स्वत एव प्रकाशते, तथा यदि किरणकदंबोद्भूतमंभः किरणकदंबमृते स्वत एव तत्प्रकाशेत सत्यमित्यंगीकर्तव्यमेव। ननु गुणादुत्पन्नफणिवद्गुणप्रकाश्यवत् किरणसमुद्भूतं किरणैः तत्प्रकाश्यं तर्हि जलवद्यत्किमपि दृश्यते तदपि दृश्यतेऽपि नास्ति रज्ज्वहिवत्। ननु तर्हि जलत्वाभावेऽपि जलवदिदमपि तत्सत्यमिति चेत्सर्पवत् किमपि रज्ज्वाद्यपि सत्यं स्यात्। ननु न हि सर्पो द्रष्टरि निरपेक्ष इति चेन्मृदि घटोऽपि न द्रष्टृनिरपेक्षस्तथापि मिथ्येतिवत् तथा प्रकृतिः। तस्यां प्रादुर्भूतायां तु तदेव जगत्साक्षित्वादिधर्मैर्द्रष्टा परमेश्वरः प्रादुर्भवतीति सिद्धे जीवाः सोपाधयो भवंति। ननु तर्हि मध्याह्नकालोऽत्र दृष्टान्ते निमित्तं दृश्यते तत्र किरणकदंबस्थानीये ब्रह्मणि निमित्तांतरस्यादर्शनान्नहि दृष्टांतदार्ष्टांतयोः साम्यं घटत इति चेन्नहि दृष्टान्ते सर्वसाम्यमिति न्यायान्न मृगराजमध्येयं पुच्छाभावादिति वक्तुं न शक्यते, तथापि ब्रह्मैव तत्र निमित्तं तच्च लयशेषस्य ब्रह्मणः कालैकमात्रत्वात्संगच्छते। यथा चक्षुषो घटादिदर्शने सूर्यो निमित्तभूतः तथात्र मध्याह्नकालः किंतु सूर्यदर्शने सूर्य एव यथा निमित्तकारणं तथा काल एव यत्र करकदंबस्थानीयस्तदा कालस्य कालान्तरनिमित्तं नापेक्ष्यते रविदर्शने चक्षुषो रव्यंतरापेक्षाभावात्। यथा च तरोः फलोद्गमस्तथा ब्रह्मणि मायाविर्भावस्तत्र वसंतादिकालो निमित्तमिति चेत्कालवृक्षस्य कालशक्तिफलकालोऽपि स एव कालः। यथा तु घटादिदर्शने दीपो निमित्तमपि न दीपावलोकने दीपांतरापेक्षा प्रसज्यते तस्मान्न न्यायविरुद्धो न च प्रमाणविरुद्धः, किंतु न्यायाम्नायसिद्धोऽयमद्वैतसिद्धांत इति सिद्धम्। एतावता द्विविधप्रकृतेः पुरुषस्य चानादित्वान्न नूतनजीवस्रष्टृत्वं न चेश्वरस्य वैषम्यमिति सिद्धम्। ननु–न घटत उद्भवः प्रकृतिपूरुषयोरजयोरुभययुजा भवंत्यसुभृत इत्येकपदावशिष्टेन पूर्वार्धेन अत्रावशिष्टं जलबुद्बुदवदित्येकं पदम्। तेनानादित्वेऽपि

---

[1] तै. २।६।

नित्यत्वेऽपि जीवानां मुक्तौ नानादित्वनित्यत्वभंगस्ततो मुक्तेः संभवान्नानिर्मोक्षप्रसंग इति साध्यते। कथंभूता असुभृत इत्यपेक्षायां श्रुतय आहुः—जलबुद्बुदवदिति। जलबुद्बुदवद्भवंत्यसुभृत इति संबंधः। अयमर्थः—यथा जलं सत्यं वस्तुत्वान्मृद्वत्। बुद्बुदानां वाचारंभणत्वं अवस्तुत्वात् घटवत्। तत्र बुद्बुदत्वेऽपि यथा जलस्य जलत्वभंगाभावेऽपि अपरिणामित्वेऽपि बुद्बुदाकारो वस्तुत्वरहितः कश्चन विकार उत्पद्यते एवं चिदेकरसे ब्रह्मणि ब्रह्मत्वभंगाभावेऽपि अपरिणामित्वेऽपि मायया असुभृतो जलबुद्बुदवद्भवंति। तत्र जलस्य चलत्वपरिच्छिन्नत्वस्वभावत्वाद्बुद्बुदत्वे जलचांचल्यपरिच्छेदो दृश्यते। ब्रह्मणोऽचलत्वादपरिच्छिन्नत्वान्मायापरिणामरूपा एवासुभृतां प्राणाद्युपाधय उद्भवंति। जलत्वान्यथात्वानुपपत्तिवद्ब्रह्मत्वान्यथानुपपत्तेः। सिंहोऽद्रिकंदरादिव राजा नगराद्बहिर्गत इत्युभयसाम्येऽपीत्यत्रोभयनिमित्तसाम्येऽपि सिंहस्य छत्रचामराद्यभावात्स एक एव राजाऽऽतपत्रादिसहितो निर्गच्छति एवमचलत्वापरिच्छिन्नत्वादिरहितोपादानाज्जलाद्बुद्बुदा इवाचलत्वापरिच्छिन्नत्वादिस्वरूपोपादानात्प्राणाद्युपाधयो भवंति। तत्र जलत्वान्यथात्वानुपपत्तेर्न यथा रसमाधुर्याद्यन्यथात्वम्, तथा ब्रह्मत्वान्यथानुपपत्तेर्नाचलत्वापरिच्छिन्नत्वाद्यन्यथात्वम्। तस्मात्स्थूलसूक्ष्मरूपस्य जगतोऽपि ब्रह्मैकमात्रत्वे नहि ब्रह्मत्वान्यथात्वमिति सिद्धम्। ततो जलबुद्बुदवत्प्राणाद्युपाधयस्तत्र बुद्बुदेषु यथा जलच्छाया दृश्यते बुद्बुदेषु मुखादिप्रतिमुखदर्शनात्तच्चित्प्रतिबिंबं प्राणाद्युपाधिषु ततोऽसुभृतो जलबुद्बुदवदित्युक्तम्। ननु यथा जलस्य जले प्रतिबिंबमिति प्रसिद्धम्, तथा ब्रह्मणि ब्रह्मप्रतिबिंबमिति सिद्धमिति चेन्नैवम्। समुद्रे मुखस्यैकत्र प्रतिमुखैकदर्शनात् बुद्बुदेष्वनेकेष्वनेकप्रतिमुखत्वादुपाधिभेदाद्भेद इति न विरुद्धम्। ननु बुद्बुदानां जलमुपादानं वायुर्निमित्तकारणं नह्यद्वितीये ब्रह्मणि द्वितीयं कारणं दृश्यत इति चेत् न हि सर्वगतवातेन बुद्बुदा भवंति किंतु महता वायुना तस्य क्वचिद्यथाभ्युत्थानम्, तथा सर्गादिकाले जगत्कारणभूतायाः प्रकृतेः किरणकदंबान्मृपांबुवत्प्रसूतिः, सा च ब्रह्म चेति कारणद्वयात्प्रकृतिनिमित्तभूतं जगदुत्पद्यते, न हि दृष्टान्ते सर्वसाम्यं तथापि लब्धसाम्याधिक्यग्रहणादबाधितोऽयं न्याय इति सिद्धम्। समीरस्थैर्येण यतो बुद्बुदास्ततो महता वायुनेति सिद्धं, स क्वचिदेव न सर्वदा न घटत उद्भवः प्रकृतिपूरुषयोरजयोरुभययुजा भवंत्यसुभृत इत्यन्तेन। अत्रावशिष्टं जलबुद्बुदवदित्येतदस्मिन्नर्थे। अथानादित्वे नित्यत्वेऽपि जीवानां मोक्षस्ततो नानिर्मोक्षप्रसंग इति साध्यते जलबुद्बुदवदिति पदैकेन। कथंभूता असुभृतो, जलबुद्बुदवत्। अयमर्थः—जलं वस्तु बुद्बुदा वाचारंभणमात्राः मृदि घटवत्, एवं ब्रह्मणि चिदेकरसे असुभृतां प्राणाद्युपाधयस्तत्र बुद्बुदेषु यथा तस्यैव जलस्य प्रतिबिंबानि, तथा चिच्छायाभासा जीवा अनादयः एवं साधितेऽप्यना-

दित्वे सिद्धेऽपि नित्यत्वे मुक्तावीश्वरैक्येऽपि न च तेषां नित्यत्वभंगप्रसंगः । स्वतःसिद्धस्वरूपैक्यात् । सिद्धे जले प्रतिबिंबस्य पृथक्प्रतीतेर्नष्टे बुद्बुदे पुनर्बिंबैक्यात् । न च तावता मुक्तौ जीवत्वोपाध्यभावाच्चित्प्रतिबिंबानित्यत्वप्रसंगः । उपाधेर्मिथ्यात्वान्नहि फणिनाशे गुणनाश इति न्यायात् नहि बुद्बुदनाशे जलनाशः । नच प्रतिबिंबबिंबैक्ये प्रतिबिंबनाशः स्वरूपैक्यादिति भावः । ननु न्यायाम्नायतः साधितमप्यद्वैतं तत्त्वं नांगीकुर्मः, खपुष्पवत्कस्याप्यनुभवाभावादिति चेच्चार्वाकयोग्येयं शंका । जन्मांतरस्य कर्मफलस्येश्वरस्य स्वर्गादेश्च भूलोकवासिनां खपुष्पतुल्यत्वात् । तच्च गौतमादिभिः प्रत्यक्षेतरस्य साधितत्वादलं तत्खंडनैः, किंतु वैदिकमानिनां तन्मतपुरःसरोऽयं पूर्वपक्ष इति चेदद्वैतस्य 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्'[1], 'नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ'[2] इत्यादिश्रुतिभिर्गुर्वेकगम्यत्वाभिधानात्तत्त्वविद्गुरुरसत्त्वानामपरोक्षोपदेशानुग्रहात्प्राक् न्यायाम्नायसिद्धमद्वैतमंगीकृत्य तदनुभवजिज्ञासा कर्तव्या, अपरोक्षोपदेशात्प्रागनुभवाभावाच्चार्वाकमतमेवांगीकर्तव्यमिति सिद्धम् । जन्मांतरादेरिव खपुष्पवत्त्वात् । ननु स्वर्गादेः प्रमाणसिद्धत्वादंगीकुर्म इति चेद्ब्रह्मानुभवस्यापि श्रुतिस्मृतिसिद्धत्वादंगीकुरुत । एवं विवादवादिनां मतखंडने सिद्धेऽपि संवादरीत्यातु जीवानामविद्यया गुणः फणिवद्दृश्यतेऽपि दृष्टिर्गुणमेव स्पृशतीति न्यायात्सर्वास्ववस्थास्वद्वैतानुभव एव किं त्वविद्यया सोऽप्यनुभवो न प्रकाशते इति स्फुटीकुर्वन्त्यः श्रुतयोऽथ द्वैतमेव खपुष्पत्वेनोपपादयंत्यो भगवंतं स्तुवंत्युत्तरार्धेन—

**त्वयि त इमे ततो विविधनामगुणैः परमे**
**सरित इवार्णवे मधुनि लिल्युरशेषरसाः ॥ ३१ ॥ (१८) ॥**

तत्रादौ 'येन रूपं रसं गंधं शब्दान्स्पर्शांश्च मैथुनान् । एतेनैव विजानाति'[3] इत्याद्याः श्रुतयः स्वप्नजागरयोरद्वैतानुभवमाहुः—त्वयि त इमे ततो विविधनामगुणैरिति । ततः उभययुजा भवंत्यसुभृत इति यः सोपाधीनां जीवानां प्रादुर्भाव उक्तस्तदनंतरमित्यर्थः । त इमे जीवा विविधनामभिर्गुणैश्च, नामगुणात्मिकाभिर्वृत्तिभिरित्यर्थः । त्वयि त्वय्येव वर्तंत इत्यर्थः । अयं भावः—शब्दादिश्रोत्रादींद्रियाणि नामानि । श्रोत्रादिगम्यत्वादयश्च श्रोत्रादयश्च शब्दादिग्राहका गुणाः एवं नामगुणैस्तैर्विषयैस्तद्ग्राहकैरिंद्रियैर्जाग्रत्स्वप्नयोर्जीवानां वर्तमानत्वस्य चिदेकप्रकाश्यत्वाच्चैतन्यं विना स्विंद्रियविषयाणां प्रतीत्यभावात्स्वप्रकाशत्वराहित्याद्गुणे चिदात्मनि फणित्वमिति सिद्धम् । वल्मीकसर्पस्य प्रकाशकांतरापेक्षा-

१ छा. ५।११।७। २ का. १।२।८। ३ काठ. ३।४।

राहित्यवन्नहि गुणफणेः स्वतो गुणंविना प्रकाशमानत्वं तथा विषयेंद्रियाणां चिदेकप्रकाश्यत्वम्। यथा च गुण एव फणिस्तथा चिदात्मैव विषयेंद्रियाद्यशेषमिति सिद्धम्। चित्प्रकाश्यस्य मिथ्यात्वात् चिदात्मैव जाग्रत्स्वप्नदेहाद्यशेषजाग्रत्स्वप्नप्रपंचद्वयं, किंतु स्वरूपाविद्यया तादृशानुभवराहित्येऽपि विविधनामगुणैस्त्वय्येवेत्युक्तं द्रष्टव्यम्। अत एव—भवंत्यसुभृतो जलबुद्बुदवदिति पूर्वार्धेऽप्युक्तम्। सिंधुजलबुद्बुदजलयोरिव बिंबभूतसिंधुजलस्य बुद्बुदगतप्रतिबिंबस्यैक्यम्। बुद्बुदाकारस्य जलादितरवस्तुत्वाभावात्। दृश्यतेऽपि नास्त्येव मृदि घटवत् शुक्तौ रजतवत्। एवं च बुद्बुदस्यापि बुद्बुदत्वेन भेदाभासेन सिंधावेव विद्यमानत्वमेवं त्वयि त इमे विविधनामगुणैरित्युक्तम्। एवमेव श्रुत्यर्थोऽपि '[1]येन रूपं रसं गंधं शब्दान् स्पर्शांश्च मैथुनान्। एतेनैव विजानाति किमत्र परिशिष्यते। एतद्वै तत्' इति। अस्याः संग्रहतोऽर्थः एतद्वैतदित्यन्वयः। एतत्सर्वानुभूतं वै प्रसिद्धं जीवचैतन्यं तु तद्ब्रह्मेत्यर्थः। तदुक्तं भगवता—'[2]ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति। तस्मात्तच्छब्देन जगदुपादानकारणं ब्रह्मेत्युच्यते। यथा मृदुपादानके घटादिप्रपंचे स घट इत्युक्ते तच्छब्देन मृदेवोपदिश्यते घटादेरवस्तुत्वात्, ततस्तच्छब्दो मृन्मयप्रपंचे मृद्वाचक एवं प्रकृत्यादिचतुर्विंशतितत्त्वात्मके जगति यद्यत्तदित्युच्यते तत्तद्ब्रह्मैव '[3]सर्वं खल्विदं' इति श्रुतेः जगदुपादानकारणत्वात् कार्यस्य मिथ्यात्वात्। घटस्य मृद्वज्जगत आद्यंतयोर्विद्यमानत्वान्मध्येऽपि तदेकमात्रत्वादित्येवमर्थगर्भितत्वात्तच्छब्दवाच्यं ब्रह्मैक्यं विहितं द्रष्टव्यम्। ननु स घट इत्युक्ते दृष्टिर्मृदं स्पृष्ट्वा घटाकारं पश्यति न तथा ब्रह्म स्पृष्ट्वा स्थिरचरादि किमपि दृष्टिः पश्यति। तत आद्यन्तयोः कारणत्वेन विद्यमानत्वेऽपि सत्यत्वेन ततः प्रपंच उत्पद्यते इति चेद्यथा मृदं स्पृष्ट्वा दृष्टिर्घटं पश्यति तथैव बुद्धिर्ब्रह्म स्पृष्ट्वैव चक्षुरादींद्रियाणि च तद्गोचररूपादिविषयांश्च विजानातीत्यभिधत्ते। '[4]येन रूपं रसं गंधं शब्दान्स्पर्शांश्च मैथुनान् विजानाति' इति। न हि चैतन्ययोगं विना बुद्धेरिंद्रियादिविषयज्ञानं संभवतीत्यखिलानुभूतम्। न हि करकंकणस्य दर्पणापेक्षा। तच्च चैतन्यं ब्रह्मैव। '[5]प्रज्ञानं ब्रह्म' इति श्रुतेः। '[7]येन वा पश्यति' इत्याद्युपक्रमात्। '[6]सत्यं ज्ञानमनंतं ब्रह्म' इत्यनेकश्रुतिसिद्धत्वात्। ननु जीवचैतन्यमन्यदिति चेत्प्रज्ञानं ब्रह्मेत्युपक्रमे कोऽयमात्मेति वयमुपास्महे '[6]कतरः स आत्मा' इति प्रश्नः, तत्रोत्तरम् '[7]येन वा पश्यति येन वा शृणोति' इति, यज्जीवचैतन्यं

---

१ का. २।१।३। २ भ. गी. १७।२३। ३ छा. ३।१४।१। ४ का. २।१।३। ५ ऐत. ५।३। ६ तै. २।१। ७ ऐत. ५।१।

तदेवोपसंहारे प्रज्ञानं ब्रह्मेत्युक्तत्वादत्राप्येतद्वै तदित्युच्यते । ततः श्रुतिसिद्धोऽयमात्मा ब्रह्म । यस्तु रूपरसादीन्बुद्धियोगेन भुनक्ति, येन सचेतना सती बुद्धिश्च रूपरसादीन्विजानाति, किंतु साक्षाद्ब्रह्मणो भोगो न संभवतीत्यनोऽयमात्मा तस्य प्रतिबिंबत्वेन निश्चितोऽप्येतद्वै तदित्यैक्यं विधीयते । 'तत्त्वमसि' इति श्रुतेः । 'अयमात्मा ब्रह्म' इत्याद्यखिलाम्नायसिद्धत्वात् । नन्वहं सुखी दुःखीत्यादिप्रत्ययगम्यं चैतन्यं जीवात्मेत्युच्यते तस्य देहैकमात्रव्यापकत्वं घटेत, न देहाद्बहिस्तथासति विंबस्यैव भोग इति सिद्धे सिद्धांतभंगः । चैतन्यं विना तु बुद्धेर्विषयेंद्रियादिज्ञानं न संभवति, सा च प्रतिविंबचैतन्येन सचेतना सती विषयेंद्रियादिकं जानाति । तस्माद्देहाद्बहिःस्थितस्य विषयस्य ज्ञानं न संभवतीति सिद्धम् । जीवोपाधौ प्रतिबिंबितस्य देहाद्बहिर्विद्यमानत्वाघटनादित्येवं पूर्वपक्षमनुभवान्निराकरोति श्रुत्या श्रुतिसुखो भगवान् । किमत्र परिशिष्यते । एतेनैव विजानातीत्यनुषंगः । अत्र संसारदशायां जाग्रदाद्यवस्थासूपाधिविशिष्टं तदेव सुषुप्तौ किं परिशिष्यते । निर्विशेषचिदानंदस्वरूपं विनात्रान्यत्किमिति पूर्वपक्षवादिनमुद्दिश्य कटाक्षेणाक्षेपः । अयमर्थः—त्वयापि सुप्तोत्थितेन सुखमहमस्वाप्सं न किंचिदवेदिषमित्युच्यते तत् किं? शून्यमिति चेत्, शून्यस्य सुखस्वरूपत्वं न स्यात्, अहं सुखी दुःखीत्येतत्प्रतीतिगम्य आत्मा स इति चेदहंप्रत्ययसद्भावे न किंचिदवेदिषमित्येवं मा वद, तस्मात्तदानीं प्रतिबिंबस्योपाधिविश्लेषाद्बिंबैक्यं तत एवाहंप्रत्ययाभावः । यद्यहंप्रत्ययो भवति चेत्, तदा तु सुषुप्त्यवस्थैव नास्तीति स्याद्यावदहमिति प्रतीतिस्तावत्तदवस्थायाः स्वप्नजागरांतर्भूतत्वात् । तस्मात्स एव निर्विशेषात्मा त्वम् । यस्मात्प्रलयशेषादिदं जगदुत्पद्यते 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः'[1] इति श्रुतेः । अतएव श्रुत्यापि किमत्र परिशिष्यत इत्युच्यते । अत्र संसारदशायां स्थितिकालेऽपि किमवशिष्यते । यतस्त्वदमेव प्रलयानंतरशेषं नासीदित्यादिश्रुतेर्यथा, जीवेश्वरोपाधिलये तु न साक्षित्वादिधर्मस्तथैव चात्रापि धर्मराहित्यात् । यद्यपि सुषुप्तिसाक्षिकत्वं श्रुतिभिरुपपाद्यते तथापि तदीश्वरोपाधिविशिष्टस्येति वक्तव्यम् । प्रतिबिंबस्य चिन्मात्रैक्यं नेश्वरोपाधिसाक्षित्वप्रत्ययज्ञानमस्यास्तीति वक्तुं शक्यते । तस्मात्सुषुप्तौ जीवात्मनः प्रतिबिंबरूपस्य तमःपंकशबलिते सत्त्वोपाधिजले तत्राद्दश्यत्वाद्बिंबैक्यमिति वाच्यम् । 'सति संपद्य न विदुः सति संपत्स्यामः'[2] इति श्रुतेः जाग्रत्स्वप्नयोस्तमःपंकक्षोभराहित्यान्निर्मलसत्त्वजले प्रतिबिंबचैतन्यस्य देहमात्रव्यापकत्वमिति नभोवत्सर्वगतं निर्विशेषबिंबचैतन्यम् । 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुतेः । ततस्तत्सोपाधिं स्वप्रतिबिंबं व्याप्यैव तिष्ठतीति सिद्धे बुद्धेरुभयचै[illegible]

१ तै. २।१। २ छा. ६।९।२। ३ छा. ७।२४।१।

श्रयत्वं सिद्धम्। तथा सति बिंबचैतन्येनैव बहिःस्थितान्विषयान्बुद्धिर्विजानातीति श्रुतिरभिधत्ते। किमत्र परिशिष्यते? एतेनैव विजानातीति। येन रूपं रसमित्यादि विजानातीत्युक्त्वापि एतेनैव विजानातीति पुनरुक्तिपरिहारपर्यालोचनयैवमर्थः सूत्रितः। ननु येन चैतन्येन बुद्धिर्विषयान् जानाति तस्य विषयभोग इति दृश्यते। चैतन्यांतरेणेति प्राप्ते त्वीश्वरस्य जीवांतरस्य च दुःखादिसंबंधः सिद्ध इति न च वाच्यं किमत्र परिशिष्यते इति। यत्सुषुप्ताववशिष्यते सुखमहमस्वाप्सं न किंचिदवेदिषमित्यनुस्मर्यते च, तत्रानुभवविशेषस्यादर्शनादहं सुखी दुःखीति प्रत्ययाभावात्तस्य च बुद्धियोगेनानुभवधर्मत्वं दृश्यते। काष्ठाद्युपाधियोगेनाग्नेरिव प्रतीतिस्तत्र बुद्धीनामनेकत्वात्प्रत्ययस्याहंकारमूलत्वादहं जानामि मया दृष्टमास्वादितमाघ्रातं श्रुतं स्पृष्टमित्याद्यनुभवसिद्धत्वात्। तस्य चाहंकारस्य देहमात्रव्यापकत्वाद्यत्र सुखदुःखाद्यनुभवस्तत्रैव बुद्धिगम्यज्ञानस्याश्रयस्ततो बिंबचैतन्येन विषयज्ञाने सिद्धेऽपि यत्राहंकारस्तत्रानुभवः, स च जीवमात्रव्यापको जीवात्मन्येव, ततोऽहं सुखी दुःखीत्यनुभवः स तु देहे प्रतिबिंबचैतन्यस्वरूपः। तस्माद्बिंबस्य नेश्वरस्य दुःखादिसंबंधः। न च जीवांतरस्य जीवितांतरबुद्धिगम्यं ज्ञानं किंतु सर्वसाक्षिण ईश्वरस्यैव तद्दुःखादिसाक्षित्वं नत्वनुभवः, तस्मात्ततो नात्र शंकावसरः संशयावशेषश्च। एवं स्वप्नजागरयोरद्वैतानुभवगम्यमिति श्रुत्यात्र सिद्धम्। एवं जाग्रत्स्वप्नयोरद्वैतानुभवं साधयितुं 'येन[1] रूपं रसं गंधं' इत्यादिकठवल्ल्युपनिषद्श्रुत्या स्तुतो भगवान्, तत्र बिंबचैतन्याश्रयेणैव बुद्धेः प्रतिबिंबव्याप्तदेहाद्बहिःस्थितविषयग्रहणं जगति सर्वत्र प्रसरणं चेति साधयितुं किमत्र परिशिष्यते। एतेनैव विजानातीति सुषुप्त्यद्वैतं स्फुटीकृतं न तु श्रुतिस्तुतौ, यदत्र सुषुप्त्यद्वैतं वर्ण्यते तदेतत्। यत इममेवार्थं '**यथा[2] मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान्समवहारमेकतां गमयंति ते यथा न विवेकं लभंतेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सौम्येमाः प्रजाः सति संपद्य न विदुः सति संपत्स्यामः**' इति मुखाः छांदोग्यश्रुतयः स्वगतश्रौतपदसूचनापुरःसरमाहुः—मधुनि लिल्युरशेषरसा इति। मधुनि क्षौद्रे अशेषरसा इति भ्रमरजातिविशेषमक्षिकाभिरुद्गीर्णा अशेषपुष्परसा लिल्युर्लीना बभूवुरिव त्वयि त इमे इति उत्तरार्धोपक्रमत्रिपदसंबंधः, त इमे जीवाः पूर्वार्धोपपादिताः सुषुप्तौ त्वयि मधुनि पुष्परसा लिल्युरिव। लिल्युरितीवशब्दस्यात्राप्यनुषंगः। सरित इवार्णव इत्यत्रोक्त इवशब्दोऽत्राप्यन्वेति। अयमर्थः—मधुन्यशेषवृक्षरसास्तिष्ठंत्यप्येकजातिमाधुर्येण निर्विशेषतया न पृथक्त्वेन प्रतीयंते। न तत्र यद्यद्वृक्षस्य यो यो

१ कठ. २।१।३। २ छां. ३।२।१।

रसः स स स्वस्ववृक्षलिंगं किमपि दर्शयति, तद्वित् तद्रसस्त्वे जीवोपाधिजले तमः-पंककलुषीभूते, नानादेहोपाधिगतप्रतिबिंबचैतन्यस्य बिंबैक्ये तु न तत्र वर्णाश्रमजातिदेहादिलिंगं किमपि प्रतीयते, किंतु निर्विशेषब्रह्मात्मनैव सर्वेषां सुषुप्तावव-स्थानमिति भावः । तथा च श्रुतिः 'यत्र लोका न लोका देवा न देवा वेदा न वेदा यज्ञा न यज्ञा माता न माता पिता न पिता स्नुषा न स्नुषा चांडालो न चांडालः पौल्कसो न पौल्कसः श्रवणो न श्रवणस्तापसो न तापस एकमेतत्परं ब्रह्म विभाति निर्वाणम् । न तत्र देवा ऋषयः पितर ईशते प्रतिबुद्धः सर्वविद्यया' इति । अत्र लोकवेदयज्ञादीनां सुषुप्तौ प्रतीत्यभावात्सुप्तानां तदभावः, यद्वा तत्तदधिदेवतानां सुषुप्तौ तत्तदभिमानित्व-राहित्यादभावः । मात्रादीनामहमर्भकाणां मातेति स्वप्नजागरयोरिव प्रतीत्यभा-वान्माता न मातेत्याद्युच्यते । यत एकमेतत्परं ब्रह्म विभाति न तत्र देवा ऋषयः पितर ईशत इत्यनेन न तत्र कस्यचित्सामर्थ्यप्रभावोऽप्यस्तीति सूच्यते । प्रति-बुद्धस्तु सर्वो यथाज्ञानं यथासामर्थ्यं सर्वं प्राप्नोतीत्यर्थः । तस्मात्सुषुप्तौ तु सुतरामद्वैतं न यत्र द्वैतप्रतीतिर्न चाद्वैतानुभवः । सत्त्वस्य तमोलीनत्वात्स्वतो निर्धर्म-कत्वात् । काष्ठं प्रकाश्यं विनापि तत्प्रकाशकस्याग्नेः प्रतीत्यभाव इति न्यायान्न विरुद्धम् । प्रकाशकस्यापि प्रकाश्ययोगेन प्रतीतेः प्रतीयमानत्वात् । एवमवस्थात्र-येऽप्यद्वैतमनुभूयमानमविद्यया नाज्ञजनानुभवगम्यमित्युक्तम् । अथ त्वयि त इमे इत्यादिना श्रुतयः सोपपत्तिकं दृष्टांतेन तुर्यायां विद्यावतामनुभवसिद्धमद्वैतमुप-पादयंति — परमे सरित इवार्णव इति । ते इमे इति पूर्वपराभ्यामन्वयः । त इमे पूर्वोक्ता जीवास्त्वयि परमे केवलेऽर्णवे समुद्रे सरित इव लिल्युरित्युत्तरपदेनान्वयः । अयमर्थः—ज्ञाते तत्त्वेऽपि प्रारब्धशेषभोगायावशिष्टदेहेऽपि ब्रह्मैक्यमित्यद्वैतानुभव-निदर्शनार्थोऽयं दृष्टांतः । सरितां नामरूपाणां विद्यमानत्वेऽपि संगममुखे यथा समुद्रै-क्यम्, तथा संसारदुःखानुभविनामेव जीवन्मुक्तावद्वैतानुभव इति भावः । न चेद्बुद्बुदा इवार्णवे लिल्युरिति दृष्टान्तो विवक्षितो भवेत् । ऐक्यहेतुर्जीवन्मुक्तिविषये-यमुपमेति द्रष्टव्यम् । तथा च श्रुत्यर्थोऽपि । 'यथा नद्यः स्यंदमानाः समुद्रेऽस्तं गच्छंति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति । स्यंदमानाश्च नद्यः नामरूपे विहाय समुद्रेऽस्तं गच्छंति च, तथा विद्वान् लोके नामरूपवानपि परात्परं दिव्यं पुरुषं समष्टिपूर्षंतं प्राप्नोति । विश्वात्मतयापि प्रारब्धशेषाजीवंतो नद्य इव नानाजलरूपान् जीवान्

१ बृ. ४।३।२। २ मुंड. ३।२।८।

समुद्रे ब्रह्मणि ब्रह्मोपदेशेनैकीकुर्वंतो जगदाचार्या एवं लोके तत्र तत्र तिष्ठंति तावता नाद्वैतं खपुष्पवत् किंतु सर्वानुभूतमित्यभिप्रायः ॥ ३१ ॥ (१८) ॥

अनंतसिंधौ सकलात्मबंधौ समुद्भवो बुद्बुदवज्जनानाम् ।
स्वनाम रूपं च विहाय संतो गंगेव जीवा भगवत्प्रपन्नाः ॥ १८ ॥

इति श्रीमद्भागवते श्रुतिकल्पलतायां श्रुतिस्तुतिव्याख्यायामष्टादशश्लोकव्याख्यानं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

॥ इति चतुर्विंशोऽध्यायः ॥

---

## पंचविंशोऽध्यायः ।

एवं परमतपूर्वपक्षत्वेन ब्रह्माद्वैतसिद्धांतसिद्धं स्वमतमुपपाद्य तत्प्राप्तिसाधनान्याहुः—नृष्विति द्वाभ्याम्—

नृषु तव मायया भ्रममभीष्ववगत्य भृशं
त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् ।

तत्रादौ 'पुरुषत्वे चाविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं संपन्नतमोऽथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानं' इत्याद्याः श्रुतयो ब्रह्माद्वैतज्ञानाय नृदेहमाद्यं साधनमाहुः—नृषु तव मायया अमीषु भ्रममवगत्य त्वयि भावं दधतीति । नृषु मनुष्यजन्मस्वित्यर्थः । तत्र तव मायया अमीषु जीवेषु तदुपाधिकृतं भ्रमं ज्ञात्वा त्वयि परमेश्वरे भावं दधति । स्वभ्रमनिवृत्त्यनंतरमेव सर्वेषु भगवतो मायया भ्रमोऽस्तीति मायानियंतारं त्वां भजंतीत्यर्थः । एतावतात्मा ब्रह्म तदितरमखिलं मिथ्या, तदिदं ज्ञानं मनुष्यजन्मनीति सूत्रयंति । मा च या च माया माशब्देन ब्रह्मणि जगन्नास्ति शुक्तौ रजतवत् । याशब्देन नास्त्यपि या कार्यकारणरूपेणावभाति ब्रह्मणि शुक्तौ रजतवत् तया मायया अमीषु जीवोपाधिषु भ्रमस्तंत्वेकमात्रं पटं पश्यंतोऽपि तंतुमनधिगम्य पटमेव व्यवहरंतीति भ्रमस्तमधिगत्य—न हि तंतुं विना पटोऽस्ति । न च तंतुमदृष्ट्वा पटो दृश्यते, तथा न हि चैतन्यं विना जडमस्ति, न च तद्विना जडं दृश्यते । तस्मात्तंतुवाच्चिदेव वस्तु जडं पटवद्वाचारंभणमात्रमेवमखिलजीवोपाधिषु तंतुज्ञानं विना पटैकज्ञानरूपं भ्रममधिगत्य त्वयि भगवति भावं धारयंति । यस्य माययामी जीवा

मोहिताः स्वात्मानं जगत्प्रकाशत्वेन न विदुः स एवास्माकं गतिरिति त्वयि निर्निमित्तां प्रीतिं कुर्वंतीति भावः। ननु यदि भ्रमनिवृत्त्यनंतरं मयि भावं दधति तर्हि ततः प्राक् न मयि भाव इति सिद्धं, तावता मयि भावाभावे तु न मत्प्रसादस्तथा सति मत्प्रसादं विना यद्यविद्यानिवृत्तिस्तर्हि कुतो जयजय जह्यजां इत्यादि अविद्याहरणाय मत्प्रार्थनेयमित्याशंक्य तवैव कृपालवलेशेन तदधिगम्य ततो नितरां त्वयि प्रेमभावं दधतीत्याहुः—भृशं सुधियोऽनुप्रभवं। भृशं त्वयि भावं दधतीत्यनुषंगः। सुधियः सुष्ठु शोभना धीस्त्वद्विषया मतिर्येषां ते सुधियः अनुप्रभवं अनु पश्चात् प्रभवतीत्यनुप्रभवस्तं भावं निवृत्ताविद्यारूपः परमसमर्थो यो भावस्तं भृशमत्यर्थेन त्वयि धारयंति। प्रागेकस्मिन्नेव तव सगुणरूपे भाव आसीत्सोऽपि दुःखनिवृत्तये भगवति त्वयि भाव उत्पन्नस्ततोऽविद्यानिवृत्तौ त्वमेवात्मेत्यधिगत्य जगदात्मनि त्वय्येव निरवधिनिर्व्याजभावं भृशं दधतीत्यभिप्रायः। नन्वधिगते तत्त्वे कुतो वा मयि भावं दधतीत्यपेक्षायामाहुः—अभवे इति। न भवः संसारो यस्य तस्मिंस्त्वयि नित्यमुक्त इत्यर्थः। एते नित्यसंसारिणः, त्वं नित्यमुक्तः सर्वात्मा, ज्ञाते तत्त्वे यः सर्वात्मभावो निरतिशयानंदरूप उत्पद्यते तदेव तवाखिलात्मन आराधनमिति भावः। ननु भगवदाराधनेन भगवत्यैक्यगतिं प्राप्नुवन्ति तथैतद्विमुखा अपि प्रलये तदैक्यं गच्छन्ति तावता द्विविधयोरेकगतित्वाज्जीवानां सर्गादिकाले मुहुरुत्पत्तिश्रवणात्तेषामपि पुनरुद्भवो दुर्वारः कालगतेर्दुरत्ययत्वादित्याशंक्याहुः—कथमित्युत्तरार्धेन—

**कथमनुवर्ततां भवभयं तव यद्भ्रुकुटिः**
**सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ॥३२॥ (१९)॥**

अनुवर्ततां सर्वभूतेषु त्वामनुलक्षीकृत्य वर्ततां विहरतां भवभयं कथं भवस्योद्भवस्य पुनर्लयानंतरं सर्गादावुत्पत्तेर्भयं कथं? न कथंचिदित्यर्थः। यत्कालगतेर्दुरत्ययत्वं तत्तदितराणामित्याहुः—तव यद्भ्रुकुटिः सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयमिति। यत् यं कालं तव भ्रुकुटिः सृजति यस्त्रिणेमिः तिस्रो नेमयः परिच्छदाः सृष्टिस्थितिसंहाररूपा यस्य स तथा भ्रुकुटिः सृजतीत्यनेन सर्गादीनां तव भ्रूभंगमात्रेण सिद्धिरिति सूत्रयंति। तादृशात्कालादभवच्छरणेषु भयम्। न भवान् शरणं रक्षिता येषां तेष्वेव मुहुर्भयं, लयानंतरं पुनः पुनरुद्भवो भवति, भवच्छरणेषु कथं तदित्यर्थः। भवच्छरणानामविद्यानिवृत्तेः ज्ञाते स्वात्मनि स एव निर्विशेषः कालः कालशक्तेरधिष्ठानम्। न हि शक्तिमतः शक्तिकृतं भयम्। नाग्नेस्तद्दाहकशक्तिर्दहतीति न्यायात्। वक्ष्यत्येकादशस्कंधे—'[1]कालश्च हेतुः सुखदुःखयोश्चेत्किमा-

१ भा. स्कं. ११।२३।५६।

त्मनस्तत्र तदात्मकोऽसौ। नाग्नेर्हि तापो न हिमस्य तत्स्यात्क्रुध्येत कस्मै न हि यस्य द्वंद्वम्' इति। त्वद्भजनोत्तरकाले न कालकृतं भयं किमुत मुक्त्यनंतरं भयमिति वक्तव्यम् ॥ ३२ ॥ (१९) ॥

ज्ञात्वा ये नृषु मायया भ्रममभीषूपाधिषु त्वय्यजे
पूर्वस्माद्दधति प्रिये तनुभृतो भावं भृशं सद्धियः।
तेषां स्यान्न कथं भयं सृजति यत्त्वद्भ्रूस्ततः कालतो
यन्नेमित्रययुक्तचक्रमभवद्रोमृष्वातित्रासदम्॥ १ ॥

इति श्रीमद्भागवते श्रुतिकल्पलतायां श्रुतिस्तुतिव्याख्यायामेकोनविंशश्लोकव्याख्यानं नाम पंचविंशोऽध्यायः ॥ २५ ॥

॥ इति पंचविंशोऽध्यायः ॥

---

## षड्विंशोऽध्यायः।

एवं भगवदाराधनेन निरस्तमायाभ्रमा अतितरां भगवति भावं दधतीत्युक्तम्, तत्तु गुर्वेकप्रसादेनैव न केवलं स्वबुद्धिवैभवेनेति 'नैषा[1] तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं' 'आचार्यवान्पुरुषो[2] वेद' इत्याद्याः श्रुतयः श्रीगुरोश्चरणोपासनं विना ये मनोनिग्रहेण संसारसागरं समुत्तर्तुमिच्छंति ते क्लेशैकभाजना इत्याहुः—

विजितहृषीकवायुभिरदांतमनस्तुरगं
य इह यतंति यंतुमतिलोलमुपायखिदः।
व्यसनशतान्विताः समवहाय गुरोश्चरणं
वणिज इवाज संत्यक्तकर्णधरा जलधौ ॥ ३३ ॥ ( २० ) ॥

भो अज, गुरोश्चरणं समवहाय इह ये यतंति ते उपायखिदः उपायेषु खिद्यंते ते उपायखिदः। अज जन्मशून्येत्यनेन ब्रह्मविद्याप्रवर्तक आदिगुरो इति संबोधयंति। 'यो[3] ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुतेः।

---

१ का. १।२।९। २ छा. ६।१४।२। ३ श्वे. ६।१८।

जगत्पितामहस्य ब्रह्मणो जनकः स्वयमजस्तद्द्वारा वेदविद्यायाः प्रवर्तकः सकलजगद्गुरुरित्यर्थः । एतादृशस्य त्वदेकरूपस्य गुरोश्चरणं समवहाय अनाश्रित्य इह नृजन्मनि ये यतंति यत्नं कुर्वंति ते उपायखिदः उपायेषु खिद्यंते खेदं प्राप्नुवंति तावदेव फलमित्यर्थः । कुतः मनसो दुर्दमत्वादिति । **'मनसो वशे सर्वमिदं बभूव नान्यस्य मनो वशमन्वियाय । भीष्मो हि देवः सहसः सहीयान् युंज्याद्वशे तं स हि देवदेवः'** इत्याद्याः श्रुतय आहुः—विजितेति । विजितहृषीकवायुभिरदांतमनस्तुरगमिति । विजितानि हृषीकाणींद्रियाणि च वायुः प्राणश्च यैस्तैरपि अदांतं न दमितमित्यर्थः । एतादृशं मनस्तुरगं मन एव तुरगस्तं यंतुं निग्रहीतुं यतंति ते उपायखिद इत्यनुषंगः । कथंभूतं? अतिलोलं बहुचंचलमित्यर्थः । तत्र दृष्टांतमाहुः—जलधावकृतकर्णधरा वणिज इव व्यसनशतान्विताः संतीति । समुद्रे न कृतः कर्णधारो नौकानियंता यैस्ते वणिजो यथा व्यसनानां शतैरन्विताः संति तद्वत्संसारसागरे कर्णधारो गुरुः कर्णेन श्रवणेनात्मानात्मविवेकदानेन धारयति मन आत्मनि स्थिरीकरोति तमकृत्वा शरणमगत्वा नानावासनाशतैराकुलास्तस्मिन्समुद्रे संति नोत्तरंतीत्यर्थः ॥ ३३ ॥ ( २० ) ॥

**नृदेहनौकर्णधार त्वय्यनादिगुरौ हरे ।**
**संसारसागरोऽप्यासीन्मृगतृष्णांबुसागरः ॥ १ ॥**

इति श्रीमद्भागवते श्रुतिकल्पलतायां श्रुतिस्तुतिव्याख्यायां विंशतिश्लोकव्याख्यानं नाम षड्विंशोऽध्यायः ॥ २६ ॥

॥ इति षड्विंशोऽध्यायः ॥

---

# सप्तविंशोऽध्यायः ।

ननु गुरुर्ज्ञानप्रद इति प्रसिद्धम् । मनोनिग्रहस्य भगवद्भक्तियोगतदितरविषयवैराग्यैकसाध्यत्वात् ज्ञातेऽपि तत्त्वे तदुपदिष्टतत्त्वस्य मनोनिग्रहाक्षमतया यदि देहगेहाद्यासक्तः स्यात्तर्हि न मनोनियमने गुरुरात्यंतिको हेतुरित्याशंक्य **'न[1] वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वा अरे पुत्राणां कामाय पुत्राः प्रियाः'** इत्यादि **'न वा[2] अरे सर्वस्य कामाय**

---

१ बृ. ४।५।६। २ बृ. ४।५।७।

सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितं' इत्थंता बृहदारण्यकश्रुतयो ज्ञानमेव वैराग्यं तदेव भक्तिस्ततो गुरुरेव मनोनिग्रहे आत्यंतिको हेतुरिति भावेन निखिलात्मानं भगवंतमात्मानं निर्व्याजप्रियत्वेन स्तुवन्त्य आहुः—

स्वजनसुतात्मदारधनधामधरासुरथै-
स्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ।
इति सदजानतां मिथुनतो रतये चरतां
सुखयति को न्विह स्वविहते स्वनिरस्तभगे ॥३४॥ (२१)॥

आत्मनि सर्वरसे त्वयि सति श्रयतः पुंसः नृणां स्वजनादिभिः किमित्यन्वयः। आत्मनि स्वस्वरूपस्फुरणरूपे सर्वरसे सर्वेषु ये रसाः प्रियतमा विद्यंते यस्मिन् । 'यावानर्थ उदपाने' इति गीतायामुक्तत्वात् । तादृशे त्वयि सति श्रीगुरुमुखेनाधिगते सतीत्यर्थः । अन्यथा सर्वरसे इत्येतन्न सुघटम् । अत आहुः—श्रयत इति । श्रीगुरुमाश्रयतः पुंसः नृणां साधारणमनुष्याणां स्वजनादिभिः किं, न किमपीत्यर्थः । तेषां यथा स्वजनादयः प्रीत्यास्पदीभूतास्तथा न गुरुं श्रयतः पुरुषस्येति भावः । तत्रात्मा देहः धाम गृहं सुरथाः शोभनानि वाहनानि तैः किं यदर्थे सर्वे स्वजनादयः प्रिया भवंति तस्मिन्नात्मनि विज्ञाते तदितरदेहगेहस्वजनादिषु प्रीतिपरित्यागात्तदेव वैराग्यं, तथा सति प्रीतेरव्यभिचारतया निर्निमित्तत्वादव्यवहितत्वात् स एवाद्यो भक्तियोगस्तस्मादात्मज्ञानस्यैव भक्तिवैराग्यरूपत्वात्तत्प्रदः श्रीगुरुरेव निखिलश्रेयःसाधनहेतुरित्यभिप्रायः । नन्वात्मा सर्वेषां प्रिय एव तथापि तेषां साधारणानां केन गुणेनात्मनि प्रिये सत्यपि स्वजनादयः प्रिया भवंतीति चेत् कथंभूतास्त इत्यपेक्षायामाहुः—इति सदजानतां मिथुनतो रतये चरतामिति । इतिशब्देन पूर्वपरामर्शः । इति स्वजनादयः सदजानतां असन्निषेधेन सदनधिगतानां, असदात्मनामिति यावत् । तेषां देहात्ममानित्वादनुरागहेतवः स्वजनादय इत्यर्थः । पुनः कथंभूतानां–मिथुनतो रतये चरताम् । मिथुनाद्या रतिः प्रीतिः तस्यै प्रीत्यै तदर्थे चरतां वर्तमानानाम् । ननु तथापि सुखं तु प्राप्नुवंत्येवेति चेत् । 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात्' इत्याद्याः श्रुतयो वैराग्यमुत्पादयंत्य आहुः—सुखयति कोन्विहेति । इह जगति को नु सुखयति कः पदार्थः कं वा सुखयति

१ भ. गी. २।४६। २ मु. १।२।१२।

न कमपीत्यर्थः। कथंभूते जगति देहे वा ते चरंतीत्यपेक्षायामाहुः—स्वविहते स्वनिरस्तभगे। स्वत एव विहते नश्वरे चरमविकारग्रस्ते। स्वत एव निरस्तानि भगानि तारुण्याद्यवस्थारूपाणि यस्य तस्मिन्। अपक्षयांतविकारग्रस्त इत्यर्थः। तस्माद्-सति सुखं नास्ति सदेव सुखं तदेव निर्निमित्तं प्रियं च। तदधिगमे सर्वमप्रियं निःसारं नश्वरं न सुखहेतुकमित्यभिप्रायः॥ ३४॥ (२१)॥

सति सति त्वयि केवल आत्मनि
स्वजनदारधनादिभिरस्ति किम्।
स्वविहते स्वनिरस्तभगे जग-
त्यखिलनाथ सुखाय किमस्त्यहो॥ १॥

इति श्रीमद्भागवते श्रुतिकल्पलतायां श्रुतिस्तुतिव्याख्यायामेकविंशश्लोकव्याख्यानं नाम सप्तविंशोऽध्यायः॥ २७॥

॥ इति सप्तविंशोऽध्यायः॥

---

## अष्टाविंशोऽध्यायः।

ननु यद्यात्मज्ञानप्रदो गुरुरेव श्रेयःप्राप्तिहेतुरिति चेल्लोके तदितरपुण्यतीर्थादिविविधश्रेयोनिदानानां विद्यमानत्वान्नैकांतिको हेतुर्गुरुरेवेत्याशंक्य एतदुभयानुवादमुखेन तदितरस्य गौणश्रेयःसाधनत्वात् श्रीगुरुरेव मुख्यफलप्राप्त्यै मुख्यो हेतुरित्युपपादयंत्यो भगवत एकांतभक्तान् गुरूनूरीकुर्वत्यो भगवंतं स्तुवन्ति—

**भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदा-**
**स्त उत भवत्पदांबुजहृदोऽघभिदंघ्रिजलाः।**
**दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे**
**न पुनरुपासते पुरुषसारहरावसथान्॥ ३५॥ (२२)॥**

भुवि भूमौ पुरूणि पुण्यान्येव रूपाणि येषां तानि तीर्थानि जलानि च सदनानि देवालयानि च विद्यंते येषु क्षेत्रेषु तानि पुरुपुण्यतीर्थसदनानि। अथ च भुव्येव ऋषयो ज्ञानिनो विमदाः विगतमदमूलाहंकारा इत्यर्थः। एवं जनानां द्विविधश्रेयःसाधनमुक्तम्। तत्र क्षेत्रादीनां पुरुपुण्यत्वविशेषणेन पुण्यजनकत्वादैहिकामुष्मिकफलसाधनसाधारणत्वेन पुण्यरूपे कर्मफले पर्यवसानं सूत्रयित्वा, ये गुरवस्तेषां विशेषेण फलप्रदत्वेन मुख्यत्वं स्फुटीकुर्वन्ति—त उत भवत्पदांबुजहृदोऽघभिदंघ्रिजला इति। उतशब्दस्तुशब्दार्थे। ते तु भगवत्पदांबुजहृदः भवतः

पदांबुजे हृदि येषां ते तथा। एतावता महदंतरं सूचयंति। तानि पुरुपुण्यतीर्थसदनानि। ते तु साक्षात्तीर्थपदस्य भवतः पदांबुजहृद एव। तथा च फलतारतम्यमाहुः— अघभिदंघ्रिजला इति। अंघ्रिजलं ये सेवंते ते अंघ्रिजला शिष्याः, अघं भिंदंति अंघ्रिजलानां शिष्याणां ये ते अघभिदंघ्रिजलाः आत्मतत्त्वोपदेशेन अघानि संचितक्रियमाणानि शिष्याणां नाशयंति ते तथा इति भावः। तथा च सूच्यते भगवता वेदव्यासेन—'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ'[1] इति। 'भिद्यंते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः। क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे'[2] इति श्रुतेः। पुण्यतीर्थसाधनैः प्राप्तस्वर्गादिफलानां पुनरावृत्तेर्गुरूपदिष्टानामपुनर्भवत्वात्फलेऽपि महदंतरमिति भावः। ननु यदि पुण्यफलस्य पुनरावृत्तित्वान्नात्यंतिकत्वमुच्यते तर्हि ज्ञातेऽपि तत्त्वे पुनर्यदि देहगेहाद्यासक्तिः स्याद्योगभ्रष्टस्य पुनरावृत्तिश्रवणात्कोऽत्र विशेष इति चेदात्मनि लब्धास्पदमनस्कानां न कदाचिदपि देहगेहाद्यासक्तिः स्यात्कुतो योगभ्रंश इति। 'यदा[3] पंचावतिष्ठंते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम्' 'तां योगमिति[4] मन्यंते स्थिरामिंद्रियधारणाम्। अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ' इत्यादिश्रुतय आहुः—दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान्। त्वय्यात्मनि नित्यसुखे ये सकृन्मनो दधति ते पुरुषसारहरावसथान्नोपासत इत्यन्वयः॥ भो भगवन्स्त्वयि आत्मनि नित्यसुखे ये सकृदेकवारमपि मनो दधति धारयंति चिदाकारत्वेन स्थिरीकुर्वंति ते पुरुषसारहरावसथान्नोपासते। पूर्षु शेरते इति पुरुषास्तेषां सारं यदद्वितीयमात्मज्ञानं निःसारक्षरभागातीतत्वात्सारं नित्यानित्यवस्तुविवेकरूपमित्यर्थः। तत्कथंचिच्छास्त्रश्रवणादिना जातमपि हरंति ये आवसथा गृहास्तान्नोपासते अहंममेत्यात्मसान्न कुर्वंति तान्निःसारतया दुःखदोपालुदर्शनेन संत्यज्य सुखधिया न मन्यंते इत्यर्थः। त्वयि नित्यसुखे सकृन्मनसः स्थिरीकृतत्वात्। किं पुनः सतताभ्यासपरा नोपासत इति वक्तव्यम्। योगभ्रंशस्तु योगमप्राप्तानां केवलशब्दज्ञानपराणाम्। येषां सकृदपि मनो निजात्मनि वृत्तिशून्यतया तदाकारं भजते तेषां न योगभ्रंशशंकेति भावः। तदुक्तं भगवता—'सुखमात्यन्तिकं[5] यत्तद् बुद्धिग्राह्यमतींद्रियम्। वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः' इति। तथा च श्रुतिः—'यत्र[6] नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा। यो वै भूमा[7] तत्सुखं' इति। अत एवोक्तं दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुख इति॥ ३५॥ (२२)॥

१ ब्र. सू. ४।१।१३। २ मु. २।२।८। ३ का. २।६।१०। ४ का. २।६।११। ५ भ. गी. ६।२१। ६ छां. ७।२४।१। ७ छां. ७।२३।१।

न पुरुपुण्यजलस्थलमर्थये पुरुषसारहरावसथानपि ।
भगवतो भवतः सततं गुरोरखिभिदंघ्रिजलांघ्रियुगं भजे ॥ १ ॥

इति श्रीमद्भागवते श्रुतिकल्पलतायां श्रुतिस्तुतिव्याख्यायां द्वाविंशतिश्लोकव्याख्यानं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

॥ इति अष्टाविंशोऽध्यायः ॥

---

## एकोनत्रिंशोऽध्यायः ।

एवमात्मज्ञानप्रदो गुरुरेव मुख्यः श्रेयोहेतुरिति सिद्धे तदुपदिष्टं सिद्धांतं प्रतनभरीत्या साधयंति—सत इदमुत्थितमित्यादि त्रिभिः श्लोकैः । तत्र केचित् 'सत्यासत्यस्य करणानि वोचे' इति श्रुतिमनुसृत्य तदर्थानभिज्ञाः सत्येन कृतत्वात् सत्यादुत्पन्नत्वाच्च जगत्सत्यमित्यादितर्कबलेनादुस्तन्निराकुर्वंत्यो 'यतः प्रसूता जगतः प्रसूतिः' 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्याद्याः श्रुतयो नैकं ब्रह्मैव जगत्कारणं, किंतु मायाशबलितमिति ततो मिथ्येति साधयंत्यो भगवंतं स्तुवंति—

सत इदमुत्थितं सदिति चेन्ननु तर्कहतं
व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ।
व्यवहृतये विकल्प इषितोऽधपरंपरया
भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥ ३६ ॥ (२३) ॥

नन्विदं जगत्सत् सत्यमित्यर्थः । कुतः? यतः सत उत्थितम् । सत उत्पन्नत्वाद्धेतोः सत्यमित्यर्थः । इति पूर्वपक्षानुवादः । अत्र तत्खंडनं सूत्रयंति—इति चेत्तर्कहतमिति । एवं यदि चेत् तर्कहतं न्यायबाधितं, उभयमतरीत्यापि सत उत्पन्नत्वात् सदिति चेन्न्यायविरुद्धमित्यर्थः । तथा सति सत एव नित्यत्वात् ज्ञानानंदस्वरूपत्वात् प्रपंचस्य नश्वरत्वं जडत्वं दुःखरूपत्वं न संभवति । सत उत्पन्नत्वाद्यदि सत् नित्यादुत्पन्नत्वान्नित्यं ज्ञानादुत्पन्नत्वादजडं सुखादुत्पन्नत्वाददुःखमित्यादि तददर्शनात् । तद्वैपरीत्यात्तर्कविरुद्धमित्यर्थः । तस्मात्सदुत्पन्नत्वात्सत्यमिति न साधयितुं शक्यम् । ननु मास्त्वस्माद्धेतोः सत्यत्वं, प्रकारांतरेण साधयामः प्रत्यक्षसत्यत्वादिति पूर्वपक्षमुद्दिश्य दूषयंति—व्यभिचरति

---

१ तै. २।१। २ तै. २।१।

क च क च मृषेति । क च कुत्रचित्स्वप्नादौ प्रत्यक्षसत्यत्वं व्यभिचरति जागरे तस्मिन् मिथ्यात्वात्, ततोऽयमपि प्रत्यक्षसत्योऽपि मिथ्यैवेत्यनुमीयत इति भावः। दंभसतीजारन्यायात् पतिसमीपे सतीवापि परपुरुषसंयोगादौ तदेव सतीत्वं यस्या व्यभिचरति सा यथा न सती तथा न जगत्सदिति गूढाभिप्रायः । अत्र केचित् स्वप्नसुरतरेतस्स्खलनात् स्वाप्नजगत्सत्यत्वमाहुस्ते प्रियंवदाः गुणफणिदर्शनाद्भयकंपमूत्रस्खलनस्वेदोद्गमादिदर्शनात् स्थाणुतस्करभयकंपादेर्दर्शनादहो स्वप्ने जातस्तरुणोऽपि जागरे किमिति वलीपलितदेहो दृश्यते न तत्तथा अस्तु मंदा एवेत्यलं विस्तरैः । किंच क च मृषा क च शुक्त्यादौ प्रत्यक्षसिद्धं रजतं यथा मृषा तथेत्यर्थः । यत एवं तत आहुः—न तथेति । सदिति यथा भवति तथा न घटत इत्यर्थः । ननु शुक्तौ रजतं शुक्तिविषयाज्ञानादुत्पद्यते, तावता ब्रह्मणो जगत्कारणत्वमसिद्धं ब्रह्मविषयाज्ञानस्य जगत्कारणत्वासिद्धेरिति । क च मृषेत्युक्तत्वाच्चैवं पूर्वपक्षः स्यात्तत्राहुः—उभययुगिति । नैकं शुक्तिविषयाज्ञानमात्रं रजतस्य कारणं, किंतूभययुगिति भावः । शुक्तिश्च तद्विषयाज्ञानं चेत्युभयमुभाभ्यां युज्यते घटते इत्युभययुक् । शुक्तेश्च तदज्ञानयुक्तदृष्टेश्च यो योगः तद्रजतस्य कारणं, नहि निरधिष्ठानो भ्रम इति न्यायात् । एवं ब्रह्मणश्च तमआवरणयुक्तचिच्छक्तेस्तद्विषयाविद्याया यदा योगस्तदा जगदिदमुत्पद्यत इत्यभिप्रायः । एवमेव श्रुतीनां तात्पर्यं च । '**यतः[1] प्रसूता जगतः प्रसूतिस्तोयेन जीवान्व्यचसर्ज भूम्यां**' इति श्रुतिः पूर्वोक्तैकवाक्यतयैवार्थमभिधत्ते । तथापि या तु प्रसूता सा त्रिगुणा। तत्र सत्त्वस्य नैर्मल्यात्तोयसादृश्यात्तेन जीवान्व्यचसर्ज तत्र प्रतिबिंबितेन चिदाकाशेन जीवत्वमुत्पादयामासेत्यर्थः । ननु तथासति चित्प्रतिबिंबयोगेन सत्त्वोपाधेर्भ्रांत्यभावाद्गुणे फणिवद्ब्रह्मणि जगत्प्रतीतिर्न स्याज्जीवानां तु जगत्सत्यत्वप्रतीतिर्दर्शनादसिद्धमिति चेत्तमस्यावरणे जीवान्व्यचसर्जेत्यभिधत्ते। भूम्यामिति भूमेस्तामसाहंकारकार्यरूपत्वात् स्थूलोऽहं कृशोऽहमिति जीवानां स्थूलशरीराभिमानस्यावरणरूपत्वाल्लिंगदेहेऽपि सूक्ष्मत्वेन तस्यैव विद्यमानत्वात् । एवमविद्यया आविर्भूता जीवाश्चोभययोगेन जगदुत्पद्यते । यद्यपि ब्रह्मण्युपादानकारणत्वादधिष्ठानसत्यत्वात्सदिव प्रतीयते तथाप्यविद्यया समुत्पन्नत्वादवस्तुत्वादसदेवेति भावः । शुक्तौ रजतवत् । तथा च '**तस्माद्वा[2] एतस्मादात्मन आकाशः संभूतः**' इत्यादिश्रुत्यर्थोऽपि । तस्मादात्मन इति ब्रह्मण एतस्मादात्मन इति द्वितीयादात्मन इति तामसाहंकारादावरणरूपादविद्ययेति यावत् । यद्यपि 'प्रकृतेर्महान्महतोऽहंकार' इति क्रमस्तथाप्यविद्याया अहंकारप्रधानत्वादेतस्मादात्मन इत्यहंकारादेवाकाशादी-

१ महाना. १।४। २ तै. २।१।

नामुत्पत्तिरुक्ता तथापि यथा शब्दादितन्मात्राणामर्थतो ग्रहणमेव प्रकृतिमहतोरपि इति सांख्यपुराणमतानुसारान्मूलवेदांतप्रकारेणोपपाद्यते तथैव श्रुत्यर्थोऽपि । अत्राहुर्नवीनसच्छास्त्रप्रवर्तकाः । ननु वेदांतमतरीत्या त्वाकाशस्यैव ब्रह्मण उत्पत्तिरिति श्रवणात् । 'तस्माद्वा एतस्मादात्मन आकाशः' इति श्रुतेर्यथाश्रुत एवार्थोऽस्त्विति चेत्तस्माद्वा एतस्मादिति तदेतच्छब्दाभ्यां तस्मादात्मन एतस्मादात्मन इत्यात्मशब्दस्य पुनः सूत्रितत्वात्पौराणमतसंमतत्वात् पुराणकृद्भिर्ब्रह्मसूत्रपदेषु चैवमेव व्यासकपिलाद्यैस्तत्त्वोत्पत्तेरुपपादितत्वादयमेव यथाश्रुतोऽर्थः । एतस्मादिति शब्दस्य सार्थकत्वात् । अन्यथैतस्माच्छब्दस्यानर्थक्यात् । ननु 'तस्माद्वा एतस्मादन्योऽतर आत्मा प्राणमयो मनोमयः' इत्यादावेतस्माच्छब्दस्य सर्वत्र छांदसत्वात्पुनरुक्तिरिति चेन्नैवम् । सर्वत्र सार्थकत्वात् । तस्मादिति तच्छब्देन पूर्वस्मात्कोशादन्योंतर आत्मा प्राणादिमय इति, एतस्माच्चिदात्मनोऽप्यन्य उपाधित्वादिति न वृथा पुनरुक्तिः । अत एतस्माच्छब्दादत्र द्वितीयात्मशब्देनाहंकार एव शब्दतन्मात्रद्वारा नभस उत्पत्तिकारणमित्यर्थः । आकाशस्यापि प्रकृतिं विनोत्पत्तेरघटनाच्च परंपरया आकाशकारणं प्रकृतिस्तथार्थात् ।

प्रकृतमनुसरति भगवान् । एवं पूर्वार्धेन ब्रह्म च तद्विषया अविद्या च जगत्कारणम् । तस्मात्सत उत्पन्नत्वात्सदित्यसिद्धं, किंत्वसदेवेति सिद्धम् । ननु मास्त्वस्माद्धेतोः सत्त्वं प्रकारांतरेण साधयामः—सदिदं अर्थक्रियाकारित्वादिति । शुक्तिस्थितस्य रजतस्यार्थक्रियाकारित्वं न संभवतीत्येतत्संभावयंत्य आहुः—व्यवहृतये विकल्प इषित इति । व्यवहृतये व्यवहाराय । अर्थक्रियाकारित्वस्यापि व्यवहारमात्रत्वासिद्धये विकल्प इंद्रियभेद इषितः इष्ट इत्यर्थः । अयमभिप्रायः—यथा शुक्तौ रजतमेकेन चक्षुरिंद्रियेण स्वविषयत्वेन गृहीतमप्यसदेवमेव शब्दादिविषयैः श्रोत्रादींद्रियैः सहेदं जगद्ब्रह्मण्यसदित्येवं सामंजस्येन सिद्धत्वेऽपि यदि शुक्तौ तदविद्योत्पन्नस्य रजतस्यार्थक्रियाकारित्वं न संभवतीत्युच्यते, तत्रास्माभिः श्रुतिभिरिंद्रियभेदेन क्रियाकारित्वस्यापि व्यवहारमात्रत्वं साध्यते । अर्था विषयाः चक्षुषा क्रियाः इंद्रियैर्विविधविषयग्रहणं तत्कारी तद्वोक्तेत्येवं यद्यर्थक्रियाकारित्वं तर्हि शुक्तिस्थितरजतरूपोऽर्थः,चक्षुषा तद्ग्रहणं क्रिया द्रष्टाहंकारयोगेन तद्वोक्ता, आत्मनश्चक्षुर्द्वारा भोगस्य तावन्मात्रत्वात्, तत्र रजतस्य मिथ्यात्वात् । विषयमिथ्यात्वे सिद्धे त्वेकस्य पुरुषस्येंद्रियाणामन्यस्य विषयत्वादिंद्रियाणां च मिथ्यात्वं सिद्धम् । लिंगदेहस्थितानामिंद्रियाणां स्वेंद्रियसाम्यादन्योन्यविषयत्वान्मिथ्यात्वात् । पार्थिवानां पार्थिवगोचरत्ववन्मनोमयानां मनोगोचरादिंद्रियाणां परस्परविषयत्वमित्येव

१ तै, २।१। २ तै. २।१।

सिद्धत्वात् । अथ द्रष्टा जीवः सुषुप्त्येकसिद्धः तस्याहंकारयोगेन स्वप्नजागरयोरर्थक्रियाकारित्वं न स्वतः तस्याहंकारस्यापि सुषुप्त्युपलक्षिताऽवस्तुत्वात्कारिणोऽपि मिथ्यात्वम् । यथा काचोपनेत्रयोगेन गौरं शरीरं नीलं दृश्यते तथाहंकारयोगेनात्मनोऽकर्तुः कारित्वमनुभूयते । नानार्थक्रियाकारित्वमात्मनः स्वरूपं तर्हि सुषुप्तौ क्रियाकारित्वादर्शनात्तदेकस्वरूपत्वे स्वरूपहानिस्ततस्तन्न घटते । केन? चक्षुरिंद्रियेण । यथाचार्थक्रियाकारित्वस्य मिथ्यात्वं सिद्धमेव मेव शब्दादिविषययोगैः श्रोत्रादींद्रियवृंदैः यावत्क्रियाकारित्वं तावद्व्यवहारमात्रत्वमित्यंगीकृतमेवास्माभिरतोऽनार्थक्रियाकारित्वाज्जगत्सदिति सिद्धम् । यद्वार्थक्रियाकारित्वस्याधिष्ठानसत्तैकसिद्धत्वादहंकारादिमनइंद्रियभेदो व्यवहाराय इषित इत्यर्थः । तथा च श्रुतिः—'येन रूपं रसं गंधं शब्दान्स्पर्शांश्च मैथुनान् । एतेनैव विजानाति किमत्र परिशिष्यते । एतद्वैतत्' इति यथा शुक्तिं विना रजतं न दृश्यते तथा नात्मानं विना पंचविषयरूपः प्रपंचो दृश्यते । न च पंचेंद्रियाणामात्मानं विना स्वस्वविषयग्रहणक्षमत्वम्, न च कर्मेंद्रियाणां स्वस्वकर्मकरणत्वं, न चाखिलेंद्रियाणां, मनोहंकारादीनां च विनात्मानमिंद्रियत्वमनोहंकारत्वादिसिद्धिस्ततो मिथ्यैवैतदिति सिद्धम् । मिथ्या रजतस्य शुक्त्येकप्रकाश्यत्वात् । न च सत्यस्य रजतस्य शुक्त्येकप्रकाश्यत्वं घटते सत्यत्वस्य स्वप्रकाश्यत्वात् रजतस्य शुक्तिप्रकाश्यस्य मिथ्यात्वसिद्धेरात्मेतरस्य सर्वस्यार्थक्रियाकारित्वेऽपि मिथ्यात्वं सर्वेषां शुक्तावात्मनि रजतत्वेऽपि व्यवहारायायं कश्चन विकल्प इतीष्ट एव । एकेन चक्षुषा मिथ्यात्वरूपग्रहणत्वदृष्टेरिति अधिष्ठानस्वरूपे तत्त्वतो न कोऽपि विकल्प इत्यभिप्रायः, विकल्प इषित इत्युक्तत्वात् । ननु सर्वथा प्रपंचस्य ब्रह्मणि आरोपितत्वं यदि साध्यते तर्हि प्रपंचांतरस्य सत्यत्वाद्द्वयं द्वैतं साधयामः । एकत्रसतो रजतादेरन्यत्रारोपस्य संभावितत्वान्नात्यंतासतः खपुष्पादेरारोपः संभवतीति चेदन्यत्रासत आरोपं विनापि वस्तुनि तदितरभ्रमः संभवति स्थूलदृष्टित्वादित्याहुः—अंधपरंपरयेति । वस्तु पश्यंतोऽप्यपश्यंत एवांधा नयनगोलकहीना वर्तंते यथा कल्पितद्रष्टारः यथा तंतुं पश्यंतोऽपि बाला लौकिकेऽप्यव्युत्पन्नधियः शीतादिनिवारणं पटं जानंतोऽपि तत्त्वेकमात्रं तं कथंचिन्न विदुः पटत्वेन व्यवहरंतस्ते एवांधास्तेषां परंपरा तया पटत्वेन व्यवहारमेव न तंतुतत्त्वं केऽपि जानंति तावता न हि पटे पटांतरारोपो, न च पटो वस्तु किंतु तंतुमात्रोऽपि पटरूपो भ्रमः एवं ब्रह्मतंतुः जगत्पट इत्यन्यत्रापि तन्नाशेऽपि ब्रूमः—ब्रह्मैव वस्तु तस्मिन्पटरूपस्य जगतोऽधपरंपरया व्यवहारोऽपि भ्रमस्तथापि न तंतुं विना पटोऽस्ति तथा नात्मानं विना जगदस्ति, यतस्तु न तंतुं विना पटो दृश्यते तथैव नात्मानं विना जगद्दृश्यते । न च जडत्ववैलक्षण्येन चैतन्याद्भेद इति वाच्यम् । पटरूपस्य तंतुवैलक्षण्येऽपि तंतुमात्रत्वात् । घटरूपस्य मृद्विलक्षणत्वेऽपि मृदेक-

मात्रत्वात्, तथा तत्त्वज्ञानात्पटे वस्तुत्वबुद्धिरेवमेवात्मतत्त्वस्याज्ञानाज्जगति वस्तुत्वबुद्धिरित्यादिदृष्टान्तत्वेऽपि बहुसाम्यादंधपरंपरयायं व्यवहारमात्र इति सिद्धम् । पटस्य दृश्यत्वेऽपि तंतुमात्रत्वात्पटाकारस्यावस्तुत्वादिष्टमेव । तथा प्रपंचांतरमनुमीयतां नाम । ननु तंतुपटदृष्टांतो ब्रह्मजगतोर्न घटते इति चेद्गुडफलवन्न विरुद्धम् । ननु 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति'[1] इति कर्मफलस्य नित्यत्वश्रवणाद्यन्नित्यं तत्सत्यमिति जगतः सत्यत्वं साधयाम इति चेत् 'तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते' इत्याद्याः श्रुतय आहुः—भ्रमयति भारती त उरुवृत्तिभिरुक्थजडानिति । भो भगवन्, ते तव भारती वेदाख्या उरुवृत्तिभिः उरुवृत्तयोऽनंता बुद्धयस्ताभिः कर्मफलाभिलापरूपाभिर्नानावासनायुक्ताभिर्बुद्धिभिरित्यर्थः । तदुक्तं भगवता 'बहुशाखा ह्यनंताश्च बुद्धयो व्यवसायिनाम्'[2] इत्येवंविधाभिर्बुद्धिभिरुक्थजडान् विविधहिंसात्मककर्मसु जडान्मंदमतीन्भ्रमयति वैदिके कर्मणि भ्रामयति । न केवललौकिकान्यथा ये कथंचिद्वैदिकदिशा विधिमनुसृत्य वर्तमानास्तानाविधफलश्रुतिभिर्मोहयति न तत्त्वज्ञानिन इत्यर्थः । 'तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते' इत्यादिन्यायोपबृंहितश्रुतिभिः कर्मफलस्यानित्यत्वेन प्रतिपादितत्वाच्चातुर्मास्ययाजिनां सुकृताद्यक्षय्यत्वं देवानाममरत्ववच्चिरावस्थायित्वादक्षय्यत्वमिति तात्पर्यम् ॥ ३६ ॥ (२३) ॥

सत्यादुत्थितमित्यतः सदिति चेन्नित्यान्न नित्यं कुतः
प्रत्यक्षाद्यदि चेत्क्व च व्यभिचरत्स्वप्नेऽपि चासत्पुनः ।
ग्राह्यं रूपमसदृशा गुणफणेरर्थक्रियाकृत्तथा
तंतौ नान्यपटभ्रमस्त्वयि हरे विश्वं तवाविद्यया ॥ १ ॥

इति श्रीमद्भागवते श्रुतिकल्पलतायां श्रुतिस्तुतिव्याख्यायां त्रयोविंशतिश्लोकव्याख्यानं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

॥ इति एकोनत्रिंशोऽध्यायः ॥

---

१ छां ८।१।६। २ भ. गी. २।४१।

# त्रिंशोऽध्यायः।

एवं प्रपंचसत्यत्वसाधकमात्रस्य बाधिततामुपपाद्येदानीं मिथ्यात्वसाधकै-स्तत्साधयन्त्यो भगवंतं तदधिष्ठानत्वेन स्तुवन्ति—

न यदिदमग्र आस न भविष्यदतो निधना-
दनुमितमंतरा त्वयि विभाति मृषैकरसे।
अत उपमीयते द्रविणजातिविकल्पपथै-
र्वितथमनोविलासमृतमित्यवयंत्यबुधाः॥ २४॥

यच्छब्देन यज्जगदग्रे तदुत्पत्तेः प्राक् नास नासीत् **'नासदासीन्नो सदासीत्तदानीम्'** इति श्रुतेः। प्रलयकाले च कथमपि तदविद्यमानत्वात्प्राग-भावत्वमुक्त्वा भाव्यभावत्वमाहुः—न भविष्यदिति। न यथा तथा भविष्यतीत्यर्थः। कुत इत्यपेक्षायामाहुः—निधनादिति। निधनत्वाद्धेतोरित्यर्थः। पदार्थमात्रस्य नश्वरत्वदर्शनाच्चरमतः सर्वं च नंक्ष्यतीति भावः। ननूत्पन्नस्य सतो घटस्य सदेव नाशोऽपि तथा जगदुत्पन्नं च नश्यत्यपि च तावता किं तन्मिथ्यात्वे साधकमित्यपेक्षायां **'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'** इत्याद्याः श्रुतय आहुः—अतस्त्वय्यंतरा इदं मृषेति। अतोऽस्मादेव हेतोर्मृदि घटस्योत्पन्नस्य प्रागविद्यमान-त्वादग्रे तदभावत्वान्मध्येऽपि मृदेव वस्तु न घटः। वस्त्वंतराभावादयमर्थो यथा, तथा त्वयि यत्प्रागविद्यमानमुत्तरत्राभावं प्राप्यमाणं अतोऽतरा मध्येऽपीदं मृषेत्यर्थः। ननु शुक्तौ मृषारजतस्य बाधमात्रेण दर्शनान्मृदि घटस्य पूर्वापराभावत्वात्सा-धितेऽपि मृषात्वे घटाकारस्य दर्शनान्न मृषेत्याशंक्याहुः—अनुमितमिति। अनुमाने-न साधितमित्यर्थः। अयं भावः—पर्वते वह्नेरदर्शनेऽपि तत्रास्तीत्यनुमीयते गिरेर्धूमवत्त्वाज्जलाभासे दृश्यमानेऽपि मिथ्येत्यनुमीयते किरणमृते वस्त्वंतराभावात्। तथा घटत्वे भासमानेऽपि मृदं विना वस्त्वंतराभावान्मिथ्येत्यनुमीयते तथानुमितं दीर्घदर्शिभिरिति शेषः। एवमेवाद्यंतयोरविद्यमानत्वादुत्तरत्राभावस्य भावित्वा-न्मृषेत्यनुमितमंतरेत्यनुषंगः। मध्ये स्थितिकाले इदानीमनुमितमनुमानेन निश्चितं पूर्वोत्तराभावमनुलक्षीकृत्य मितं निश्चितमिति वा, जीवन्मुक्तानामपि प्रपंचस्य यथापूर्वं दृष्टिगोचरत्वात्। **'प्रपंचो यदि विद्येत निवर्तेत न संशयः। मायामात्रमिदं द्वैतमद्वैतं परमार्थतः'** इति श्रुतेः। एवं प्रमाणानुमानाभ्यां

१ ऋ. सं. ८।७।११। २ छा. ६।४।१।

साधितेऽपि मिथ्यात्वे घटे मृदः प्रत्यक्षत्वाद्दार्ष्टांतिके जगति ब्रह्मणोऽदर्शनात्प्रत्यक्ष-विरुद्धत्वान्न जगन्मृषेत्याशंक्य तद्वदेव बुद्धेर्ब्रह्म प्रत्यक्षमित्युपपादयंति–एकरसे विभातीति। एक एव रस एकरसस्तस्मिन्विविधं भाति प्रतीतिविषयं भवतीत्यर्थः। अयं भावः–प्रत्यक्षं नाम दृष्टिविषयं, तच्च बुद्ध्या तत्र दृष्टिविषयं गतोऽपि घटो न बुद्धिं विना दृष्टिगोचरो भवति, दृष्टिं विनापि मनःकल्पितोऽयं घट इति मनसि बुद्धिगोचरो भवति स मिथ्येति बाह्यदृष्टः सत्य इति सदसद्विवेको बुद्ध्यैव भवति तस्माद्बुद्धिगोचरमेव प्रत्यक्षं, तथा सति 'दृश्यते त्वग्र्यया बुद्ध्या' इति ब्रह्मणोऽतींद्रियत्वेऽपि बुद्धिगोचरत्वं श्रुतिसिद्धं, तथा सति सा बुद्धिरिंद्रियद्वारा यद्यद्विजानाति तत्तद्यथा दृष्टिर्मृदं स्पृष्ट्वा घटं पश्यत्येवं चैतन्यं स्पृष्ट्वैव जगत्पश्यति, स च घटो यथा घटत्वस्य वाचारंभणत्वेऽपि मृदि विभाति तथा जगदखिलं विभाति चिदेकरसे इत्युक्तम्। चैतन्यस्य बुद्ध्यात्मत्वेन प्रतीयमानत्वात्। एतावता तिंद्रियाणां प्रतीतिरिंद्रियकर्दंबमृतेऽपि बुद्ध्या चिदाश्लिष्ट्यैव संभवति तत्सहितं च विश्वं चिदेकरसैकगम्यं ततो ब्रह्म न प्रत्यक्षमिति न च वाच्यं, यैरिंद्रियैर्जगत्प्रत्यक्षं तेषां चिदाश्लिष्टया बुद्ध्या प्रकाशितत्वात्प्रत्यक्षेऽपि दृग्गोचरोऽपिशब्दः श्रवणत्वभावं सर्वेंद्रियप्रकाशिकया बुद्ध्या तत्त्वविदामतत्त्वविदां च प्रत्यक्षमेव चैतन्यपूर्वकप्रतीतत्वात्। तच्च चैतन्यमेव ब्रह्मेति श्रुतिसिद्धं, तस्मात्प्रत्यक्षागमानुमानैश्च जगन्मिथ्येति गूढाभिप्रायः। ननु घटादिविकाराणां चलत्वपरिच्छिन्नत्वान्मृदश्चलत्वं परिच्छिन्नत्वं च दृश्यते, न तथा ब्रह्मणो जगति चले चलत्वं चराचरभेदैः परिच्छिन्ने परिच्छिन्नत्वं वक्तुं शक्यते, ततो न जगन्मिथ्येत्याशंक्य न हि दृष्टांते सर्वसाम्यं, नवात्र ब्रह्मणश्चलनराहित्यं परिच्छेदशून्यत्वमुपपाद्यते, किंतु तत्सत्यत्वे जगतो मिथ्यात्वमात्रमित्याहुः—अत उपमीयते द्रविणजातिविकल्पपथैरिति। अतोऽत्र। अस्मिन्मिथ्यात्वविषय इत्यर्थः। द्रविणजातिविकल्पपथैरुपमीयते द्रविणजातेर्मृत्सुवर्णादेर्विकल्पपथैर्भेदमार्गैर्घटकुंडलाद्याकारैरुपमीयते यथा मृदि घटादिविकारा असत्यास्तेषु यथा मृदेव वस्तु न घटादिकं, यथा च कनके भासमानकुंडलादिविकाराः तथा चराचररूपे विकल्पमार्गे ब्रह्मण्येकरसे चिदात्मनि भासमानत्वे उपमीयते मृषात्वमात्रे, न तु ब्रह्मणश्चलाचलत्वपरिच्छिन्नत्वापरिच्छिन्नत्वमीमांसात्र क्रियत इति भावः। गुडवत्फलमिति न्यायात्। यथा तु फलमाधुर्यमेवोपमीयते तत्र यंत्रद्वारा निष्पीडितेक्षुदंडरसपूर्वरूपस्याग्नितापादिपाकादिक्रियाविशेषसिद्धस्य गुडस्योपमानं घटते, कालत उद्भूतत्वकालकृतत्वादिवैलक्षण्यादिति वक्तुं न शक्यते, एवं मृदश्चलत्वपरिच्छिन्नत्वादिधर्मैरचलाऽपरिच्छिन्नस्य ब्रह्मण उपमा न घटत इति वक्तुं न

१ क. ३।१२।

शक्यते । न हि दृष्टांते सर्वसाम्यमिति न्यायादिति गूढाभिप्रायः । किंच उपमीयत इत्यनेन श्रुतिभिरस्माभिरीश्वरवचोरूपाभिरेव द्रविणजातिविकल्पपथैरुपमीयते न केवलं व्याकुर्वतां चातुर्यमात्रमित्यर्थः सूत्रितो द्रष्टव्यः । तथा च श्रुतयः— '**वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्**'[1] इति । इतिशब्द इवार्थे। मृत्तिका इव एव सत्यम् । विकारो नामधेयं वाचारंभणमिति पदान्वयः । घटाद्याकाररूपे विकारे घटादिनामधेये मृत्तिकेव यच्चराचरे जगति तदेव सत्यं मृत्पूर्वकघटस्फुरणवच्चित्पूर्वकजगत्स्फुरणत्वात् । मृदिव चिदेव वस्तु जडं जगद्वाचारंभणं विकारो नामधेयमित्यर्थः । एवं मृद्द्रविणविकल्पमार्गवदेव कनकादिविकल्पपथोपमया जगन्मिथ्यात्वस्यानेकश्रुतिसिद्धत्वात् '**यथा सौम्यैकेन मृत्पिंडेन सर्वं मृन्मयं विज्ञातं भवति । यथा एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्**' इत्यादिश्रुतिभिः एकेन मृत्पिंडेन हेममणिना वा मृत्सुवर्णादिवस्तुत्वं मृत्पिंडमण्यादि वाचारंभणत्वं विज्ञातं स्यादेवमेव एकस्मिन्नुपाधावेकोपाधिप्रकाशके चिदात्मन्यधिगते दृष्टादृष्टं श्रुताश्रुतं जगदेवमेव चिदेकप्रकाश्यं स्वतो वाचारंभणं विकारो नामधेयं तावन्मात्रमवस्तु मृषा चिदेव वस्त्विति विज्ञातं स्यादिति तात्पर्यम् ।

एवं द्रविणजातिविकल्पपथैरुपमितं मृषेत्युपपाद्येदानीं, ननु यद्यवस्तु तर्हि तत्त्वतो जगन्मिथ्येति कुतो वा न प्रतीयत इत्याशंक्य, न हि स्वप्ने स्वप्नो मिथ्येति गम्यते इति विवक्षया स्वप्नदृष्टांतेनाविद्याविलसितत्वात्तत्त्वतस्तन्मिथ्यात्वं स्फुटं न भवतीत्याहुः–वितथमनोविलासमृतमित्यवयंत्यबुधा इति । वितथं व्यर्थं च तन्मनोविलासरूपं च वितथमनोविलासं स्वाप्नं जगदित्यर्थः । अबुधा अज्ञाः निद्रिता विस्मृतजाग्रद्देहा इवात्मज्ञानहीना इत्यर्थः । '**अनादिमायया सुप्तः**'[2] इत्यादिश्रुतेः। ते तु ऋतमिति सत्यमित्येवावयंति जानंति। वितथमनोविलासमित्यनेन जागरे स्वमनःकल्पितनगरवदेव स्वाप्नं जगत्किंतु जाग्रद्देहविस्मरणात्सत्यवदेवाभातीति सूच्यते सर्वानुभवसिद्धत्वात् । नैतज्जाग्रज्जगत्स्वप्ने दृश्यते स्वप्ने छिन्नशिरसः शिरसो विद्यमानत्वात्पतितस्य गृहस्य यथापूर्वस्थितत्वात्, तस्मान्मनःकल्पित इत्येव तत्त्वम् । तथा च श्रुतिः–'**न[3] तत्र रथा न रथयोगा न पंथानो भवंति अथ रथान् रथपथश्च सृजति**' इत्यादि मनसा सृजतीत्यर्थः । न तत्र जाग्रज्जगद्वन्मृज्जलकाष्ठादिभिः स्वप्नसदनाद्यारंभो घटते। ननु '**यदा[4] कर्मसु काम्येषु स्वप्ने पश्यति चेत्स्त्रियम् । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने**' इति श्रुतेः शुभाशुभसूचकत्वात्स्वप्नः सत्य इत्येवास्त्विति चेत्स्वप्नसत्यत्वे तु

१ छा. ६।४।१। २ गरुड १।१०। ३ बृ. ४।८।१०। ४ छा. ५।२।९।

स्वप्नलब्धधनैर्जागरे दारिद्र्यभंगोऽपि स्यात्। स्वप्नदृष्टपदार्थानां सत्यत्वे सिद्धे तैः शुभाशुभफलनिदर्शनमनुमेयं स्यात्। तदभावे तु सति कुड्ये चित्रमिति न्यायात्तदसिद्धम्। यच्च देवतानुग्रहादि स्वप्नत्वेन क्वचिद्वर्ण्यते तल्लोकदृष्टिमनुसृत्य स्वप्नांतं स्वप्नांतरभूतत्वेन स्वीकृत्य स्वप्नत्वेनैव श्रुत्यादिषूपपाद्यते क्वचिल्लोकदृष्ट्यनुसरणश्रवणात्। यथा चात्र दशमस्कंधे पूर्वार्धे प्रथमे अध्याये 'अथ काल उपावृत्ते देवकी सर्वदेवता। पुत्रान्प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम्'[1] इति शुकोक्तिस्तत्र कन्यां यशोदा सुषुवेऽपि कंसवधपर्यंतं देवकीपुत्रिकेति लोकप्रसिद्धिमनुसृत्य देवकी सुषुवे इत्युक्तम्। तथा स्वप्नांते जाग्रद्देहावलोकनात्प्राक् स्वाराध्यदेवतादर्शनादि मंत्रोपलाभादि स्वप्नत्वेन लोके व्यवहरंति। तदनुसृत्य श्रुत्यापि 'यदा कर्मसु काम्येषु स्वप्ने पश्यति चेत्स्त्रियम्। समृद्धिं तत्र जानीयात्'[2] इत्याद्यभिधीयते, गंगायां घोष इति जहल्लक्षणया गंगातीरघोषवत्स्वप्नांतलब्धदेवताप्रसादादिकमपि स्वाप्नं इति अभिधीयते। यथा 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति कर्मफलस्यापि क्वचिदक्षय्यत्वमभिधीयते चिरावस्थायित्वाद्देवानाममरत्ववत्। तच्च लोकदृष्ट्या चिरावस्थायित्वादक्षय्यं दृश्यते ततः श्रुतयोऽप्याहुरक्षय्यमिति। ननु कर्मफलस्य श्रुत्यंतरबाधितत्वं श्रूयते न स्वप्नस्येति चेत् 'न तत्र रथा न रथयोगा न पंथानो भवंत्यथ सृजति'[3] इत्यादिना मनः सृजतीति स्फुटमभिहितत्वान्मनसा चिरदग्धदेहादिकल्पनावत्स्वाप्नकल्पनाया मिथ्यात्वं स्फुटं सूच्यते, किंतु लोकदृष्टिमनुसृत्य स्वप्नजागरसंधिकालः स्वप्नत्वेन क्वचिद्वर्ण्यते, श्रुतिश्च स्वप्न इत्युक्त्वा स्वप्ननिदर्शनमित्यभिधत्ते स्वप्नवन्निदर्शनं पश्यति यथा त्वन्नमयकोशस्यायमात्मेति विधीयते लोकप्रतीत्या स्थूलोऽहं कृशोऽहमिति व्यवहार्यमाणत्वात् सर्वं खल्विति श्रुतेरेव सामान्यतः स्वप्नजागरयोश्च मिथ्यात्वान्नात्र दोषः। तस्माद्यथा ध्यानादिना जागरे मानसपूजापूजिता देवता मनोमयैरुपचारैः प्रसन्ना भवति मनःकल्पितस्य मिथ्यात्वेऽपि जागरमनोव्यापारस्य फलजनकत्वात्, तथा निद्रांते जाग्रद्देहावलोकनात्प्राक् मनोमयी देवता स्त्रीरूपेण पुरुषाकारेण वा दृग्गोचरा भवति, तां च जागरे ध्यानांतर्भूतत्वाज्जनः प्रत्यक्षत्वेन मन्यते, स्वप्नांते स्वप्नगतमनःकल्पितस्य यथा प्रत्यक्षं दृष्टमिति मन्यते तथा तदंते जाग्रद्देहावलोकनात्प्राक् प्रत्यक्षतया दृष्टमिति मत्वा स्वप्नत्वेन मन्यते, यथा मरीचितोयं धावतो मृगस्य मध्ये प्राप्तं जलं तदेव पीतमिति स मृगो मन्यते तथापि न तन्मृषांबु तथायं न स्वप्नः स्वाप्नपदार्थस्य जागरे प्रतीतिविषयाभावात्।

---

१ भा. स्कं. १।५६। २ छा. ५।२।९। ३ बृ. ४।३।१०।

ननु स्वप्नसुरतस्खलितरेतसो जागरे दृश्यत्वात्स्वप्नः सत्य इत्यप्याहुरतीव मंदा अदीर्घदर्शित्वात्। रज्जुसर्पभयात्कंपस्वेदोद्गममूत्रस्खलनवत् स्वप्नसुरतसुखरेतःस्खलनं च, तावता किं तत्स्वप्नसत्यत्वसाधकं, क्वचिदिंद्रजालकुहकसुंदरीदर्शनमात्रेण जातकामस्य कस्यचिद्रेतः स्खलति तथा स्वप्नकामिन्या मिथ्यात्वेऽपि द्रष्टा भोक्तायमेवात्मा चेदेवमेव मनस्तत्र मनसा मृषास्त्रियं कल्पयित्वा रमयति तत्र जातेनानंदेन देहस्थं रेतः स्खलति रज्जुसर्पभयात्स्वेदोद्गममूत्रस्खलनवत्। अहो स्वप्नस्त्रीवरांगे स्खलितं रेतः कथमस्य शय्यायां वस्त्रे स्कन्नम्? तस्माज्जागरेऽपि मनसा सुंदरीसुरतध्यानाद्रेतः स्खलति, सा च चिरमृतापि स्मृता सती पूर्वसुरतध्यानेन रेतःस्खलनहेतुर्भवति ततस्त्वसत्यविवेकिनो य एवमाहुरलमित्यादिविस्तरैः। स्वप्नमिथ्यात्वस्य करकंकणस्य न हि न्यायाम्नायदर्पणापेक्षा, सत्ये स्वप्ने तु किं किं न सत्यं स्यात्। केचित्क्वचित्स्वप्नकृतपापप्रायश्चित्तश्रवणात्स्वप्नसत्यत्वं साधयंति तेऽपि मंदतमाः। यदि स्वप्नकृतं पापं फलजनकं स्यात्स्वप्नकृतशताश्वमेधयाजिन इंद्रपदप्राप्तिर्महादानादिफलं च श्रुतिभिरभिहितं स्यात्तदभावे तदभावः। तर्हि प्रायश्चित्तविधिवैयर्थ्यमिति चेत्तत्रेयं व्यवस्थितिः—जागरे यश्चाऽगम्यागमनादिषु समुद्भूतः संकल्पो लोकवेदभयादप्राप्तत्वाद्वा न तत्कर्मसिद्धिं प्राप्तः स एव संस्कारः स्वप्ने विवेकबलराहित्यादाविर्भवति तेन तत्र तत्संपादयति च तत्प्रायश्चित्तेन जागरे मानसिकपापपरिहार इति व्यवस्थयायं प्रवृत्तो विधिरन्यथा स्वप्नकृतकर्मभिः शुभाशुभैरस्य स्वर्गनरकादि फलं दुर्वारं तच्च न घटते तस्मादशास्त्रमन्याय्यमिदं स्वप्नसत्यत्वसाधकसाधनवृंदमित्यलं विस्तरैः॥ २७॥ (२४)॥

यदग्रे नैवासीदथ च न भविष्यन्निधनमत्
ततो मध्येऽपीशे जगदसदिदं त्वय्यनुमितम्।
अतो मृल्लोहादौ कलशकटकाभं बत मनो
विलासं यत्स्वाप्नं तदपि च सदित्याहुरबुधाः॥ १॥

इति श्रीमद्भागवते श्रुतिकल्पलतायां श्रुतिस्तुतिव्याख्यायां चतुर्विंशतिश्लोकव्याख्यानं नाम त्रिंशोऽध्यायः॥ ३०॥

॥ इति त्रिंशोऽध्यायः॥

# एकत्रिंशोऽध्यायः ।

एवं पूर्वपद्ये जगदसत्यमपि तन्मिथ्यात्वमबुधा न विदुरविद्यया स्वप्ने स्वप्नमिथ्यात्ववदित्युक्तं तत्राविद्याविवर्तस्याधिष्ठानं ब्रह्मैव, तच्च जीवेश्वरयोरेकं स्वरूपं, तथा सति स्वरूपैक्यादीश्वरस्यापि कुतो नाविद्यया जगत्सत्यत्वप्रतीतिरित्यपेक्षायां प्रलयानंतरकालशेषाद्ब्रह्मणः प्रथममीश्वरोपाधेराविर्भावस्तत ईश्वरस्य दृष्टधर्मयुक्तस्येक्षया स्वरूपाद्ब्रह्मणो गुणात्फणिरिवाविद्याविर्भावस्तामीश्वरस्तस्या आविर्भावकाले सर्पः स्वशरीरगतां त्वचमिव त्यक्त्वा पुनर्न स्पृशतीति न्यायादधिष्ठानात्तामुत्पाद्य तस्यां प्रतिबिंबत्वेन प्रविश्य स्वयं बिंबरूपः स्वनित्यविद्योपाधित्वान्नित्याधिगतगुणो मिथ्या फणिमिव फणित्वेन न पश्यतीत्येवं स जीववज्जगत्सत्यमिति न मन्यते स जीवस्त्वविद्यया गुणज्ञानाभावात्फणिमिव पश्यन्नानायोनिषु भ्रमन्नास्त इति 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपाम् । अजो ह्येको जुषमाणो नुशेते जहात्येनां भुक्तभोगामजोऽन्यः'[1] 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति'[2] 'एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे । तं पाकेन मनसाऽपश्यमंतितस्तं माता रेळिह स उ रेळिह मातरम् । सुपर्णं विप्राः कवयो वचोभिरेकं संतं बहुधा कल्पयंति'[3] इत्याद्याः श्रुतयः प्रथमं पूर्वार्धेनाविद्याया आवरणविक्षेपभेदेन रूपद्वैविध्यमुक्त्वा तदुत्तरार्धेनेश्वरस्य तव तदसंबंध इति न्यायतः स्फुटयंत्य आहुः—

स यदजया त्वजामनुशयीत गुणांश्च जुषन्
भजति सरूपतां तदनु मृत्युमपेतभगः ।
त्वमुत जहासि तामहिरिव त्वचमात्तभगो
महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥ ३८ ॥ (२५) ॥

स यत्तु अजया अजां अनुशयीत गुणान् जुषन् अपेतभगः सरूपतां तदनु मृत्युं च भजति इति क्रमेण पदयोजना । अयमर्थः—स इति तच्छब्देन पूर्वपरामर्शः । पूर्वोक्ता अबुधा ये तु जगत्सत्यमिति मन्यंते ते । जात्येकवचनात्स इत्युक्तम् । स तु यत् य इत्यर्थः । यः जीवः अजया अविद्यया मामहं न जानामीत्यावरणरूपया अजामविद्यां विक्षेपरूपां अनु अनुलक्षीकृत्य शयीत स्वपेत् स गुणान् जुषन् सरूपतां तदनु मृत्युं च भजति, त्वं तु न तथेत्युत्तरार्धेन वदिष्यंति । तत्र प्रथमं जीवमाहुः—

१ श्वे. ४।५। २ मु. ३।१।१। ३ ऋ. सं. ८।६।१६।

अजया स्वरूपाविद्यया अजामविद्यां विक्षेपरूपां अनुलक्षीकृत्य असत्यान्विषयान-सत्यैरिंद्रियैरुभयत्र सत्यत्वधिया कृतस्य स्वीकारस्याविद्यारूपत्वाद्विक्षेपरूपामविद्या-मनुलक्षीकृत्य स्वस्वरूपाज्ञानरूपयाऽविद्यया यस्तु शयीत स पूर्ववत्प्राकृतः वितथ-मनोविलासमृतमिति जानीयान्न प्रबुद्धः, एते मया मनसा कल्पिता मिथ्या विलासा इति ज्ञानवानित्यर्थः। तथा सति नित्यप्रबुद्धस्त्वं भगवानसत्यं सत्यतया न वेत्सीति किं वक्तव्यम्? तस्मात्त्वांशा अविद्यया अनुशायिनो जीवा एव वितथ-मनोविलासमृतमित्यवयंति जानंति ते एवाबुधा इत्यभिप्रायः। 'अनादिमायया सुप्तः'[1] इत्यादि श्रुतिसिद्धावरणाविद्याया निद्रासाम्याद्विक्षेपरूपायाः स्वप्नसादृश्यात् स्वप्नमनोविलासमात्रस्य प्रपंचस्य सत्यतयाधिगमस्यानुभवसिद्धत्वात्। एवमवि-द्यया सुप्तस्यान्यथाज्ञानस्य फलं वदंत्यस्तदपि न वस्तुत इत्याहुः—भजति सरूपता-मिति। सरूपतां अविद्यासमानरूपतां त्रिगुणमयतां नानायोनिरूपतां भजति प्राप्नोति न वस्तुतो नानायोनिस्वरूपत्वमित्यर्थः। एतावता 'अजामेकां[2] लोहित-शुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपाम्' इति श्रुत्यर्थ एव स्फुटीकृतो द्रष्टव्यः। आवरणस्य कृष्णवर्णतमोगुणत्वात् विक्षेपस्य लोहितरजोगुणत्वात् सत्त्वस्य शुक्लस्य तदुभयप्रकाशकत्वात्। 'सत्त्वात्संजायते ज्ञानम्'[3] इति भगवता गीता-सूक्तत्वात् निर्गुणे चैतन्ये सत्त्वस्य वृत्तिरूपज्ञानप्रकाशोपयोगित्वात् अग्नौ काष्ठा-दिवत्। एवं लोहितशुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपां इतिश्रुत्युक्तनानादेहो-त्पत्त्या तदुत्पत्तिं भजतीत्युक्त्वा तन्मरणे मरणं च तदनुरूपत्वाद्भजतीत्याहुः—तदनु मृत्युमिति। तदनु तदनंतरं नानायोनिषु सरूपत्वभजनानंतरं मृत्युं च भजतीत्यर्थः। किं कुर्वन्सरूपतां भजतीत्यपेक्षायां 'अजो ह्येको[4] जुषमाणोऽनुशेते' इति श्रुत्यर्थं वदंत्यो ह्यजाशब्दस्य विभक्तिभेदेन स यदजया त्वजामनुशयीतेत्युक्तावरण-विक्षेपरूपभेदेनाभिप्रेतमविद्याद्वैविध्यं स्फुटयंत्य आहुः—गुणांश्च जुषन्निति। गुणान् विषयान् स्वीकुर्वन् शयीतेत्यन्वयः। विषयसेवनस्य विक्षेपरूपत्वात् चकारेण मामहं न जानामीत्यावृतश्च विक्षेपरूपामनुलक्षीकृत्य गुणान् जुषन् सरूपतां भजतीति सूत्रयंति। ननु गुणान्जुषन्नविद्यासरूपतां भजत्यपि यदि न स्वरूपहानिस्तदवस्तुत्वात्तर्हि देहेन सहोत्पत्तिमरणस्य भगवदवताराविर्भावतिरोभाववदस्तुनाम मिथ्या जगति सत्यबुद्धिरित्याशंक्याहुः—अपेतभग इति। अपगतं भगं भगवतः स्वबिंबस्य षड्विधैश्वर्यादिकं यस्मादित्यपेतभगः सुप्तस्य नृपस्य देहांतरेण दरिद्रत्वानुभववत्प्रतिबिंबत्वादित्यर्थः। अजया त्वजामनुशयीतेत्युक्तत्वात्। एतावता वितथमनोविलासमृतमित्यवयंत्यबुधा इत्युक्तम्। मनोविलास-

१ गरुड़ १।१०। २ श्वे. ४।५। ३ भ. गी. १४।१७। ४ श्वे. ४।५।

मात्रेऽपि स्वाप्ने प्रपंचे सुप्तस्य विस्मृतजाग्रद्देहस्य सत्यत्वबुद्धिर्न प्रबुद्धस्य, तथा स्वबिंबभागविस्मृतिरूपया अविद्ययानुशायिनो जीवस्य जगति सत्यत्वं न नित्यप्रबुद्धस्य विद्योपाधेरित्यर्थत एव सिध्येदिति । नन्वविद्याविद्ययोर्मायात्वाविशेषान्मय्यधिष्ठाने गुणे फणिवदविद्याया आविर्भूतत्वान्मामप्यावरणविक्षेपौ कुतो वा न करोतीत्यपेक्षायां दृष्टांतमुखेन तदकरणकारणं वदन्तो 'जहात्येनां भुक्तभोगामजोऽन्यः' इति श्रुतेरर्थं स्फुटयंत आहुः—त्वमुत जहासि तामहिरिव त्वचमिति । उत एवमपि तव विद्योपाधेश्चाविद्यायाश्च मायात्वाऽविशेषत्वेऽपि व्यापकस्य तव तदधिष्ठानत्वेऽपि अहिः त्वचमिव स्वशरीरोद्भूतां स्वशरीरभूतामपि त्यागयोग्यतया सिद्धां त्वचं यथा त्यक्त्वा पुनर्न स्पृशति तथा त्वय्यधिष्ठाने विवर्तरूपापि जीवोपाधितया सर्गादौ तस्या आविर्भावकाल एव तां पृथक्तया संत्यज्य 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः तस्यां प्रतिबिंबत्वेन प्रविश्य तं स्वचिदंशं तद्धोक्तारं विधाय स्वयं बिंबत्वेन विद्योपाधितया साक्षितया नित्यानंदस्वरूपतां न स्पृशसीति भावः । श्रुत्यैवोक्तोऽयमर्थः 'जहात्येनां भुक्तभोगामजोऽन्यः' इति । भुक्तो भोगो यस्यास्तां भुक्तभोगामिवेति यावत् । भुक्तभोगरूपो भुक्तभोगां तां जहाति तामिवैनां जहातीत्यर्थः । अजोऽन्य ईश्वरः भुक्तभोगसादृश्यात् भुक्तभोगां भुक्तो भोगो यस्या अविद्यायास्तामित्यर्थः । भोगशब्दस्य मुख्योऽर्थ ईश्वरत्वान्न संभवति । भुक्तो भोगो जीवेन यस्यास्तामजोऽन्य ईश्वरो जहाति त्यजतीति चेद्दासभगुणमश्वस्त्यजतीतिवदयमर्थः । तस्मिन्पक्षेऽपि त्याजयतीति विवक्षितं स्यात्तथापि क्लिष्टकल्पितत्वात् श्रीमद्भागवतानुसार एवार्थो नान्यः । नन्वहं न स्पृशामि चेन्मदंशमिव सैव मां किं न स्पृशेन्मम तस्या अधिष्ठानत्वादित्यपेक्षायामाहुः—आत्तभग इति । आत्तं स्वीकृतं भगं षड्गुणत्वं येन स तथा । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चेति षण्णां भग इतींगना' इति । स्वतःसिद्धज्ञानवैराग्योपाधेस्तत्प्रतियोगित्वात्तदुपाधिमंतं भगवंतं त्वामविद्या न स्प्रष्टुं शक्नोतीत्यर्थः । अतः स्वरूपैक्येऽपि जीवेश्वरयोरुपाधिकृतमहदंतरमिति भगवंतं परत्वेन स्तुवन्ति—महसि महीयसेऽष्टगुणिते इति । अष्टगुणिते अणिमाद्यष्टसिद्धिरूपे महसि महत्त्वे महीयसे महत्त्वेन पूज्यसे विराजस इत्यर्थः । ननु तर्हि परिमितमैश्वर्यमित्याशंक्याहुः—अपरिमेयभग इति । शास्त्रगोचरमष्टगुणितमित्युच्यते तदैश्वर्यमितरेषां ब्रह्मादीनाम् । तव भगं त्वपरिमेयमित्यर्थः ॥ ३८ ॥ (२५) ॥

सदिदमित्यवयंत्यनुशायिन-

स्तदजयाथ भजंति सरूपताम्।

त्वमुत तां प्रजहास्यहिवत्त्वचं

स्वशरणं भगवन्नव मां ततः॥ १॥

इति श्रीमद्भागवते श्रुतिकल्पलतायां श्रुतिस्तुतौ पंचविंशतिश्लोकव्याख्यानं नामैकत्रिंशोऽध्यायः॥ ३१॥

॥ इति एकत्रिंशोऽध्यायः॥

## द्वात्रिंशोऽध्यायः।

एवमावरणविक्षेपरूपया द्विविधयाऽविद्ययाऽनुशायी जीवस्तत्सरूपतां भजतीत्युक्त्वा आत्तभगत्वात्स्वतःसिद्धज्ञानवैराग्यप्रचुरोपाधित्वाद्भगवतस्तदधिष्ठानत्वेऽप्यविद्यास्पर्शो नास्तीत्युक्तं, तावता तदनुग्रहलब्धज्ञानवैराग्यस्य जीवस्याविद्यावरणभंगश्च विक्षेपस्य बाधितानुवृत्तित्वं च संभवतीत्यत उपक्रमत एव जयजयजह्यजामित्याद्यविद्याहरणाय प्रार्थितो भगवान्। इदानीं केचिद्भगवद्भजनविमुखाश्चिदचिद्विवेकज्ञानमात्रेण मुक्ता वयमिति मन्यमाना अकृतभगवद्भक्तियोगा अलब्धवैराग्या अंतरिताभ्यासास्तान्निंदंत्यो '**यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते**'[1] इत्याद्याः श्रुतयः कामत्यागं विना अभ्यासासंभवाद्यतीनां श्रुतात्मनामप्यात्मा दुरधिगम इत्याहुः—

यदि न समुद्धरंति यतयो हृदिकामजटा

दुरधिगमोऽसतां हृदि गतोऽस्मृतकंठमणिः।

असुतृपयोगिनामुभयतोऽप्यसुखं भगव-

न्ननपगतांतकादनधिरूढपदाद्भवतः॥ ३९॥ (२६)॥

यतयः संन्यासिनः संतोऽपि यदि हृदिकामजटा न समुद्धरंति हृदि स्थिताः कामस्य जटा इव जटाः। यथा केशानां चिरवृद्धानां मलिनानां बहूनामेकीभावं गतानां संख्या न संभवति न चालब्धसंस्काराणां विवेकश्च तथा चिरप्रवृद्धकामानामलब्धभोगानामगणितत्वादिसाम्याज्जटा इत्युक्तम्। एवं कामजटा यदि न

१ बृ. ४।४।७।

समुद्धरंति न सम्यगुत्पाटयंति। आश्रमधर्मत्वाद्यथोत्पादितां शिखां मुहुः शिरोमुंडनतयाऽनपेक्षमाणास्तथा वमनप्रायत्यक्तं विषयभोगाभिलाषमंतः संन्यासिनो न स्वीकुर्वंति, एवं यदि न समुद्धरंतीत्यर्थं सूत्रयंति समितिपदप्रयोगात्। यद्येवं न कुर्युस्तर्ह्याश्रमसंन्यासमात्राच्छ्रुतात्मनामप्यात्मा दुर्ज्ञेय इत्याहुः—दुरधिगमोऽसतामिति। असतामशुद्धचित्तानां त्वमात्मा दुरधिगमो दुष्प्रापः। 'संन्यस्य श्रवणं कुर्यात्' इति विधिश्रवणमात्रविस्रब्धा बाह्यशिखासूत्रमात्रत्यागिनः 'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः'[1] इति भगवता व्याकृतसंन्यासधर्मं यदि नाश्रयंति तर्हि श्रवणसंपन्नानामपि नात्मसाक्षात्कार इत्यभिप्रायः। ननु महावाक्यश्रवणसंपन्नानामात्मानात्मविवेकनिपुणानां विज्ञातजडोपाधिविलक्षणचिदात्मतत्त्वानां यतीनामपि कथमात्मा दुरधिगम इति चेत्तत्राहुः—हृदिगतोऽस्मृतकंठमणिरिति। हृदि मनसि गतो ज्ञातोऽपि अस्मृतकंठमणिः विस्मृतकंठमणिरिव भवति। अयमर्थः—स्वयं ज्ञात्वा कंठे बद्धः कंठे विद्यमानोऽपि न स्मृतश्चेन्मणिः कंठे नास्त्येवेति यथा भवति तथात्मा ज्ञातोऽप्यविरक्तस्य विषयवासनाभिभूतचित्तस्याभ्यासाऽसंभवात्साक्षाद्वृत्त्यनवधानतयाऽनधिगतत्वादनधिगत इव भवतीत्यर्थः। तदुक्तं भगवता—'श्रुत्वाप्येनं वेद न चैव कश्चित्'[2] इति। न च वाच्यं चिदचिद्विवेकज्ञानशून्यानां यतीनां निंदेयमिति। अस्मृतकंठमणेर्दृष्टांतस्य श्रुतात्मेतरत्राऽसंभवात्। कंठे मणेर्धारणस्य बुद्धिपूर्वकत्वात्। न हि मणिः स्वतः कस्यचित्कंठे दृश्यते किंतु कंठस्य चक्षुरगोचरत्वाद्बुद्ध्या यावत्स्मर्यते तावदेवायं मणिरिति तदधिगमो नान्यथा तथात्मा अतिगूढे हृदि गतो ज्ञातोऽप्येवम्। न च वाच्यं मणिः शिशुकंठे मात्रादिभिरर्पितस्तद्वदात्मा स्वतःसिद्धोऽपि न ज्ञातुं शक्यत इति। शिशोः पशोरिव स्मरणाधिकाररहित्यान्नहि पशोर्विस्मृतकंठमणेर्निंदा संभवति। एतावता चिदचिद्विवेकज्ञानमात्रस्य साक्षात्कारत्वं न संभवतीति सिद्धम्। किंतु वृत्तिशून्येन चित्तेन चिदाकाराकारितेन यः स एव साक्षात्कारः। ननु नहि दृष्टांते सर्वसाम्यमितिन्यायात् बुद्धिपूर्वकधारणत्वादिहेतोर्नास्त्ययमर्थः, किंतु विस्मरणमात्रे दृष्टांत इति चेत् किमनादिविस्मरणे दृष्टांतो वा उत गुरुमुखाधिगमानंतरकाले विस्मरणे? आद्ये तु नात्रैवं वक्तुं शक्यते अस्मृतकंठमणिरित्युक्तत्वात् निंदाप्रकरणत्वाच्च। तदन्यत्र यत्र न निंदाप्रकरणं न च तत्राऽस्मृतपदप्रयोगः स्यात्। स्मरणस्य बुद्धिकृतत्वात् बुद्धेरनाद्यविद्यया स्वरूपाधिगमराहित्याद्यावद्गुरुमुखात्तत्त्वाधिगमो न स्यात्तावत्स्मरणासंभवात्, संभाविते स्मरणे तु अस्मृतकंठमणिवद्दुरधिगमस्त्वमिति निंदावसरः स्यादन्यथा सति कुड्ये चित्रमिति न्यायात् स्मरणाधिकारं विना स्मरणाभावात् दुरधिगमत्वनिंदाया असंभावितत्वात्।

---

१ भ. गी. १८।२। २ भ. गी. २।२९।

अनधिगतात्मानो यदि निंदायोग्याः स्युस्तर्हि जीवमात्रोऽपि किं न निंद्यः स्यात्सर्वेषामनधिगतकंठमणिवदस्त्येव । ननु संन्यासाश्रमत्वान्निंदाऽयोग्येति चेत्संन्यासिनां नामवेषधारिणामात्मा दुरधिगम इत्यत्र किं चित्रं विरक्तानामप्यश्रुतात्मनां दुरधिगमत्वात् । तत इत्यपि निंदावसरो न दृश्यते, दंभन्यासिनामात्मा दुरधिगम इत्यत्र न हेतोरपेक्षा, तस्मादधिगतचिदचिद्विवेकयतिनिंदेयमित्येव सिद्धम् । नैतावत् किंतूत्तरार्धेनैतदेव श्रुतयः स्फुटयंति—असुतृपयोगिनामुभयतोऽप्यसुखमिति । असुतृपयोगिनामिंद्रियतर्पणपराणां योगे प्रवृत्तानामुभयतोऽप्युभयत्रापि असुखं दुःखम् । किं तदुभयं यत्र दुःखमित्यपेक्षायां द्विविधो योगः । सविशेषः सर्वात्मदर्शनलक्षण एकः, केवलनिर्विशेष एकः । एवं द्विविधयोरप्राप्तत्वादुभयत्राप्यसुखं विषयपराणामसाध्यत्वादित्याहुः—अनपगतांतकादनधिरूढपदादिति । अंतकस्य मृत्योरनपगतत्वादनिवृत्तत्वात् । 'मृत्योः[1] स मृत्युमाप्नोति य इह नानेव पश्यति' इति श्रुतेः । चिदचिद्विवेकज्ञानेऽपि कामाभिभूतस्याभ्यासराहित्यान्नानात्वसंस्कारस्य यथापूर्वत्वान्न मृत्युर्निवर्तत इति भावः । निवृत्तनानात्वबुद्धेरेव भयनिवृत्तिरिति शास्त्रसिद्धत्वात् । तदुक्तं भगवता-'यो[2] मां पश्यति सर्वत्र सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति' इति । तस्माद्यावन्नानात्मधीर्न निवर्तते तावद्योगभ्रंश इति सिद्धम् । तथा च वक्ष्यत्येकादशस्कंधे हंसरूपेण श्रीकृष्णरूपो भगवान्—'यावन्नानार्थधीः[3] पुंसो न निवर्तेत युक्तिभिः । जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा' इति । यावन्नानात्मबुद्धिर्न निवर्तते तावज्जागर्त्यपि चिदचिद्विवेकमात्रेण ज्ञातात्माहमिति मन्यतेऽपि, स्वप्ने यथा जागरणं तत्र स्वप्ने प्रबुद्धोऽहमिति मन्यमानोऽपि स्वपन्नज्ञ एवास्तीत्यर्थः । कामाभिभूतो मननाद्युपायशिथिल इत्याह—न निवर्तेत युक्तिभिरिति । नहि तंतुं विना पटो दृश्यते न च दृष्टिर्गुणमस्पृष्ट्वा फणिं पश्यतीतिवज्जडस्य जगतश्चिदाश्लिष्टया बुद्ध्या प्रतीतिविषयत्वात् परप्रकाश्यत्वात् प्रकाश्यस्य प्रकाशैकरूपत्वात्फणेर्गुणवत्सर्वं खल्विदं ब्रह्मेति यावन्न वेत्ति तावच्छ्रुतात्माप्यज्ञ एवेति हंसोक्तश्लोकार्थः । इदमेव तात्पर्यं श्रुतेश्च 'मृत्योः[4] स मृत्युमाप्नोति य इह नानेव पश्यति' इति यत्तच्छब्दाभ्यां यः को वा भवतु न नानात्वं मिथ्येति य इह ब्रह्मणि नाना पश्यति स मृत्योर्मृत्युमाप्नोति तावता श्रुतात्मा वा भवतु सोऽप्येवमिति तात्पर्यम् । तत इवशब्दप्रयोगोऽत्र श्रुतात्मापि सर्वं ब्रह्मेति विचारितार्थोऽपि ज्ञात्वापि नानेव पूर्ववदिवेत्यर्थः । यद्येवं पश्यति सोऽपि मृत्युमाप्नुयादेव किं पुनरश्रुतात्मेति तात्पर्यम् । अन्यथा साधारणानां नानात्वदर्शनं तत्फलं मृत्युरस्त्येव तेषां 'नेह[5] नानास्ति

---

१ बृ. ४।४।१९। २ भ. गी. ६।३०। ३ भा. स्कं. ११।१३।३०
४ बृ. ४।४।१९। ५ बृ. ४।४।१९।

किंचन' इति नानात्वनिषेधोपदेश एवालं, यस्मादेवं तस्मादनपगतांतकादित्युक्तं, नानात्वसंस्कारदार्ढ्यान्मृत्योरनिवृत्तत्वात्पुनः संसारस्य दुर्वारत्वादसुखमित्यभिप्रायः। एवं सविशेषयोगप्राप्त्यभावादेकत्र दुःखमित्युक्त्वा निर्विशेषयोगाभ्यासे प्रवृत्तानां श्रुतात्मनां यतीनां कामाभिभूतत्वाल्लयविक्षेपोपहतत्वात्तत्राप्यसुखमित्याहुः—अनधिरूढपदादिति । अनधिरूढपदत्वादित्यर्थः । लयविक्षेपबाहुल्यात्स्वरूपे चित्तस्थैर्याभावात् । एवं द्विविधयोरभ्यासयोरपि कामाभिभूतानां दुःसाध्यत्वाद्दुःखमित्यर्थः । चित्तनाशायोपायांतराभावात् । यथाह भगवान् वसिष्ठः–'द्वौ क्रमौ चित्तनाशाय योगो ज्ञानं च राघव । योगो वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणम्' इति । सम्यगवेक्षणं पटे तंतुवज्जडे जगति चिदात्मेक्षणं, शेषं स्पष्टम् । ततस्तेषामुभयतोऽप्यसुखं जीवन्मुक्तानामुभयत्र परिनिष्ठितत्वात् जीवन्मुक्तिर्न चोभयोरेकत्र वा निष्ठादार्ढ्येन देहांते मुक्तिरिति गूढाभिप्रायः । तथा चैतदुत्तरपद्येनाह भगवान् वसिष्ठः–'असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिश्चयः । प्रकारौ द्वौ ततो देवो जगाद परमः शिवः' इति । तत्र द्वौ क्रमाविल्याद्यपद्येनोक्तयोः कस्यचिद्योगोऽसाध्यो भवति लयविक्षेपयोर्दुर्जयत्वात्तथापि वृत्तिनिरोधाभ्यासबलेन तत्र स्थैर्यालाभे सति ब्रह्मात्मत्वश्रद्धादार्ढ्यात् पुनःपुनः स्वरूपस्य वृत्तिव्यतिरेकेणालक्षीक्रियमाणत्वात्सम्यगवेक्षणलक्षणे सविशेषयोगे ध्यानाख्ये बुद्धिः परिनिष्ठिता भवति, तस्य घटे मृदिव सर्वत्र ब्रह्मत्वबुद्ध्या चित्तस्य नानात्वसंस्कृतस्य नाशो भवतीत्यतस्तस्य सम्यगवेक्षणलक्षणं सविशेषयोगाख्यं ज्ञानमेव साध्यं भवति न योगस्ततस्त्वसाध्यः कस्यचिद्योग इत्युक्तम् श्रुतिस्मृतिसिद्धत्वात् । कस्यचित्तत्त्वनिश्चयः । पटे तंतुमात्रस्येक्षणं तत्त्वनिश्चयः । पटो दृश्यतेऽपि तंत्वेकमात्रत्वात्तंतुप्रकाश्यत्वात्पटो नास्त्येव अवस्तुत्वादिति सम्यगवेक्षणं तद्वच्चिदेकप्रकाश्यत्वाच्चिदेकमात्रं जडं जगत्। ततो जगत् वाचारंभणमात्रं न वस्त्विति तत्त्वनिश्चयः सोऽसाध्य इत्यर्थः।

ननु सत्यज्ञानानंतादिलक्षणस्यात्मतत्त्वस्य जडनिषेधशेषत्वेन यस्तत्त्वनिश्चयः सोऽसाध्य इति वक्तुं शक्यते । तदनधिगतस्य योगः साध्य इति वक्तुमशक्यत्वात् । नह्युत्पत्तिं विना कश्चन युवा भवतीति न्यायात्। नह्यनधिगतात्मनो वृत्तिनिरोधलक्षणो योगः साध्यो भवति । 'असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिश्चयः' इत्युक्तत्वाद्यस्य तत्त्वनिश्चयो दुःसाध्यस्तस्य योगः साध्य इति सिद्धत्वात् । तस्माद्ब्रह्मात्मत्वाधिगतस्य साधकस्य तत्त्वनिश्चयोऽसाध्य इत्यनेन समाधीतरकाले विविधवृत्तियुक्तेन चित्तेन देहयात्रादिनिर्वाहकाले तस्य जगद्ब्रह्मैकमात्रं न बुद्धिगोचरं भवति निर्विशेषसुखलब्धस्य तदेकनिष्ठस्य तदौत्कंठ्यशबलचित्तस्य कदा वा पुनर्वृत्तिनिरोधेनात्मनि चित्तस्थैर्यजनितसुखमनुभविष्यामीत्यौत्सुक्यान्न बुद्धिः सर्वत्र ब्रह्मनिरीक्षणे स्थिरा भवतीत्यसाध्य-

स्तस्य तत्त्वनिश्चयः किंतु क्षीणे प्रारब्धभोगे स मुक्तो भवत्यपि न तस्य जीवन्मुक्तिः। समाधीतरकाले तस्य जगतो यथावद्दृश्यमानत्वात्। ननु तस्य नानात्वबुद्धिनाशाभावात् 'मृत्योः स मृत्युमाप्नोति'[1] इति श्रुतेर्न मुक्तिरिति चेन्मैवं, सर्वं ब्रह्मैवेति बुद्धिनिश्चयान्न तस्य नानात्वसत्यत्वमतिरतो देहांते मुक्तो भवति । कस्यचित्तत्त्वनिश्चयोऽसाध्य इत्युक्तत्वात् तत्त्वनिश्चयाख्ये सर्वत्र ब्रह्मावेक्षणयोगाभ्यासे प्रवृत्तस्यैव साध्यासाध्यत्वस्य विवक्षितत्वात्। अभ्यासद्वये प्रवृत्तस्यैकत्र निर्विशेषयोगचित्तस्थैर्यलाभान्न तस्य सर्वत्र ब्रह्मावेक्षणे मनसः प्रवृत्तिरतो दुःसाध्यत्वं, तथा च यावत्सर्वं ब्रह्मेति निश्चयो न भवति तावत् ज्ञानमेव तन्न भवति । आत्मज्ञानस्य सर्वत्र ब्रह्मनिरीक्षणं असाधारणं लिंगमिति निर्णीतत्वात् तदभावे तज्ज्ञानमेव न भवति कुतस्तस्य योगसिद्धिः? तस्माद्यदा सर्वत्र ब्रह्मनिरीक्षणं तदानीमेव ज्ञानमिति वाच्यम्। यथाह भगवान् 'यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पांडव। येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि'[2] इति। येन ज्ञानेन भूतान्यशेषेणात्मनि द्रक्ष्यसि तंतौ पटवत्। अथानंतरमेवं यदानुभवस्तदानीं मयि परमेश्वरे आत्मानमभेदेन द्रक्ष्यसि न तावन्मय्यभेदसाक्षात्कार इत्यर्थः । यतस्त्वशेषेण भूतानि मयीति ममानुभवतः स एव न यावन्न तावन्ममाभेदप्रतीतिः। मदात्मना मद्विद्यया यदा सर्वत्रात्मानं पश्यति तदानीं मय्यभेद इति भावः । तस्माद्यावद्भूतान्यशेषेणात्मनि द्रक्ष्यसि न तावन्मय्यभेदसाक्षात्कार इत्यथेतिपदेन सूचयति। न च तावदात्मज्ञानं येन भूतान्यशेषेण द्रक्ष्यस्यात्मनीत्युक्तत्वात् । अंधो यया दृष्ट्या घटपटादिकं द्रक्ष्यति सा दृष्टिरितिन्यायात् घटपटाद्यदर्शने यथा न दृष्टिलाभस्तथाऽशेषभूतानामात्मनि न यावद्दर्शनं न तावज्ज्ञानमिति भावः। न यावज्ज्ञानं न तावद्योगस्तस्मात्सर्वभूतात्मन एव योगः साध्यः, किंतु योगे प्रवृत्तत्वात्तत्सुखैकौत्सुक्याद्देहयात्रादौ प्रारब्धभोगकाले न तस्य सम्यगवेक्षणं घटते, ततो जीवन्मुक्त्यभावेऽपि देहांते तस्य मुक्तिः 'द्वौ क्रमौ चित्तनाशाय' इत्युक्तत्वात्। यदा चित्तनाशस्तदा मोक्ष इति सिद्धांतः। चित्तस्य जीवोपाधित्वात् उभययोगे प्रवृत्तस्यैकत्र परिनिष्ठितत्वात्। एवमेवासाध्यः कस्यचिद्योग इत्युक्तस्य चोभययोगे प्रवृत्तस्य निर्विशेषयोगोऽसाध्योऽपि सविशेषयोगे परिनिष्ठितत्वाज्जीवन्मुक्त्यभावेऽपि देहांते मुक्तिः। तस्मान्निर्विशेषयोगे प्रवृत्तस्यैव सविशेषयोगसिद्धिः । असाध्यः कस्यचिद्योग इत्युक्तत्वाद्यतमानस्यैवासाध्यो न हि तत्राप्रवृत्तस्यासाध्[illegible] वक्तुं शक्[illegible] । तस्मादभ्यासे प्रवृत्तस्य तदसाध्यत्वेऽपि सम्यगवेक्षणरूपः सविशेषयोगः सिद्ध इति भावः । निर्विशेषे प्रवृत्तस्यैव तदसाध्यत्वेऽपि सविशेषयोगे चित्तस्थैर्यसंभवात् । यथा च सविशेषयोगस्थितिमसाध्यां मन्वानस्यार्जुनस्य प्रश्नमंगीकृत्य निर्विशेषयोगाभ्यासः सविशेष-

१ का, २।४।११। २ भ, गी. ४।३५।

योगाभ्याससाधनमिति श्रीभगवानुवाच 'असंशयं महाबाहो मनो दुर्निग्रहं चलम् । अभ्यासेन तु कौंतेय वैराग्येण च गृह्यते' इति । मनो दुर्निग्रहं चलमत्र न संशयः किंत्वभ्यासेन स्वरूपे वृत्तिशून्यतया मनसः पुनः पुनर्नियोजनमभ्यासस्तेनाभ्यासेन तत्र स्थैर्यमलभ्यमानमपि सत्यज्ञानानंतादिलक्षणोऽयं जडविलक्षणस्तत्प्रकाशक आत्मेति चिदात्मसंस्कृतं घटे मृदमिव सर्वत्र ब्रह्मनिरीक्षणे क्षमं भवतीत्यर्थः । तथापि तद्यदा विषयवासनाभिभूतं भोगबुद्ध्या यद्यज्जगत्पश्यति तत्र तत्र ब्रह्मत्वविस्मृत्या सत्यत्वेन वस्तुत्वेन पश्यतीत्यतो वैराग्येण च गृह्यते न केवलमभ्यासमात्रेण किंतु वैराग्येण च, तस्मान्निर्विशेषाभ्यासे प्रवृत्तस्य तदसाध्यत्वेऽपि सविशेषयोगस्थैर्यं, ततः कस्यचिद्योगोऽसाध्योऽपि सम्यगवेक्षणरूपो योगः साध्य इति वसिष्ठाभिप्रायः । नन्वत्र भगवता निर्विशेषयोगस्थैर्यायोक्तोऽयं वैराग्याभ्यासरूपोपाय इति गीताव्याकृतो व्याकुर्वंतीति चेत्ते प्रौढत्वादविचार्यैव व्याकुर्वंति प्रश्नस्य निर्विशेषयोगविषयत्वाघटनात् । यथा चार्जुन उवाच -'योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन । एतस्याहं न पश्यामि चंचलत्वात्स्थितिं स्थिराम्' इति प्रश्नस्तस्यायमर्थः—योऽयं योगस्त्वया प्रोक्त इति पूर्वत्र द्विविधयोगयोरुक्तत्वाद्योऽयं सन्निहितः सविशेषयोग इत्यर्थः । 'सुखेन ब्रह्मसंस्पर्शमत्यंतं सुखमश्नुते' इत्यंतेन ग्रंथेन निर्विशेषयोगमुक्त्वा 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः' इत्यादि 'स योगी परमो मतः' इत्यंतेन ग्रंथेन सविशेषयोगस्य सर्वभूतानुकंपिनः श्रेष्ठयस्य चोक्तत्वात् योऽयं योग इत्यनेन सविशेषविषयप्रश्न एवेति श्रुतिकल्पलताकृता भगवता व्याक्रियते ।

ननु योऽयं पूर्वोक्तो यस्तु मयाऽधुना मनसि दुःसाध्यत्वेन स्मर्यते यश्च त्वया प्रोक्त इत्येवास्त्वर्थ इत्यपि क्लिष्टकल्पनयापि नायमर्थो घटते बहूनामनुग्रहो न्याय्यस्तत्र योऽयं न तु स पूर्वोक्तः, तथा चैतस्य स्थितिं स्थिरां न पश्यामि न तु तस्य पूर्वोक्तस्येति बहुभिः पदैः प्रश्नसन्निहितो यः सविशेषस्तद्विषय एव प्रश्नः, तथाच योगविशेषणेन च सविशेषविषय एव दुःसाध्यत्वाभिधानं साम्येनेति विशेषणात् । न हि वृत्तिशून्येन चित्तेन साक्षात्क्रियमाणे ब्रह्मणि जगद्वैषम्यं दृश्यते यस्मिन् जगद्वैचित्र्यवैषम्येन साम्यं द्रष्टव्यं, स साम्येन योगस्त्वया प्रोक्त इति वक्तुं शक्यते स च सविशेष एव सर्वत्र समदर्शन इति भगवताप्युक्तत्वात् । ननु साम्येन चित्तस्य लयविक्षेपराहित्येन केवलात्माकारावस्थितेन योगस्त्वया प्रोक्त इति व्याक्रियत इति चेन्मुख्ये सति गौणस्यान्याय्यत्वात् क्लिष्टकल्पितोऽयमप्यर्थः । 'ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः' इति सविशेषयोगस्योक्तत्वात् समदर्शन इति योगयुक्तात्मेति योगि-

१ भ. गी. ६।२५। २ भ गी. ६।३३। ३ भ. गी. ६।२८। ४ भ. गी. ६।२९। ५ भ. गी. ६।३२। ६ भ. गी. ६।२९।

विशेषणात् 'योऽयं[1] योगस्त्वया प्रोक्तः साम्येने'ति प्रश्नात्प्रश्नस्य उक्तानुवादरूपत्वादयमिति शब्देन प्रश्नस्य सन्निहितयोगविषयत्वात् 'एतस्याहं न पश्यामि चंचलत्वात्स्थितिं स्थिराम्'[2] इत्यनेनैतस्य योगस्य स्थितिं स्थिरां न पश्यामि तस्य त्वया भगवता उक्ता एव साध्योपाया इति भावस्ततोऽयं मुख्योऽर्थः। तथा च निर्विशेषयोगस्याभ्यासे प्रवृत्तस्य तदसाध्यत्वप्रश्नः संभवति, तच्च युद्धायोद्युक्तस्य गीताश्रवणपरस्योक्तशब्दार्थग्रहणे दत्तचित्तस्य न तदानीं योगाभ्यासप्रवृत्तिर्घटते, यतस्तस्य तदभ्यासे निद्रया लयप्रतीतिर्विविधकल्पनया विक्षेपप्रतीतिर्जाता ततोऽयं प्रश्नः कृत इति वक्तव्यम्। तत्रापि 'शनैः[3]शनैरुपरमेत्' इत्युक्तत्वादकृताभ्यासस्य न संगच्छते दुःसाध्यत्वाभिधानं, न च पूर्वत्रार्जुनस्तत्त्वविदिति योगे प्रवृत्त इत्यनुमेयम्। 'यज्ज्ञात्वा[4] न पुनर्मोहमेवं यास्यसि' इति चतुर्थाध्यायोक्तत्वात्। किंतु सविशेषयोगे संभवत्ययं प्रश्नः। जगतो दृश्यत्वात्पटे तंतुवज्जगत्प्रकाशकस्य निरीक्ष्यमाणत्वात्तत्र मनसश्चांचल्यात्स्थैर्यमपश्यन् पृच्छति 'एतस्याहं[5] न पश्यामि चंचलत्वात्स्थितिं स्थिराम्' इति। एतस्येति पदेन मयाधुना सेनाद्वयं स्वरथसहितं ब्रह्मत्वेनावलोक्यतेऽपि 'चंचलं[6] हि मनः कृष्ण' इत्युत्तरपद्येनोक्तत्वान्नैतस्मिन्योगे मनः स्थिरं भवतीत्यत एतस्याहं स्थितिं स्थिरां न पश्यामीत्यसाध्यत्वमनुभूय वदतीति वक्तुं शक्यत्वादयमेवार्थः। ननु भगवदुक्ते निर्विशेषयोगे चित्तस्थैर्यमसंभावितं मन्वानस्तदभ्यासे न प्रवृत्तोऽपि श्रुत्वैव दुःसाध्यत्वं मत्वार्जुन एवं पृच्छतीति चेन्न, मुख्ये संभवति गौणोऽर्थो न्याय्यो न भवतीति शास्त्रं, तथा च निर्विशेषयोगे भगवतैव मनसश्चांचल्यस्य तज्जयोपायस्य चोक्तत्वात्पुनस्तस्मिन् विषये तस्यैव मनसश्चांचल्याद्योगासंभावनाविषये प्रश्नो न घटते। तथा चोक्तं भगवता—'यतो[7] यतो निश्चरति मनश्चंचलमस्थिरम्। ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्' इत्युक्तत्वान्मनश्चांचल्यस्य तज्जयोपायस्योक्तत्वान्मंदाधिकारिणोऽपि पुनः स एव प्रश्नो न घटते किं पुनर्नरावतारस्यार्जुनस्य पुनः स एव प्रश्न इति घटते, ततः साम्येनेति विशेषणस्य निर्विशेषपरत्वेन व्याख्यानं च न घटते तदुपायस्य चोक्तत्वात्। न च पूर्वत्रोक्तस्य मनश्चांचल्यतज्जयोपायस्याभिहितस्य पुनः प्रश्नस्य साधुत्ववर्णनपूर्वकमुत्तरं च घटते। 'असंशयं[8] महाबाहो मनो दुर्निग्रहं चलम्' इति भगवदुत्तरं तु तदानीमेव स्याद्यदि भगवता 'यतो[9] यतो निश्चरति मनश्चंचलमस्थिरम्' इत्युक्तं न स्यात्। असंशयं महाबाहो मनो दुर्निग्रहमित्यनेन त्वया मनो दुर्निग्रहं चलमित्युच्यते तद-

१ भ. गी. ६।३३। २ भ. गी. ६।३३। ३ भ. गी. ६।२५। ४ भ. गी. ४।३५। ५ भ. गी. ६।३३। ६ भ. गी. ६।३४। ७ भ. गी. ६।२६। ८ भ. गी. ६।३५। ९ भ. गी. ६।२६।

संशयं यथा भवति तथा ममापि संमतं, नह्यहं तत्सुनिग्रहमचलमिति मन्ये किंतु यथा त्वं मन्यसे तथैवाहमपि, ततस्त्वस्मिन्विषये त्वदुक्ते मम विप्रतिपत्तिरिति संशयं मा कार्षीरिति यो भावो दर्शितः स निर्विशेषयोगविषये न घटते। तत्र 'यतो यतो निश्चरति मनश्चंचलमस्थिरम्'[1] इत्युक्तमेव प्राक् तस्मिन्विषये मनसश्चंचलत्वमस्थिरत्वं पूर्वमुक्तमेव तन्ममापि संमतमिति किं वक्तव्यं, तस्मिन्विषये यदि प्रश्नस्तर्हि तत्तु मया पूर्वमुक्तमेव मनश्चंचलमस्थिरमिति, ततस्तु सविशेषयोगे मनश्चांचल्यादेरनुक्तत्वादसंशयं मनो दुर्निग्रहमिति वक्तुमुचितं च तज्जयोपायस्याप्युक्तत्वात् प्रश्नोऽप्युचितस्तत्साधनोपायस्य च भगवतो वक्तुमुचितत्वात्। 'अभ्यासेन तु कौंतेय वैराग्येण च गृह्यते'[2] इत्युक्तम्। वैराग्याभ्यासयोर्निर्विशेषसाधनत्वेन पूर्वमुक्तयोः पुनरभिधानं चायुक्तम्। तदुक्तं पूर्वत्र—'संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः। मनसैवेंद्रियग्रामं विनियम्य समंततः'[3] इत्यादि वैराग्यस्योक्तत्वात्। 'शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया। आत्मसंस्थं मनः कृत्वा न किंचिदपि चिंतयेत्'[4] इत्याद्यभ्यासस्य शनैःशनैः साध्यत्वेनोक्तत्वात् सकृदुक्ते योगे दुःसाध्यत्वशंकावसरो न दृश्यते, न च पूर्वत्राभ्यासस्य चोक्तत्वात् पिष्टपेषणन्यायेन तदेवाभिधानं च घटते तस्मात्तदभिधानस्यानौचित्यान्न निर्विशेषविषयोपायः किंत्वनुक्तविषये प्रश्नश्चोत्तरं चेति मुख्योऽर्थः। ननु तर्ह्यभ्यासोऽपि सविशेषयोगस्यैवेति वाच्यं सविशेषयोगार्थे निर्विशेषयोगाभ्यास इति न संगच्छत इति चेन्मैवम्। 'ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः'[5] इति सविशेषयोगाभिधानेऽप्युक्तत्वात्। ततः प्रागुक्तेन निर्विशेषयोगेन युक्तः संस्कृत आत्मा मनो यस्य सः 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि। ईक्षते'[6] इत्यतो निर्विशेषयोगाभ्यासस्य सविशेषयोगसाधनभूतत्वात्, सविशेषयोगस्तु तदा स्थिरः स्याद्यदा निर्विशेषयोगेन मनो युक्तं संस्कृतं स्यात्, सविशेषयोगो नाम पटस्तंत्वेकमात्र इति निरीक्षणं तद्वच्चराचरविशेषो निर्विशेषैकमात्र इति सम्यगवेक्षणं, तत्र मनसः सर्वत्र जगतो जडत्वसंस्कृतस्य जडनिषेधशेषे भ्रियमाणस्य जडविलक्षणचैतन्यपरिचयसंस्कारसिद्ध्यै निर्विशेषाभ्यासो विधीयते ततः श्रुतिकल्पलताकृद्भगवानेवं व्याकरोति। ननु 'ईक्षते योगयुक्तात्मा'[7] इत्यत्र सविशेषयोगयुक्तात्मेत्येवास्त्वर्थ इति चेत् 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि। ईक्षते'[8] इति ईक्षणेनैव सविशेषयोगयुक्तात्मत्वे सिद्धे पुनरुक्तिः। ननु सर्वत्र समदर्शन इत्यपि पुनरुक्तिरिति चेन्मैवम्। ईक्षणलक्षणमेतत्ततो न विरुद्धम्। किं च सविशेषयोगाभ्यासपरस्य व्याख्यानस्यात्र न्यायबा-

---

१ भ. गी. ६।२६। २ भ. गी. ६।३५। ३ भ. गी. ६।२४। ४ भ. गी. ६।२५। ५ भ. गी. ६।२९। ६ भ. गी. ६।२९। ७ भ. गी. ६।२९। ८ भ. गी. ६।२९।

धितत्वात्। अयमर्थः–'योऽयं[1] योगस्त्वया प्रोक्तः साम्येन मधुसूदन। एतस्याहं न पश्यामि चंचलत्वात्स्थितिं स्थिराम्' 'चंचलं[2] हि मनः कृष्ण' इति दुःसाध्यत्वं यदुक्तं तदभ्यासविषयमेव मनश्चांचल्यात् घटे मृदिव विशेषे निर्विशेषस्य पुनःपुनरीक्षणमभ्यासस्तेन मनसः स्थैर्ये सति स्थितिः स्थिरा स्यात्तदभावे तदभाव इत्यतो दुःसाध्यत्वं मनसो जगतो जडत्वसंस्कृतत्वाच्चिदेकमात्रं जगदिति न हि पुनःपुनरीक्षितुं क्षमं भवतीति प्रश्नस्याभ्यासदुःसाध्यत्वे पुनरभ्यास एव साधनमित्युत्तरं न स्यात्। तद्विधित्सोस्तदेव साधनमित्यभिधानस्यान्याय्यत्वात् पथि कंटकप्राचुर्याद्गमनं दुःसाध्यमित्यस्योत्तरमुपानद्भ्यां गमनेन गंतुं शक्यत इतिवत् गंतुं प्रवृत्तस्य गमनेनेति यथोत्तरमन्याय्यमेवमभ्यासे प्रवृत्तस्याभ्यासेनेत्युत्तरं चान्याय्यं ततो नायमर्थः। ननु स्थितिं स्थिरां न पश्यामीत्युक्तत्वात् स्थितिस्थैर्यायाभ्यासस्य विधानमुचितमिति चेत्तदन्यत्र, नात्रायमर्थो घटते। योऽयं योगस्त्वया प्रोक्तः साम्येन तस्य स्थितिं स्थिरां न पश्यामीति योगविशेषणाद्योगस्यैतस्य स्थितिं स्थिरां न पश्यामीत्युक्तत्वादयमर्थः–साम्येन योगो नाम घटपटादिविषमत्वे चैतन्यस्योपादानस्य साम्यनिरीक्षणम्। तेन साम्येन विशेषनिर्विशेषयोरेकत्वनिरीक्षणं योगस्तस्यैतस्य योगस्य स्थितिर्मनश्चांचल्यराहित्यं तस्याः स्थैर्यं शश्वत्तदीक्षणं न पश्यामीत्युक्तत्वात् साम्येन यो योगः स एवासकृदीक्षणरूपाभ्याससाध्यस्तस्य योगस्य स्थितिं स्थैर्यं न पश्यामीत्युक्तत्वादभ्यासस्यैव दुःसाध्यत्वमाहेति सिद्धं, तत्र पुनरभ्यासस्यैव साधनत्वाभिधानमन्याय्यं, ततस्तु निर्विशेषाभ्याससविशेषाभ्यासस्य साधनभूत इत्येवं भगवतोऽभिप्राय इति सिद्धम्। तथा च वक्ष्यत्यष्टादशे चरमेऽध्याये भगवान् 'ब्रह्मभूतः[3] प्रसन्नात्मा न शोचति न कांक्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्' इति। अयमर्थः–अत्र क्रमेण ज्ञानसाधनतत्सिद्धिमाह भगवान् सिद्धिमित्यादिना—'सिद्धिं[4] प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे। समासेनैव कौंतेय निष्ठा ज्ञानस्य या परा' इति। कर्मसिद्धिं प्राप्तः शुद्धचित्तो ब्रह्म प्राप्नोति या सा ज्ञानस्य निष्ठा यथा तथा तं प्रकारं समासेनैव मत्तो निबोधेति प्रतिज्ञाय 'ब्रह्मभूयाय[5] कल्पते' इत्यंतेन ज्ञानसाधनान्युक्त्वा क्रमेणैव यो ब्रह्मभूयाय कल्पते योग्यो भवति तस्य प्राप्तनिर्विशेषयोगसाक्षात्कारस्य तदनंतरलाभमाह 'ब्रह्मभूतः[6] प्रसन्नात्मे'ति। ब्रह्मभूतः आरूढनिर्विशेषसमाधियोग इत्यर्थः। तदुक्तं पंचमाध्याये 'योंऽतःसुखोंऽतरारामस्तथांतर्ज्योतिरेव यः[7]। स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति' इत्यंतःसुखोंऽतरारामोंऽतर्ज्योतिरेवेति विशेषणैरेवकारेण च वृत्तिशून्य-

१ भ. गी. ६।३३। २ भ. गी. ६।३४। ३ भ. गी. १८।१४। ४ भ. गी. १८।५०। ५ भ. गी. १४।२६। ६ भ. गी. १८।१४। ७ भ. गी. ५।२४।

चित्तसाक्षात्कारः सिद्ध इति सूचितम् । '[1]यत्र **नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा यो वै भूमा तत्सुखम्**' इत्यादिश्रुतिसिद्धत्वात् । तथा च वक्ष्यति षष्ठाध्याये—'[2]**सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतींद्रियम् । वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः**' इति, तस्मात् पंचमाध्यायश्लोके-नांतःसुख इत्यादिना त्वारूढयोगो यो योगी ब्रह्मभूतः स एव, यस्तु वृत्तिशून्यचित्तेन ब्रह्मैव भवति, तदन्यथा सर्वेऽपि जीवा ब्रह्मभूता एव, किंतु '[3]**ममैवांशो जीवलोके जीवभूतः**' इति ब्रह्मणोंऽशत्वात्, तथापि जीववृत्तिसद्भावात्तथा चिदचिद्विवेकश्रवणमननसंपन्नोऽपि न ब्रह्मभूतो भवितुमर्हति । तस्मात्तद्विलक्षणोऽयं '[4]**ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्**' इत्याह भगवान् । ब्रह्मभूतः सन् समः सन् सर्वभूतेषु परां मद्भक्तिं लभते । न त्वियं श्रवणकीर्तनादिलक्षणमात्रा भक्तिः किंतु सर्वोत्कृष्टा, प्रिय आत्मैव सर्वत्र दृश्यत इति प्रीत्या सर्वत्रात्मत्वनिरीक्षणरूपा भक्तिस्तां लभते ततः परां भक्तिं लभत इत्युक्तम् ।

ननु '**असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिश्चयः**' इति वासिष्ठवचनात् यस्तु ब्रह्मभूतस्तस्य सर्वत्र ब्रह्मनिरीक्षणलक्षणो योगोऽसाध्य इत्युक्तत्वाद्ब्रह्मभूतः सन् सर्वेषु भूतेषु मद्भक्तिं लभत इति यदुक्तं तन्न संभवति, निर्विशेषसुखोत्सुकस्य पुनर्निर्विशेषयोगौत्कंठ्यात्सर्वत्र ब्रह्मनिरीक्षणमसाध्यमिति श्रुतिकल्पलताकृता व्याक्रियते च ततोऽयमर्थो न घटत इति चेद्वासिष्ठेन यदैकत्र सिद्धस्यान्यत्रासिद्धिरित्युच्यते तत्केवलाव्यक्तोपासकानां, ते तु गीताकृता भगवता द्वादशेऽध्याये विदितपरमार्थेभ्यो भागवतेभ्यो नीचा इत्युक्ताः, तदत्र पूर्वत्र व्याकृतं च तेषां भगवद्भक्तिहीनानां मोक्षैकपराणां योगद्वये प्रवृत्तानामुभयत्र दुःसाध्यत्वेऽपि पुनः सगुणं भगवंतं शरणं गतानां सिद्धिस्तेषां मध्ये यस्य निर्विशेषस्थितिर्न तस्य सविशेषस्थितिस्थैर्यं मुक्त्येककांक्षित्वात् । ये तु भागवतास्तेषां मोक्षेऽप्यभिलापराहित्यान्निर्विशेषसुखग्राहयापि सर्वेषु भूतेषु भगवद्भक्तिलाभो भवति ततो भागवता एव जीवन्मुक्ताः न मुमुक्षवः, श्रूयंते च शुकादयस्ततो भगवानप्याहैतदुत्तरपद्येन—'[5]**भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम्**' इति । यावानस्मि तावंतं मां भक्त्याभिजानाति, यश्चास्मि तत्त्वतस्तं मां च भक्त्याभिजानातीत्यनुषंगः । यच्छब्दात्तच्छब्दग्रहणं च । अयमर्थः—ये त्वभक्ता मुमुक्षवस्तेषां द्वादशाध्यायोक्तानां योगद्वयस्याप्यसाध्यत्वात् '[6]**ते प्राप्नुवन्ति मामेव**' इति, यदा

१ बृ. २।४।१३।　२ भ. गी. ६।२१।　३ भ. गी. १५।७।　४ भ. गी. १८।१२।
५ भ. गी. १८।५५।　६ भ. गी. १२।४।

मां सगुणं शरणं प्राप्नुवंति तदा द्वयोरेकत्र सिद्धया मुक्तिर्भवति, सा च देहांते न जीवन्मुक्तिर्योगद्वयसिद्धयभावात्। यस्तु भक्तः स भक्त्या यावानहमस्मि परिच्छेदशून्योऽनंत इत्यर्थः। तावंतमात्मानमभिजानातीत्यर्थः। एतावता सर्वेषु भूतेषु मद्भक्तिं परां लभत इति पूर्वपद्ये यदुक्तं तद्विवृणोति—सर्वेषु भूतेषु ब्रह्मांडविग्रहादिब्रह्मादिस्तंबपर्यंतेष्वात्मतत्त्वनिरीक्षणलक्षणेन भक्तियोगेन यदा बुद्धिः सत्यज्ञानलक्षणे मय्यात्मनि प्रसरति तदा तदग्रेऽप्येवमेवात्मतत्त्वमपरिच्छिन्नमस्त्येवेत्यनंतं मामभिजानाति ततः सत्यज्ञानानंतलक्षणं मां तत्त्वतो वेत्तीत्यर्थः। एतावता सविशेषयोगभक्त्या मद्भक्तेन लभ्यते तस्य मोक्षाभिलाषराहित्यात्, नहि निर्विशेषसुखमात्रलाभेन मुक्तोऽहं कृतकृत्योऽहमिति सविशेषोपेक्षां कुरुते, ततो ब्रह्मभूतः समः सन् सर्वेषु भूतेषु मद्भक्तिं परां लभते इति सर्वत्र ब्रह्मनिरीक्षणस्य भक्तित्वेन पूर्वश्लोकेनोक्तम्। तर्हि सविशेषयोगप्राप्तस्य निर्विशेषयोगो दुःसाध्य इत्याह वसिष्ठः, ततः सर्वेषु भूतेषु ब्रह्मनिरीक्षणरूपयोगसिद्धस्य कथं ब्रह्मभूतत्वमिति चेत्तदप्यभक्तस्यैव तन्न संभवति, मुमुक्षोः केवलाव्यक्तमात्रोपासकस्योभययोगसिद्धिरहितस्य भगवंतं शरणं गतस्यैकत्र सिद्धया मोक्षप्राप्तिनिश्चयादन्यत्रोपेक्षा वा तदसाध्यत्वं वा, न मद्भक्तस्य तथा, स तु भक्त्या सविशेषयोगद्वयरीत्यापि मां साक्षाज्जानाति, तत्र सविशेषसाक्षात्कारमुक्त्वा निर्विशेषयोगजनितसाक्षात्कारमाह यश्चास्मि तत्त्वतस्तं मां भक्त्याभिजानातीति। तत्त्वतो यश्चास्मि सत्यज्ञानानंतलक्षणः सकलमायाविशेषव्यतिरिक्तो निर्विशेषस्तं मामभिजानाति, वृत्तिशून्यं चित्तं मदाकारेण परिणामं नीत्वा मयि निर्विशेषे स्थिरो भवतीत्यर्थः।

एवं योगद्वयेऽपि सत्यज्ञानानंतलक्षणं मां भक्त्या जानातीत्युक्तं तत्र सविशेषे घटो वाचारंभणमात्रो मृदितरत्वेन वस्तुत्वराहित्यान्मिथ्यामृत्प्रकाश्यत्वादेवं ब्रह्मप्रकाश्यत्वाज्जगद्ब्रह्मैव चराचराकारो वाचारंभणमात्र इति सत्यत्वेन जानाति। असत्यस्य जडत्वात्तत्प्रकाशकं चैतन्यं तदेव ब्रह्मेति ज्ञानलक्षणत्वेन जानाति। परिच्छेदराहित्यात्सप्तावरणसहितब्रह्मांडमभिव्याप्य तदग्रेऽपि यदस्ति तदेवानंतमिति सविशेषयोगे सत्यादिलक्षणसाक्षात्कारः। तथा च निर्विशेषे प्रकाश्यनिषेधशेषाकारे चित्ते प्रकाशैकरूपेण परिणते प्रकाश्यस्य रजतस्य निषेधे तत्प्रकाशिकां शुक्तिमेव यथा दृष्टिः पश्यति स सत्यत्वानुभवः। सुषुप्तौ चिच्छक्तौ तमोविलीनायां न ज्ञानस्वरूपानुभवस्तद्विलक्षणत्वेन समाधौ चिच्छक्तेरात्मस्वस्फुरणानुभवरूपत्वाज्ज्ञानरूपत्वेनानुभवः। यस्य अनुभवः सा चिच्छक्तिर्बुद्धयादिसंज्ञिता सत्वैकमात्रा तच्छक्तिः, अथ यस्मिन्ननुभवस्तन्निर्धर्मकं निर्धर्मकत्वादनंतं, सधर्मकस्य कियत्पर्यंतं मत्स्वरूपमिति स्फूर्तिस्ततो नानंतत्वं घटते ईश्वरस्याप्यनंतोऽहं निर्धर्मकोऽहमित्यनुभवरूपोपाधित्वादे-

तदनुभवप्रकाशकैकमात्रं तदनंतं न यत्र चिच्छक्तिवृत्तिकृतधर्मः । ततो यस्मिन्मन-स्तदाकारेण परिणमति तस्य निर्धर्मकत्वादनंतं तस्माद्यत्र वृत्तिशून्यत्वं तत्रानंत्यानुभवः । तथा च श्रुतिः—'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति । एवं योगद्वयजनितसाक्षात्कारो भक्तस्यैव ततो भक्त्या मामभिजानातीत्युक्तं भगवता ।

ननु 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम्' इत्युत्तरार्धेन ततः परमपि तत्त्वतो ज्ञात्वा तदनंतरं विशते इत्युक्तत्वान्नहि पूर्वार्धोक्तं सिद्धलक्षणं स्यात्ततो भक्त्या मामभिजानातीत्यादिसाधनरूपमेव ज्ञानं न सिद्धरूपमिति चेन्मैवम्, यावान्यश्चास्मि तत्त्वतस्तावंतं मां तत्त्वतोऽभिजानातीत्युक्त्वा ततः परं ज्ञातव्यांशस्यावशेषाभिधानस्याघटनात् । तत उत्तरार्धस्यायमर्थः । ततःशब्देन पूर्वपरामर्शः । यत्तदोर्नित्यसंबंधात् । यतो भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वत इति नियमस्ततः कारणात् तत्त्वतो मां ज्ञात्वा तदनंतरं विशते प्रारब्धभोगसमाप्त्यनंतरं प्रविशतीत्यर्थः । तावत्पर्यंतं सविशेषनिर्विशेषयोगयोश्चित्तस्य ब्रह्माकारपरिणाम एव न तु प्रवेशः, तस्मात् भक्त्या मामभिजानातीत्युक्तो भक्तस्तु जीवन्मुक्त इति सूचितम् । तदुभयनिष्ठस्यैव सविकल्पनिर्विकल्पयोगद्वयपरिनिष्ठितो जीवन्मुक्तः, ततः कस्यचिद्योगे साध्येऽपि न तत्त्वनिश्चय इत्युक्तं किंतु तस्यापि सम्यगवेक्षणे प्रवृत्तस्यैव योगसिद्धिः सर्वं ब्रह्मेति निश्चयाभावात्तत्त्वज्ञानं विना बाल्यमृते तारुण्यमिव योगसिद्ध्यभावात् येन भूतान्यशेषेणेति भगवदुक्तयोगस्य तदेकनिष्ठत्वात् सम्यगवेक्षणस्यासिद्धिरिति भावः । अथ यस्य योगोऽसाध्यस्तस्यापि योगे प्रवृत्तत्वादेव सम्यगवेक्षणलक्षणज्ञानसिद्धिस्तच्च गीतायां षष्ठाध्यायेऽर्जुनप्रश्नप्रसंगेन भगवता दत्तमुत्तरमत्र चतुर्थश्लोकव्याख्यायां विज्ञानमयकोशे व्याकृतमेव, तस्मादुभयत्र प्रवृत्तस्य मंदाधिकारिण एकत्र सिद्धिरिति सिद्धं, तत्रोभयत्रापि कामाभिभूतचित्तानां यतीनां चिदचिद्विवेकश्रवणसंपन्नानामपि न सुखमत उभयतोऽप्यसुखमित्युक्तम् । अत्राहुरार्याः—ननु किमिदमुच्यते मामहं न जानामीत्यावरणस्य चिदचिद्विवेकश्रवणाद्ब्रह्माहमस्मीत्यधिगमात् भग्नस्य पुनरावरणत्वासंभवात्कथमात्मा दुरधिगम इत्युच्यते ? न च वासिष्ठश्लोकयोरयमर्थः संभवति, योगे प्रवृत्तस्य न सम्यगवेक्षणरूपं ज्ञानं साध्यं सम्यगवेक्षणज्ञानसिद्धस्य न योगस्तत्र परस्परसापेक्षत्वं च न संगच्छत इति चेत् ब्रह्माहमस्मीति ज्ञाने सिद्धे तु भग्नमावरणं सत्यमेव तत्किं ब्रह्मणा ब्रह्माहमस्मीत्यधिगतमुत चिदाभासेन उत वा बुद्ध्या ? नाद्यः पक्षो निर्धर्मकत्वात् । न द्वितीयः सुषुप्तौ चिदाभासस्य बिंबैक्येऽपि संसारस्य दुर्वारत्वात् । तस्माद्बुद्ध्येति चेत्

१ छा. ७।२४।१। २ भ. गी. १८।५५।

ब्रह्माहमस्मीति श्रवणानंतरं पुनरहं संसारीति प्रतीतिर्यदि न स्यात् भग्नमेवावरणं, नहि भग्ने घटे पुनः पूर्ववद्घटो दृश्यते ततस्तु यावत्पूर्वसंस्कारबलात् पुनःपुनरहं संसारीति प्रमादो दृश्यते, तावन्नावरणभंगः किंत्वावरणभंगोपायप्रथमांगं श्रवणं तेन संपन्नः ततो मननं तदनंतरं निदिध्यासनं एवं साधनत्रयसिद्धस्य यदा वृत्तिशून्येन चित्तेन साक्षात्कारस्तदनंतरं सम्यगवेक्षणलक्षणे सविशेषयोगे स्थिरचित्तस्तदानीमेवावरणभंगस्ततोऽहं संसारीति प्रमादराहित्यान्नावरणमिति वक्तुं शक्यते। तथा च श्रुतिः—'यदा पंचावतिष्ठंते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम्॥ तां योगमिति मन्यंते स्थिरामिंद्रियधारणाम्। अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ' इति। श्रुत्यर्थः — अप्रमत्तस्तदा भवति यदा पंचावतिष्ठंते वागादिकर्मेंद्रियाणि बुद्धिश्च न विचेष्टते इत्यर्थः। ज्ञानानि ज्ञानेंद्रियवृत्तयोऽपि यदावतिष्ठंतीत्यर्थः। मनसा सह मनसा संकल्पशून्येन सह यदावतिष्ठंति मनश्च यदा संकल्पशून्यं भवतीत्यर्थः। 'यतो वाचो निवर्तंते अप्राप्य मनसा सह' इति श्रुतेः। बुद्धिश्च न विचेष्टते मनोवृत्तिषु निरुद्धासु नामरूपात्मकपदार्थनिश्चयाभावान्न विचेष्टते, किंतु दृष्टिर्दीपप्रकाशिता घटादिकमपश्यंती दीपमिव येन सचेतनासती विविधवृत्तिनिश्चयात्करोति तमेव स्वात्मानं पश्यति, तदाकारा यदा परिणता भवतीत्यर्थः। 'तामाहुः परमां गतिम्' न चिदचिद्विवेकश्रवणमात्रमित्यर्थः। तां योगमिति मन्यंते पातंजलाः। न वस्तुतोऽयं योग इत्यर्थः। द्वयोर्योगो योगस्तदत्र न संभवतीति तात्पर्यम्। तदुक्तं भगवता 'तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्' इति। दुःखस्य वृत्तिरूपस्य संयोगो रजस्तमसोर्मिश्रीभावः सत्वस्य, तस्य रजस्तमोमिश्रीभावस्य वियोगो वृत्तिनिरोधस्तं दुःखसंयोगवियोगं विद्यात्। ननु किं तस्य नामेत्यपेक्षायामाह योगसंज्ञितमिति। 'योगश्चित्तवृत्तिनिरोधः' इति पतंजलिना सूत्रितत्वात् योगसंज्ञो व्यवहार एव न वस्तुतोऽयं योग इत्यर्थः। चित्तात्मनोर्योगस्य स्वतःसिद्धत्वात्। तदुक्तं द्वितीयस्कंधे 'एवं स्वचित्ते स्वत एव सिद्ध आत्मा प्रियोऽर्थो भगवाननंतः' इति, तस्मात्तामाहुः परमां गतिमित्येव सत्यं, तर्हि तां योगमिति पातंजला मन्यंते न वस्तुतो योग इति सिद्धे त्ववैदिकमतरीत्या तामवस्थां परमां गतिमित्याहुः। कथंभूता सावस्थेति चेत् श्रुत्याभिधीयते 'स्थिरामिंद्रियधारणाम्' इति। इंद्रियाणां विषयग्रहणमस्थैर्यं वृत्तिशून्यत्वादिंद्रियाणां या स्थिरा धारणा तां परमां गतिमित्येवाहुरित्यनुषंगः। तर्हि वैदिकमतरीत्या

१ का. १।६।१०। २ तै. २।४।१। ३ का. १।६।१०। ४ भ. गी. ६।२३। ५ यो. सू. १।२। ६ भा. स्कं. ३।२।६। ७ भ. गी. ६।११।

कोऽसौ योग इति चेत् सविशेषयोग एव योग इत्यभिधीयते चरमपादेन 'योगो हि प्रभवाप्ययौ' इति। हीति निश्चयेन। योगस्तु प्रभवोऽप्ययश्च उत्पत्तिविनाशौ यस्मान्मृदो घट इवोत्पन्नं च यस्मिन्मृदि घट इव नश्यति च तस्मिन्मृदि घटस्येव यो योगः स एव योगः, एतद्रूपनिरीक्षणं स एव योग इत्यर्थः। किं त्वप्रमत्तस्तदा भवति यदा पंचावतिष्ठंत इत्यादि बुद्धिश्च न विचेष्टत इत्युक्तां गतिं यदाप्नोति वृत्तिसद्भावात्प्रमादस्य संभावितत्वात् 'विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति' इत्यादिश्रुतेः। यद्वा योगोऽहिप्रभवाप्ययौ नाम योगस्तु अहिप्रभवाप्ययाविति छेदः, अहेः सर्पस्य प्रभवः उत्पत्तिश्च अप्ययो नाशश्च द्वयोर्योग एव योगः। अयमर्थः—नायं फणिः किंतु गुण एवेति विदिततत्त्वस्य पूर्वसंस्कारवशात्पुनः सर्प इति भासमानोऽपि गुण इति मुहुः सम्यगीक्षणादुत्पन्नोऽपि सर्पो झटिति नश्यतीतिवदिंद्रियाणां स्वस्वविषयग्रहणकाले प्रपंच इति स्फुरणमात्रेऽपि स्वरूपैकप्रकाश्यानामिंद्रियविषयाणां रज्जुप्रकाश्यसर्पमिव पश्यति य एतादृशोऽभ्यासः स एव योगः प्रकाश्यानां वृत्तीनां च वृत्तिप्रकाशस्य च योगाद्योगो हि प्रभवाप्ययाविति दृष्टांतमुखेनोपपादितम्। ननु तर्हि अनेनैव योगेन परमा गतिः स्यात् किं यदा पंचावतिष्ठंत इत्यादिना निर्विशेषानुभव एव परमगतित्वेनोपपाद्यत इति चेदनेन योगेन मुक्तिरस्त्यपि न निर्विशेषसाक्षात्कारं विना प्रमादराहित्यं संभवतीत्यभिधत्ते। अप्रमत्तस्तदा भवतीति। यदा पंचावतिष्ठंत इत्यादि यच्छब्देनोक्तां परमां गतिं यदा प्राप्नोति तदायमप्रमत्तो भवति ब्रह्माहमस्मीति न विस्मरतीत्यर्थः। ततस्तु स एवावरणभंग इति तात्पर्यम्। सविशेषयोगे वृत्तिसद्भावात् प्रमादस्य संभावितत्वात् वृत्तिनिरोधसाक्षात्कारेणैव प्रमादराहित्यं, सविशेषयोगे प्रमादराहित्यस्य दुःसाध्यत्वात्। तथा च श्रुतिः—'विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति। शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते' इति। वृत्तिविशिष्टं ज्ञानं विज्ञानं तदेव ब्रह्म तच्चेद्वेद निर्विशेषसाक्षात्कारं विना तावदेव चेद्वेद सोऽपि शरीरे पाप्मनो हित्वा सर्वान्कामान् सर्वकामोपलक्षितमानंदमश्नाति, किंतु तस्माच्चेन्न प्रमाद्यति वृत्तिविशिष्टत्वात् बुद्धेः प्रमादस्य संभावितत्वात् दुःसाध्यत्वेऽपि यदि कश्चिदेवमपि चेन्मुक्तः स्यात् द्वौ क्रमौ चित्तनाशायेति वसिष्ठोक्तश्लोकाभ्यामुपवर्णितक्रमेण कश्चिद्यदि चेत् तस्यापि निर्विशेषयोगसिद्ध्यभावेऽप्यभ्यासेनाश्रियमाणे सविशेषयोगे मनो निश्चलं भवतीत्यर्जुनप्रश्नोत्तरप्रसंगेन भगवता निर्णीतमिति पूर्वत्र सिद्धं, तस्मादुभयत्राभ्यासयुक्तस्योभयत्रसिद्ध्यभावेऽप्येकत्रसिद्धिः स्यात्ततः कृतकृत्यो भवति न चिदचिद्विवेकश्रवणमात्रेणावरण-

---

१ का. ६।११। २ बृ. २।५।१।३। ३ बृ. २।५।१।

भंग इति सिद्धम्। ततस्तु चिदचिद्विवेकश्रवणमात्रसंपन्नानां यतीनां कामाभिभूतचित्तानामात्मा दुरधिगम इत्येवार्थः। असुतृपयोगिनामिति विशेषणात्। अनधिरूढपदादिति हेतोरस्मृतकंठमणिवदिति दृष्टांतान्नहि दंभन्यासनिंदेयमिति व्याकर्तुमुचितमत्र। दांभिकानां योगिविशेषणासंभवात्। तर्ह्यसुतृपत्वं न घटत इति चेद्योगे प्रवृत्तानां कामाभिभूतानां कुयोगित्वेनाभिधीयमानत्वादत्रासुतृपयोगिनामित्युक्तं न दोषः। वक्ष्यत्येकादशे—'[1]कुयोगिनो ये विहता ह्यंतरायैः' इत्यादि। तथा चानधिरूढपदादित्युक्तत्वादभ्यासे प्रवृत्ता अपि कामजटानामनुद्धृतत्वादनधिरूढपदादित्युक्तत्वादयमेवार्थः। अविदितपदस्यानधिरूढपदादसुखमिति वक्तुमयोग्यत्वात्। न चोभयतोऽप्यसुखमित्यस्यार्थ उभयलोकपर इति स्याद्दंभन्यासाभावात् योगे प्रवृत्तत्वात्। तदुक्तं भगवता—'[2]पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते। न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति' इत्यादि। अत्र गीतायामपि नवीनाश्चिदचिद्विवेकश्रवणरहितविषयत्वेन योगभ्रष्टत्वं व्याकुर्वंति तच्च न घटते। '[3]अयतिः श्रद्धयोपेतो योगाच्चलितमानसः' इति प्रस्तुते यदि न समुद्धरंति यतयो हृदि कामजटा असुतृपयोगिनां दुरधिगम आत्मेति निंदितयतिवृत्तिसदृशविषयप्रश्नात्। योगे प्रवृत्तस्य योगान्मनश्चलति वृक्षात्पर्णमिव किं बहुग्रंथविस्तरैश्चिदचिच्छ्रवणमात्रस्य ज्ञानसिद्धिरूपत्वेनोपपादयितुमित्यादिप्रकरणेषु वेदादौ नवीना अन्यथा व्याकुर्वंति। पांडित्यबलात् किं किं न वक्तुं शक्यम्? तथापि निरभिमानितया सद्भिरत्र पूर्वापरपर्यालोचनया न्यायाम्नायानुभवमनुसृत्य सम्यगालोचनीयं चिदचिद्विवेकश्रवणमात्राणामभ्यासरहितानां व्यसनशतान्वितस्य दृश्यमानत्वात् शब्दादिपांडित्यबलाद्वयं मुक्ताः प्रारब्धभोगायैवोर्वरिता अत्रेत्याहुरपि न ते मुक्ता इति सतां संमतमलमतिविस्तरैः।

प्रकृतमनुसरति भगवान्। एवं तेषां श्रुतात्मनां योगे प्रवृत्तानां कामाभिभूतानामुभयतोऽप्यसुखमित्यनेनोभययोगेऽपि क्लेशवैयर्थ्यमित्युक्तं न नरकादि पारलौकिकं भयं '[4]न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति' इति भगवदुक्तत्वात्, किंतु योगसिद्धसाक्षात्कारं विना न कर्मक्षयः। '[5]तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ' इति भगवता व्यासेन सूत्रितत्वाद्यावद्वृत्तिनिरुद्धचित्तेन नाधिगमो न तावदुत्तरपूर्वाघयोः पुण्यपापरूपयोः प्रारब्धेतरयोः क्रियमाणसंचितयोरश्लेषविनाशौ तत्रोत्तराघस्यात्मनोऽक्रियत्वाधिगमादनुलक्षीकरणादश्लेषः स्पर्शराहित्यं प्रसिद्धम्। पूर्वाघस्य संचितस्य नाशः स च ज्ञानाद्वृत्तिशून्येन चित्तेना-

---

१ भा. स्कं. ११।२८।२९। २ भ. गी. ६।४०। ३ भ. गी. ६।३७। ४ भ. गी. ६।४१। ५ ब्र. सू. ४।१।१३।

नुभूयमानत्वात् । अप्रमत्तस्तदा भवतीति श्रुतेः । तदेतेषामनुद्भूतकामजटानां यतीनामसिद्धत्वात् कर्मफलस्य दुर्वारत्वात् त्वत्तः कर्मफलदातुरपि तेषां भयमित्याहुः— भवतो भगवन्निति । भो भगवन्, भवतोऽपि भयं कर्मफलस्य दुर्वारत्वात् ज्ञाने प्रवृत्तानां कल्याणमार्गत्वाद्दुर्गतिर्नरकादिरूपा न संभवत्यपि सद्भिर्नरकतुल्यत्वेन निश्चिता दुःखपरिणामरूपा स्वर्गादिगतिश्च पुनर्गर्भवासश्च स्यात्ततः जन्मांतरे पूर्वसंचितस्य भोगश्च यावत् सम्यक् साक्षात्कारस्तावत्क्रियमाणस्य संपर्कस्य संचितस्य नाशराहित्यं चेत्यादि त्वत्तः कालरूपात्कर्मवशत्वात्तेषां स्यादेवेत्यतस्तत्तत्कर्मफलभोगस्य दुर्वारत्वात् कर्मफलदातुस्त्वत्तोऽपि भो भगवन्, भयमित्युक्तं तत्र भगवन्निति संबोधनेन तव षड्गुणस्य भजनाभावादित्याद्यनर्थ इति सूचयंति । ऐश्वर्य—धर्म—यशः—श्री—ज्ञान-वैराग्ययुक्तस्य तव भजने तु कालकर्मजयसामर्थ्यरूपैश्वर्यस्य मोक्षोपयोगिधर्मस्य पावनयशसश्च विद्यात्मकायाः श्रियश्चांशेन तव ज्ञानवैराग्यसिद्धेर्विघ्नराहित्यान्न कामजटावृद्धिर्न चोभययोगक्लेशवैयर्थ्यं नचोभयतोऽप्यसुखमिति भावः । यो यद्रूपं दैवतमुपास्ते स तादृशं फलं लभत इति शास्त्रं **'ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहम्'** इति भगवतोऽपि प्रतिश्रुतत्वाद्भगवद्भजनं विना न ज्ञानवैराग्यसिद्धिरिति निर्णीतत्वाद्यदि न समुद्धरंतीत्यादिनिंदिता ये ते देवतांतरभजननिरता न भागवता इति गूढाभिप्रायः ॥ ३९ ॥ २६ ॥

**त्वद्भक्त्यैव त्वदन्यत्र विरक्त्याऽधिगमस्तव ।**
**न चिदात्मश्रुतेर्न्यासादभ्यासाद्वा जगद्गुरो ॥ १ ॥**
**चिदचिच्छ्रुतिमात्रेण शब्दज्ञानविशारदाः ।**
**ब्रह्मापरोक्षं मन्यंते कलौ माधव मोहिताः ॥ २ ॥**

इति श्रीमद्भागवते महापुराणे श्रीश्रुतिकल्पलतायां षड्विंशतिश्लोकव्याख्यानं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ इति द्वात्रिंशोऽध्यायः ॥

---

# त्रयस्त्रिंशोऽध्यायः ।

एवं पूर्वपद्ये भगवन्निति संबोधनेन भगवतस्तव भजनहीनानां सन्मार्गे प्रवृत्तानामपि न सिद्धिरुभयतोऽप्यसुखं भवतोऽपि भयमित्यादि यदुक्तं तद्वैलक्षण्येन भागवतस्य तव भजनप्रभावेण सर्वं सुसाध्यं न क्वचिद्भयमित्याहुः—

त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयो-
र्गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः ।
अनुयुगमन्वहं सगुणगीतपरंपरया
श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥ ४० ॥ (२७) ॥

तत्र भगवद्भजनरहितश्रुतात्मयतिविलक्षणत्वमाहुः—त्वदवगमीति । त्वदीयश्चासाववगमी च त्वदवगमी त्वदीयो भागवतः । अवगममात्मज्ञानं यस्यास्तीत्यवगमी प्राप्तापरोक्षसाक्षात्कार इत्यर्थः । त्वदीयत्वात् । एतावता तूभयतोऽप्यसुखं यदभागवतानां यतीनां पूर्वत्रोक्तं तदस्य नास्तीत्यपि सूत्रितं तेषां दुरधिगमोऽसतां हृदिगतोऽस्मृतकंठमणिरित्युक्तत्वात् । अयमवगमी यत्तेषां यदुभयतोऽप्यसुखमित्युक्तं तदुभययोगसिद्धोऽयमिति भावः । अभागवतयतीनामुभयतोऽप्यसुखं यदुक्तं तत्तु कौमुतिकन्यायेन परिहरंत्यो भागवतलक्षणमाहुः—न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयानिति । भवतः कर्मफलदातुरुत्थितयोः शुभाशुभयोः पुण्यपापयोर्गुणस्य सुखस्य पुण्यकर्मप्रारब्धरूपस्य विगुणस्य दुःखस्य पापफलस्यान्वयान् स्पर्शान् यथाकालप्राप्तभोगानित्यर्थः । न वेत्ति निरहंकारित्वात् । अहं सुखी अहं दुःखीति येनाहंकारेण सत्त्वप्रतिबिंबितस्य चैतन्यस्य लोके भोगो दृश्यते तस्य चैतन्यस्योपाधियोगैकाविर्भूतत्वाद्यस्मिन् सत्त्वे तत्प्रतिबिंबत्वं दृश्यते तस्य सत्त्वस्यापरिच्छिन्नजगद्व्यापकचैतन्याकाराकारितत्वाज्जले प्रविष्टे बिंबभानौ यथा प्रतिबिंबस्थाने बिंबार्क एव दृश्यते तथात्र विदिततत्त्वस्य बुद्धेर्बिंबचैतन्येनैव जीवितमिति सतामनुभवसिद्धत्वात्तस्य भोगासंभवात्सुखदुःखस्पर्शांश्च वेत्तीति गूढाभिप्रायः । 'अनश्नन्नन्यो अभिचाकशीति' इति श्रुतेः परमेश्वरलक्ष्म्यांशैवयात् । तदुक्तं भगवता—'यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पांडव । येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि' इति । 'आत्मन्येवात्मानं पश्येत् । सर्वमात्मानं

१ मु. ३।१।१। २ भ. गी. ४।३५। ३ बृ. ४।४।२३।

पश्यति' इति श्रुतेरविद्यानिवृत्तौ सत्त्वस्य बिंबचैतन्येन जीवनमिति शास्त्रानुभवसिद्धम् । ननु निवृत्ताप्यविद्या बुद्धिस्तु सैव, तथा सति कथं सा सुखदुःखान्वयान्न वेत्तीति चेन्नहि बुद्धेर्भोगः संभवति जडत्वात् । तस्माद्यस्य भोगस्तस्य बिंबैक्यात्सुखाद्यन्वयाभावान्न वेत्तीत्युक्तम् । तथा च श्रुतिः—'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इति । श्रुत्यर्थः—अधि अधिकं सत्यज्ञानानंतत्वेनानुभूयमान आत्मा यस्मिन्योगे सोऽध्यात्मयोगस्तेन देवं द्योतनात्मकं जगद्व्यापकस्येश्वरस्य लक्ष्यांशमनंतं 'सत्यं ज्ञानमनंतं' इति श्रुतेः मत्वा ज्ञात्वा धीरो विगताहंकारः सुखं मे भूयान्मा दुःखमित्याशयरहितत्वात् निवृत्ताहंकारस्य सुखदुःखभोक्तृप्रतिबिंबचैतन्याभावादहं सुखी दुःखीति प्रतीतिराहित्यादनाद्यविद्याभिभूता बुद्धिरपि ब्रह्मसुखानुभवसंपत्त्या बाह्यसुखाभिलाषरहिता सती धैर्ययुक्ता बिंबचैतन्येन वर्तमाना तया बुद्ध्या यः पूर्वं देवदत्तादिसंज्ञितः पुरुषः स तदानीं बिंबात्मनायं धीर इत्यर्थः । धैर्याधैर्यस्य बुद्धिकृतत्वात्तया बुद्ध्या वर्तमानत्वाद्धीर इति विशेषणम् । स्वरूपस्य निर्धर्मकत्वादीश्वरोपाधेर्नित्यविद्यारूपत्वात्प्रतिबिंबस्थाने बिंबस्य चैतन्यत्वेन निर्धर्मकत्वेन सामान्यत्वाद्धीरो हर्षशोकौ जहातीति ज्ञानिनो बुद्धिविशेषणम् । ननु तथा सति प्रारब्धकर्मणां भोगादेव क्षय इत्यसिद्धमिति चेन्मैवम् । अन्वयान्न वेत्तीत्युक्तत्वात् । शुभाशुभयोर्गुणान्वयान्न वेत्तीत्यतः सुखदुःखयोर्भोगेऽपि मया भुक्तमिति न वेद निरहंकारित्वात् । ततः श्रुत्यापि हर्षशोकौ जहाति भुक्तान्भोगानपि मया भुक्तानित्यहंकारराहित्यात् । ननु तर्हि भोगानुभवस्य चैतन्यनिष्ठत्वाद्यदि बिंबचैतन्येनैव ज्ञानोत्तरकाले बुद्धिर्जीवति तर्हि तस्य भोगो न संभवतीति चेत्सत्यम् । तत एव तेन चैतन्येन बुद्धेः सर्वदा वर्तमानत्वान्न वेत्तीत्युच्यते, तत्रान्वयान्न वेत्तीत्यनेन भोग उक्त एव, स च दग्धपटप्रायेणाहंकारेण प्रतिबिंबचैतन्येनैवानुभूयते, किंतु मया भुक्तमिति निश्चयस्य बुद्धिकृतत्वाद्बुद्ध्या बिंबात्मन आत्मत्वस्याधिगतत्वाद्धीरो बाह्यसुखमनपेक्षमाणो नित्यात्मसुखमनुभूयमानः तान् गुणान्वयान्न निश्चिनोतीत्यतो न वेत्तीत्युच्यते, स्वप्ने भुक्तान्भोगान् जागरे मया भुक्तानिति जागरभोगवन्न मन्यत इत्यभिप्रायः ।

ननु बिंबप्रतिबिंबयोरैक्येऽपि पुनर्यदि प्रतिबिंबत्वं भोगार्थमंगीक्रियते तर्हि मुक्तानां पुनः संसारः प्रसज्येतेति चेन्नहि बिंबैक्यमात्रो मोक्ष इति शास्त्रम्, सुषुप्तौ प्रलये च बिंबैक्येऽपि बुद्धिगताविद्याबीजदाहाभावात् संसारस्य विद्यमानत्वात्, किंतु जीवोपाधेर्बिंबचैतन्यात्मत्वाधिगमो मोक्षस्तस्य बिंबात्माकारेण परिणतस्य दग्धबीजन्यायेन न हि जन्मांतरांकुरोद्भवो भवति ।

---

१ का. १।२।१२। २ तै. २।१।

**'न तस्य प्राणा उत्क्रामंति'** इति श्रुतेः । किंतु तावत्प्रारब्धभोगायोपाधेरवशिष्टत्वाद्यद्यपि बुद्धिः सर्वगतचैतन्येनैव सर्वात्मत्वानुभवरूपा वर्तते, तथापि येनाहंकारेण येन प्रतिबिंबचैतन्येनाहंकर्तेति पूर्वकर्मकृतं तेनैव चैतन्येन तद्भोक्तव्यमिति प्रारब्धकर्मणां भोगादेव क्षय इति निर्णीयते, स चाहंकारः सात्त्विकादिभेदैस्त्रिधा । तत्र सात्त्विकस्यांतःकरणवृत्तिरूपत्वादंतःकरणजलस्य चित्तबुद्धिमनोहंकाराणां स्थैर्यचांचल्यधर्माणां तरंगरूपत्वाद्भोगकालेऽहं सुखीति दुःखीति योऽनुभवः स निरहंकारिणोऽपि दुर्वारस्तत्राहंकारकल्लोलस्याभ्युत्थानं च तस्मिन् प्रतिबिंबस्य पृथक्त्वेनानुभवश्च भूत्वा तदुत्तरकाले स्वप्नादुत्थितस्यवे मृषास्वप्नभोगा इति ज्ञात्वा जागरभोगा इव मया भुक्ता इति न मन्यते ततो न वेत्तीत्युच्यते, बिंबात्मसुखानुभवातिशयात् । तदुक्तं भगवता **'यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः । यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते'** इति, यं बिंबात्मानुभवरूपमानंदं लब्ध्वा चकारात्पूर्वकर्मफलमपरं च सुखजनकं किमपि स्रक्चंदनवनितादि लब्ध्वेत्यनुषंगः । ततः आत्मसुखलाभात् अधिकं लाभं न मन्यते मया बाह्यसुखं लब्धमिति न गणयति, तस्य सुखत्वेन स्वस्य भोक्तृत्वेन भुक्तमिति न मन्यत इत्यर्थः । एतावता गुणान्वयाच्च वेत्तीत्युक्तं सिद्धम् । तथा चोत्तरार्धेन विगुणान्वयान्न वेत्तीत्युक्तं प्रकारं व्याकरोति—यस्मिन्स्वात्मसुखानुभवे स्थितः परिनिष्ठितो गुरुणापि दुःखेन न विचाल्यते दुःखान्वयेनापि न चाल्यते मया भुक्तमिति यतो न मन्यते ततो महतापि दुःखेन सविशेषेण न चाल्यते, स्वप्नदुःखं यथा प्रबुद्धोऽनुस्मरन्नपि तत्सत्यमिति न मन्यते तथा स स्वसुखान्न विचाल्यत इति भावः । अत्रापि नवीनशास्त्रप्रवर्तकाः केचित्समाधौ स्थितस्य शिरश्छेदादिदुःखेन स न विचाल्यत इत्याहुस्तच्च न घटते, देशांतरे मृतपुत्रमरणश्रवणरहितस्तेन दुःखेन स न विचाल्यत इतिवदत्र दुःखानुभवरहितो न विचाल्यते चेदश्रुतपुत्रादिमरणो यः कोऽपि न विचाल्यत इति न चित्रम्, तस्मात् प्रारब्धकर्मणां भोगादेव क्षयः, भोगस्त्वहंकारशबलितप्रतिबिंबस्यैव येन कृतं तेन भोक्तव्यमिति न्यायात्तथा सति निरहंकारिणोऽपि बुद्धिस्तु प्राचीनैव, तया स भोगो ज्ञायतेऽपि मया भुक्त इति न मन्यते इत्येव विशेषस्तथात्र श्रुतिभिर्गुणविगुणान्वयान्न वेत्तीति द्वयमपि संभाव्य स्फुटीक्रियते । तत्र सुखं दुःखं च द्विविधम् । आभिमानिकं दैहिकं च । तत्र दैहिकमपि तत्त्वतस्त्वभिमानमूलकमेव तथापि विगताभिमानिनामपि दैहिकस्य सुखदुःखभोगस्य दुर्वारत्वात्पृथगुच्यते । तत्र पुत्रकलत्रादिदुःखेन दुःखं सुखेन सुखमाभिमानिकं निरभिमानिनां तददर्शनात् ।

---

१ बृ. ३।४।६। २ भ. गी. ६।२२।

तथैव दैहिकं च यत्तरुणः स्थूलः सुरूपोऽहमिति सुखं जरठः कृशः कुरूपोऽहमित्यादि दुःखं च न निरभिमानिनां दृश्यते तच्चाभिमानिकांतर्भूतम् । यच्च कंटकशस्त्रादिजनितक्षतव्रणशूलामयादि क्षुत्तृट्क्लमादिदुःखं तन्निरभिमानिनामपि दुर्वारम् । यच्च स्रक्चंदनवनितादिभोगजनितं सुखं तदस्योदिते सूर्ये दीपस्य प्रकाश इव भवति, तथापि दीपे प्रकाशो नास्तीति वक्तुं न शक्यते, एवमात्मसुखानुभवसंपन्नस्य यद्यपि तत्सुखाय न भवति तच्च सुखमात्मसुखमेव, तथापि भोगो दुर्वारः स च येन कृतं कर्म तेनानुभूयते, तच्चाहंकर्तेत्यहंकारशबलितेन प्रतिबिंबचैतन्येन कृतं तेनैवानुभूयते तच्चोपाधिजले प्रविष्टे बिंबसूर्ये प्रतिबिंबं बिंबैक्येन वर्तते, तथापि भोगसमये प्रारब्धभोगकालवायुकृताहंकारकल्लोलः प्रलयशेषादिव पूर्ववदाविर्भवति, प्रतिबिंबं तु सपद्येव सत्युपाधावाविर्भवत्येवमाविर्भूयांतःकरणजलेऽहंकारतरंगे पुनर्लीने नाहंकारो न प्रतिबिंबं तत्र दृश्यते, पुनर्बिंबात्मना बुद्धिः स्वसुखानुभवत्वेनैव वर्तते । यथा च वक्ष्यत्येकादशस्कंधे भगवानुद्धवाय—'**करोति कर्म क्रियते च जंतुः केनाप्यसौ चोदित आनिपातात् । न तत्र विद्वान्प्रकृतौ स्थितोऽपि निवृत्ततृष्णः स्वसुखानुभूत्या**' इति । जंतुः कर्म करोति विक्रियते च जंतुरेवेत्येवकारार्थे चकारः । अयमर्थः—जंतुर्जडोपाधियुतो जीवः कर्म करोति स जंतुरेव तत्कर्मफलप्राप्तेन देहेन विक्रियते सुखदुःखादिविकारान्प्राप्नोतीत्यर्थः । एवं सर्वसाधारणकर्मकर्तुः कर्मपरिपाकभोग उक्तस्तथैव चरमदेहवतो ज्ञानिनोऽपि, किंतु '**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ**' इति क्रियमाणसंचितयोरविद्यमानत्वात् जन्मांतरीयप्रारब्धासंभवात् यः प्रस्तुतमत्र कृतकर्मभोग उक्तः स यावत्स देहो विद्यते तावदेव तस्येत्याह—आनिपातादिति देहपातपर्यंतमेव, प्रारब्धकर्मणां भोगादेव क्षय इति निर्णीतत्वात् । ननु तर्हि करोति कर्म क्रियते च जंतुरित्यनेन जीवन्मुक्तस्य ब्रह्मात्मतां प्राप्तस्य यदि विक्रिया तर्हि जडस्य भोगाभावादीश्वरलक्ष्यांशस्य भोग इति सिद्धमिति चेन्नेत्याह—न तत्र विद्वान्प्रकृतौ स्थितोऽपीति । प्रकृतौ स्थितोऽपि दग्धपटप्रायजीवोपाधावेवास्थितोऽपि तस्योपाधेर्निवृत्ताविद्यत्वाद्गताहंकारत्वाद्विद्वानयं बिंबात्मा न तत्र विक्रियत इत्यनुषंगः । यस्मात्करोति कर्म स एव जंतुर्विक्रियत इति पूर्वमेव प्रतिश्रुतत्वात् कर्मकर्ताहंकर्तेत्यभिमानयुक्तः प्रतिबिंबात्मा स एव निवृत्तायामविद्यायां सुषुप्ताविवात्र तुर्यावस्थायां बिंबे लीनप्रायोऽपि भोगसमये पुनराविर्भूय बुद्धेर्निवृत्ताविद्यत्वान्मिथ्यायं भोग इति जानात्यपि सत्यधिया कृतकर्मणा तत्तद्भोगं प्राप्नोतीत्यभिप्रायः ।

ननु मैवं प्रतिबिंबस्य बिंबलीनस्य स्वतः पृथगाविर्भवितुमशक्यत्वान्निवृत्ता-

---

१ भा. स्कं. ११।२८।३०। २ ब्र. सू. ४।१।१३।

विद्याया बुद्धेर्बिंबात्मना जीवितत्वादहंकारस्य प्रतिबिंबग्राहकोपाधेरभावादसंभावितोऽयमर्थ इति चेत्संभावयन्नाह—केनाप्यसौ चोदित इति। केनापि यथाकालं कर्मफलदातुरीश्वरेणासौ जंतुरहंकारयुक्तः प्रतिबिंबात्मा चोदितः प्रेरितः पृथक् कृतः सन् विक्रियत इत्यनुषंगः। अयमर्थः—ईश्वरलक्ष्यांशैक्येनायं विद्वान्निवृत्ताविद्यया बुद्ध्या जीवन्मुक्तो वर्ततेऽपि स्ववाच्यांशयुक्तः सर्वज्ञः कर्मफलदाता ईश्वरः कर्मफलभोगसमये सृष्ट्यादौ प्रकृतेर्महान्महतोऽहंकारमिवास्योपाधेरहंकारं पृथक्कृत्य तस्मिन्प्रविश्य पुनः प्रतिबिंबमहंकारयुक्तं करोति स जंतुर्येन कर्म कृतं स एव विक्रियते न तत्र विद्वान् बिंबात्मा प्रकृतौ निवृत्ताविद्योपाधौ स्थितोऽपि विक्रियत इत्यनवद्यं, सर्वं संभावितमिति भावः। ननु प्रलये तत्सृष्ट्वा तदेवानुप्राविशदित्येकदा प्रविष्टस्य पुनः प्रवेशो वक्तुमयोग्य इति चेन्नायं नियमः, प्रतिसुषुप्तौ बिंबलीनस्य प्रतिबिंबस्य पुनर्जागरादौ प्रवेशयोगात्। '**योंऽतः प्रविश्य मम वाचमिमां प्रसुप्तां संजीवयति**' इत्यादि सर्वत्र वर्णितत्वात्। ननु प्रारब्धकर्मसमये भवतु नामैवं, येनाहंकारयुक्तेन प्रतिबिंबेन कृतं कर्म तेनैव भोक्तव्यमिति नियमस्य न्यायसिद्धत्वाल्लीनस्य प्रतिबिंबस्य साहंकारस्य भोगसमये पुनराविर्भावोऽप्यस्तु नाम, तत्र केनापि ईश्वरेण प्रेरित आविर्भवतीत्येव कुतोऽयं नियमः? स्वयमेव विद्वान्सुखेच्छया सुखं मे भूयादित्याद्यहंकारमाविष्करोतु विरक्तस्यापि बुद्धिः कर्मानुसारिणीति न्यायात्। तत्र प्रतिबिंबत्वेनाश्नातु सुखभोगेच्छयाविर्भूतस्य दुःखभोगोऽपि स्यादेवेति चेत्तत्राह—निवृत्ततृष्ण इति। ततस्तु केनापि चोदित इत्येव तत्त्वम्। ननु कुत एवं निवृत्ततृष्ण इत्यपेक्षायां हेतुमाह—स्वसुखानुभूत्येति। न हि प्राप्तस्वरूपसुखानुभवानां भोगेच्छा संभवतीत्यर्थः। श्रुतात्मनामपि येषां भोगेच्छा ते तु कुयोगिनो न तेषां सम्यक् साक्षात्कारः। '**कुयोगिनो विहता ह्यंतरायैर्मनुष्यभूतैः**' इत्याद्युक्तत्वात्तद्विलक्षणत्वेनास्योक्तत्वान्न भोगेच्छा वक्तुं शक्यते। ननु श्रीधरार्यैर्व्याकृतमिदं पद्यं न तत्रायमर्थो दृश्यत इति चेत् '**तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबंती**'ति न्यायेनास्तु केषांचित्स एवार्थः संमतः, किंत्वस्मिन्प्राचीनमतानुसारे निगमसारे भगवता न्यायाम्नायसिद्ध एवार्थो व्याक्रियते। श्रीधरार्यैरत्र व्याकृतं तदेवम्। ननु विदुषामपि सर्वथा कर्म दुष्परिहरमिति पुनः संसारः स्यादत आह—करोतीति। विदुषोऽन्योसौ जंतुर्देह एव भोजनादि कर्म करोति क्रियते च तेन कर्मणा पुष्ट्याद्यपि प्राप्नोतीत्यर्थः। केनापि संस्कारादिना चोदितः सन्। विद्वांस्तु प्रकृतौ देहे स्थितोऽपि तत्र कर्मणि न विक्रियते निरहंकारित्वात् हर्षविषादादिभिः संसारं न प्राप्नोतीति। अत्र जंतु-

१ भा. स्कं. ४।९।६। २ भा. स्कं. ११।२८।२९।

शब्दो विदुषोऽन्योऽसौ जंतुर्देह एवेति व्याकृतोऽप्येवं न घटते । जंतुशब्दस्य सर्वत्र सजीवदेहविषयप्रयोगश्रवणाद्यपि व्युत्पत्त्या साध्यते, तथापि घटो जंतुः पटो जंतुर्मृतदेहो जंतुरिति कवीनां मुनीनां च क्वचित्प्रयोगो न दृश्यते, ततस्तु जंतुः प्रतिबिंबचैतन्ययुक्तो देह इत्येवार्थः । व्युत्पत्त्या देह एव यदि गृह्यते, तथापि न तत्र विद्वान्विक्रियत इत्यनेन ज्ञानिनो भोगो न संभवतीति सिद्धम् । तथा चेज्ज-डस्य सुखदुःखानुभवाभावात् ज्ञानिनो निवृत्ताविद्योपाधौ स्थितचैतन्यस्य च भोगो यदि न स्यात्प्रारब्धकर्मणां भोगादेव क्षय इत्यसिद्धं स्यात् । भोगो नाम सुखदुःखस्पर्शस्तदभावे को नाम भोगः? तस्माज्जडो देहो विक्रियते स जंतुरित्यसिद्धम् ।

ननु नात्र पूर्वकर्मफलभोगविषयत्वेनेदं पद्यं व्याकृतं, किंतु करोति कर्म क्रियते च जंतुरिति क्रियमाणविषयत्वादिति चेत्प्रारब्धभोगाय विद्वान्विक्रियत एवेति तु सिद्धम्, नेति चेद्भोगो न स्यात्, भोगे सत्यस्य देहस्य विक्रिया प्रारब्धमंतरा न घटते तदितरभोगासंभवात् भोगाभावे देहविक्रियाया अघटनाद्भो-गस्यात्मधर्मत्वाज्ज्ञानिन आत्मज्ञानिनो देहो विक्रियत इति तावत् सिद्धे विशेषं विधत्ते तत्र विद्वानिति, तस्मात् करोति कर्म इत्यनेन क्रियमाणं करोतीति चेत्क्रियत इति न स्यात् विक्रिया स्थौल्यकार्श्यादि पूर्वकर्मानुसारिणी, न क्रियमाणेन कर्मणा ज्ञानिनः शरीरस्य स्थौल्यादिविक्रिया संभवति, अतस्तस्य प्रारब्धकर्मभोगमात्रं नान्यत् । स्थौल्यकार्श्यादिविक्रियाया भोगाधीनत्वात्तच्च न घटते, तस्मात् प्रारब्धकर्मफलभोगविषय इत्येव सिद्धम् । किं च केनाप्यसौ चोदित इत्यनेन संस्कारादिना प्रेरित इत्यपि न घटते संस्कारस्य जडत्वात् स्वत उद्बोधासंभवात् संस्कारचोदनाया ईश्वराधीनत्वात् 'धियो यो नः प्रचोदयात्'[1] इति श्रुतेः संस्कारोद्बोधकत्वमेव बुद्धिप्रेरकत्वं न सर्वथा पापादाविति वक्तुं शक्यते । दुःखफलत्वादीश्वरस्य नैर्घृण्यापत्तेः किंत्वर्को दृष्टिं प्रकाशयति तत्र स्थूलसूक्ष्मदृशा जनो दृष्ट्यनुरूपं पश्यति एवं संस्कारानुरूपे प्रवृत्तिनिवृत्तिमार्गे बुद्धिं योजयति, तया बुद्ध्या यथा यथा वर्तते तथा तथा फलं तस्मै परमेश्वरः प्रयच्छतीत्येतावता बुद्धिप्रेरकत्वं च कर्मानुरूपफलप्रदत्वं च नैर्घृण्यवैषम्यराहित्यं चेश्वरस्येति निगमरहस्यम् । तथा सति ज्ञानिनः संस्कारप्रेरक ईश्वरः, संस्कारः प्राचीनकर्मानुरूप एव, तस्य देहोऽपि प्राचीनकर्मफलभोगायैवावशिष्टस्तस्याचरणं तु प्रारब्धभोगद्वारा तत्कर्मक्षयायैव, तथा सति तस्य क्रियमाणस्य प्रारब्धेतराभावा-द्बुद्धिः कर्मानुसारिणीति न्यायात् प्रारब्धभोगायैव केनापीश्वरेण प्रेरितः सन् विक्रियते इत्येवार्थः । अत एवानिपातादिति क्रियमाणाभावाद्देहांतरराहित्यात्प्रारब्ध-

१ ऋ. सं. ३।४।१०।

भोगविषय एवायं श्लोको न क्रियमाणविषयः। ननु वचनादानगमनविसर्गानंदादि क्रियमाणं कुतो न स्यादिति चेत्तस्य प्रारब्धकर्मफलानुरूपमेव वचनं यैः सह संभाषणं तैरेव सह तदितरभगवद्गुणकीर्तनादिवचनं न लौकिकज्ञानोपयोगितया यत्र गमनं तत्रैव गच्छति यद्ग्राह्यं तदेवाददाति यत्प्रारब्धलब्धमश्नाति पिबति तदेवोत्सृजति यत्र कामभोगः प्रारब्धभोगरूपस्तत्रैवानंदं क्षुद्रमपि दुर्निवारत्वादाप्नोत्येव, यद्यप्येवमेवाज्ञोऽपि किंत्वहं कर्तेति कर्तृत्वाभिनिवेशेन बद्धो भवति नवीनं कर्म करोतीति तस्य क्रियमाणं स क्वचित्संकल्पादिना विक्रियते स क्वचित्पूर्वकर्मानुरूपसंकल्पविकल्पैरहंकारयुक्तो विक्रियते तस्य देहः क्वचिद्धर्मविपादैर्विक्रियतेऽपि न विद्वान् कुतस्तरां तस्य देहः ? न च बध्यते कर्त्रात्मत्वाधिगमात्। एवं सति यदि देह एव विक्रियते न विद्वानिति चेद्भोगो न स्यात्। न च क्रियमाणकर्मणा देहविक्रिया घटते किंतु प्रारब्धेनैव, तत्र यदि विद्वान् भोगीति चेन्न तत्र विद्वानित्यत्र विरोधापत्तिस्तस्मात् 'करोति कर्म क्रियते च जंतु'रित्यनेन यो जंतुः कर्म करोति स एवाश्नन्विक्रियते ततः केनापीश्वरेण चोदित आविर्भूय तद्भुनक्तीत्येव भगवता व्याकृतोऽर्थः समंजसः। किं च क्रियमाणकर्मकर्तृत्वाभिनिवेशस्यास्मिन्नेवाध्यायेऽस्मिन्नेव प्रकरणे '**तिष्ठंतमासीनमुत व्रजंतं शयानमुक्षंतमदंतमन्नम्। स्वभावमन्यत्किमपीहमानमात्मानमात्मस्थमतिर्न वेद ॥**'[1] इति पूर्वमेवोक्तं तत्र न वेदेत्यनेनाहंकर्तृत्वाभिमानराहित्यमात्रत्वात् प्रारब्धकर्मभोगस्यैव प्रकृतत्वादज्ञस्याहं भोक्तेति बीजादंकुर इवोत्तरत्र ज्ञानिनो दग्धबीजस्य न कर्मफलमिति भोगजनककर्मोत्पत्त्यभाव उक्तः, किंतु विक्रियाया देहस्य प्राचीनकर्मफलभोगानुरूपा सा चिज्जडयोगं विना न संभवतीत्यतः विदुषोऽन्योऽसौ जडो विक्रियत इत्यर्थो न योग्यः, न च जंतुशब्दः केवलजडमात्रविषयस्ततोऽयमर्थ एव न घटते निरहंकारित्वादिति हेतोरिति चेन्मया भुक्तमिति न मन्यते, भोगसमये सुखदुःखज्ञानं दुर्वारं तदन्यथा भोगासंभवात्तथा सति विक्रियत इति सिद्धं, भोगः प्रतिबिंबस्यैव न बिंबस्य देहमात्रव्यापकत्वाज्जगद्व्यापकत्वानुभवसंपन्नस्य बिंबैक्याद्भोगसमये पृथगाविर्भावो दुर्वारः येन कृतं तेन भोक्तव्यमिति न्यायात् 'करोति कर्म क्रियते च जंतु'रित्येवार्थः समंजसः, किं बहूक्त्या, ततस्त्वलमतिविस्तरैः। प्रकृतं तु यः कर्म करोति स एव जंतुर्विक्रियते तस्माद्दुर्वारः प्रारब्धभोगस्तु प्रतिबिंबान्वितस्याहंकारस्यैव न बिंबात्मनस्तत्राहंकारराहित्येऽपि सुखमिति दुःखमिति भोगज्ञानमेवाहंकारपुरःसरं ततो दुर्वारं तत्राहंप्रतीतिभोगस्यात्मविषयत्वात्, किंतु तदुत्तरकाले तदभाव एव ततस्त्वदवगमी तयोर्न वेत्ति न त्वज्ञस्येव पूर्वकर्मफलभोगेऽप्यहंकारयोगान्न वेत्ति

१ भा. स्कं. ११।२८।३०।

भवदुत्थशुभाशुभयोर्गुणविगुणान्वयानिति श्रुतिभिः स्तुतो भगवान्। न च त्वदवगमी विधिकिंकरोऽपीत्याहुः—तर्हि न देहभृतां च गिर इति। तर्हि तदानीं देहभृतां देहाभिमानिनां विषयभूता गिरो वेदश्रुतयो विधिनिषेधरूपा न वेत्तीत्यनुषंगः। विधिनिषेधातीतत्वात् 'यत्पूर्णानंदबोधस्तद्ब्रह्मैवाहमस्मीति कृतकृत्यो भवति' इति श्रुतेः। तथा च श्रुतयः 'एतमुभे एव तेन तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे एवैष एते तरति नैनं कृताकृते तपतः' इति। तदुक्तं भगवता 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते' इति। ननु मदीयस्यैव सम्यक्साक्षात्कार इति कुतोऽयं नियम इति चेत्तत्राहुः—यतस्त्वमपवर्गगतिरिति। अपवर्गस्य गतिः प्राप्तिर्यस्मात्स तथा त्वं यतस्ततस्त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयानित्युच्यत इति यच्छब्दात्तच्छब्दग्रहणम्। 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्' इति श्रुतेः। ननु तर्हि श्रुतास्मभिर्वेदांतमहावाक्यैः श्रुतो यश्चिदात्मा स एवाहं तावता त्वपवर्गगतिरहं तैः श्रवणभृत एव तथापि कुतस्तेषां वैराग्यप्रदोऽहं न भवामि, यतस्ते कामजटोद्धरणे क्षमा न भवंतीत्युच्यते, केन वा विशेषेण त्वदवगमी न वेत्तीत्यादि। मदीयस्याहं ज्ञानवैराग्यादिप्रदो भवामि, यतस्तेन परिपाकेन प्रारब्धभोगमपि न वेत्ति कुतस्तरां कामापेक्षेत्यपेक्षायामाहुः—अनुयुगमन्वहं सगुणगीतपरंपरया श्रवणभृतो मनुजैरिति। अन्वहं सगुणगीतपरंपरया मनुजैः श्रवणभृतः अन्वहं प्रत्यहं सगुणस्य गीतस्यावतारचरितस्य परंपरया श्रीमन्नारायणब्रह्मनारदवेदव्यासशुकसूतादिप्रमुखपरंपरा श्रीमद्भागवतादिरूपा तया मनुजैः श्रवणभृतः श्रवणमार्गेण हृदि धृतः। श्रीमद्भागवतश्रवणेन त्वं तेषां प्रसन्न इत्यर्थः। तदुक्तं प्रथमे द्वितीयपद्ये 'किंवाऽपरैरीश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषिभिः' इति। मनुजैरित्यनेन त एव मनुजा यैः सगुणगीतपरंपरया श्रवणभृत इत्यर्थः। मनुजदेहसाफल्यात्। 'त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः। अतो धर्माणि धारयन्। विष्णोः कर्माणि पश्यत' इति श्रुतेः। भो गोपा इंद्रियपालकाः, मनुजदेहसंबंधिनां श्रोत्रवागादींद्रियाणां साफल्यमिदमेव यद्विष्णोरवतारचरितश्रवणकीर्तनादि ततस्तस्य धर्मान्धारयन् विष्णोस्तस्य कर्माणि पश्यत, इत्यनेन मनसा ध्यानादिना मनआदीनां च साफल्यं सूचितमित्यलं, पूर्वत्र श्रुतेर्व्याकृतत्वात्। एवमहरहः

---

१ परमहंस. ३। २ बृ. ४।४।२२। ३ भ. गी. ३।१७। ४ का. २।२३। ५ भा. स्कं. १।१।२। ६ ऋ. सं. १।२२।१७।

संध्यामुपासीतेति द्विजवर्णत्रयस्य संध्याविधेरावश्यकवल्लोपाः विष्णोः कर्माणि पश्यतेति मनुजमात्रविषयोऽयं विधिरिति दीर्घदर्शिनो ये मनुजास्तैरन्वहं सगुणगीतपरंपरया त्वं श्रवणभृत इतीत्यादिश्रुतिभिरुक्तं तत्र सगुणगीतपरंपरयेत्यनेनाविद्याध्वंसस्य गुणैकमूलत्वात्, नहि गुणान्मिथ्याफणिनाश इतिन्यायादविद्याधिष्ठानान्निर्गुणान्नाविद्याध्वंसः किंतु गुणज्ञानेन फणिनाश इति न्यायाद्विद्ययैवाविद्यावरणभंगस्तस्याश्चावस्तुत्वान्मृदं विना घटस्य घटसाध्यकार्यक्षमताभाववत्स्वतस्तदसंभवाद्विद्याधिपतेस्तव श्रवणोपलक्षितश्रवणादिभक्त्यैवाविद्याध्वंस इति सूत्रयंति। तत्र शुद्धसत्त्वस्य विद्यारूपत्वात्सत्त्वेन गुणेन सहितो जगदात्मा त्वं सगुण एक एव रजस्तमोगुणमिश्रोपाधिराहित्यादिति भावः। तस्य सगुणस्य तव गीतस्य परंपरयेत्यनेन रामकृष्णाद्यवतारचरितस्य लोके प्रज्ञानिपुणैरहिरावणमहिरावणादिकल्पितप्रबंधैः कल्पितस्य श्रवणं निवारितं, तस्मात्परंपरागतपुराणमुनिवाक्यविख्यातं सगुणश्रवणमेव न्याय्यमिति सदाचारमुखेनोपपादितं द्रष्टव्यम्। कथंभूतया सगुणगीतपरंपरयाहं श्रवणभृत इत्यपेक्षायामाहुः—अनुयुगमिति। प्रतियुगं यथा स्यात्तथा तयेत्यर्थः। पृश्निगर्भवराहनृसिंहरामकृष्णबुद्धकल्क्याद्यवताराणां कृतादियुगभेदेन वर्णितत्वात्। यद्वा युगानुरूपम्। यथा च वक्ष्यत्येकादशे करभाजन आर्षभो जनकं प्रति—'कृते[1] शुक्लश्चतुर्बाहुर्जटिलो वल्कलांबरः', 'त्रेतायां[2] रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः' इति, 'द्वापरे[3] भगवान् श्यामः पीतवासा निजायुधः' इति, 'कृष्णवर्णं[4] कलौ कृष्णं सांगोपांगं सपार्षदम्। यज्ञैः संकीर्तनप्रायैर्यजंति हि सुमेधसः' इति, 'कृतादिषु[5] प्रजा राजन् कलाविच्छंति संभवम्। कलौ खलु भविष्यंति नारायणपरायणाः' इति, 'कलिं[6] सभाजयंत्यार्या गुणज्ञाः सारभागिनः। यत्र संकीर्तनेनैव सर्वः स्वार्थो हि लभ्यते' इत्याद्यनुयुगमित्यनेन कल्पादिषु नामसंकीर्तनादिनापि त्वं भृत इति श्रवणोपलक्षितकीर्तनादिना च त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयानित्युक्तं भवतीति भावः। तत्र मनुजैः जनैः श्रवणभृतः सदाचारमुखेनेति शेषः। उपदेश्यत्वाद्बहुषु बहुवचनं। किं बहूक्त्यात्र नवीनशास्त्रप्रवर्तकाः केवलाव्यक्तोपासनया मुक्तिरित्याहुस्तदसिद्धमिति श्रौतः सिद्धांतोऽयं न्यायाम्नायसिद्धः। स च चतुर्थश्लोकव्याख्यायां स्पष्टतयात्र श्रीमता भगवता नित्यमुक्तेन निजचरणशरणगिरा संग्रहत उपपादित एवालमतिविस्तरैः॥४०॥ (२७)॥

---

१ भा. स्कं. ११।५।२१। २ भा. स्कं. ११।५।२४। ३ भा. स्कं. ११।५।२७। ४ भा. स्कं. ११।५।३२। ५ भा. स्कं. ११।५।३८। ६ भा. स्कं. ११।५।३६।

त्वमपवर्गगतिः श्रवणादिना हृदि धृतो मनुजैरिति तावकः।
अवगमी भवदुत्थफलान्वयानपि न वेद कुतो विधिकिंकरः ॥ १ ॥
न निर्गुणादावरणस्य भंगो गुणान्न मिथ्याफणिनाशमाहुः।
भक्तिर्न यावच्चिदचिद्विवेकः श्रुतात्मनो भागवतस्य सिद्धः ॥ २ ॥

इति श्रीमद्भागवते श्रुतिकल्पलतायां श्रुतिस्तुतिप्रकरणे सप्तविंशतिपद्यव्याख्यानं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

॥ इति त्रयस्त्रिंशोऽध्यायः ॥

---

# चतुस्त्रिंशोऽध्यायः।

ननु यद्यहं सगुणगीतपरंपरया श्रवणभृतस्तर्हि कियत्संख्या मम गुणा ये श्रवणविषयीभूताः? अथ च कियन्मात्रस्वरूपोऽहं यतो गुणश्रवणेनाहं हृदि धृत इत्यत्र निगमवाक्यमिदं 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि'[1], 'यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदंतरा द्यावापृथिवी इमे यद्भूतं यच्च भविष्यच्च'[2], 'सत्यं ज्ञानमनंतं ब्रह्म'[3] इत्याद्याः श्रुतयो भगवतो गुणानां स्वरूपस्य चानंत्यमुपपादयंत्य आनंत्यात्स्तुतिमुपसंहरंत्य आहुः—

द्युपतय एव ते न ययुरंतमनंततया
त्वमपि यदंतरांडनिचया ननु सावरणाः।
ख इव रजांसि वांति वयसा सह यच्छ्रुतय-
स्त्वयि हि फलंत्यतन्निरसनेन भवन्निधनाः ॥४१॥ (२८) ॥

द्युपतयः स्वर्गादिपतयः। एवशब्दोऽपिशब्दार्थः। तेऽपि अमराश्चिरंजीविनोऽपि अंतं न ययुः कुतोऽन्ये मर्त्या इत्यर्थः। यद्वा द्युपतयः ते न ययुरंतं कुतो मर्त्या इत्यर्थत एव सिद्धे त्वेवकारस्याग्रे सहेति पदेनान्वयः। ननु द्युपतयोऽतं न ययुः, सर्वज्ञत्वाद्ब्रह्माद्याः सर्वज्ञास्तु यास्यंत्यंतमित्याशंक्य कैमुतिकन्यायेन परिहरंति—त्वमपीति। अपिशब्देन त्वं सर्वज्ञशिखामणिर्नित्यमुक्तो ब्रह्मादिजनकस्तेषां वेदविद्याप्रदो गुरुरपि

---

१ ऋ. सं. २।२।२४। २ बृ. ३।८।४। ३ तै. २।१।

यदा नांतं यासि तदा त्वौपचारिकाः सर्वज्ञा न विदुरिति किं वक्तव्यमिति भावः। ननु तर्हि किं नाहं सर्वज्ञ इति प्राप्तं स्वस्वरूपगुणावतारांतज्ञानाभावादित्याशंक्याहुः—अनंततयेति। अंतत्वाभावतया न वेत्सि। यच्चैवास्ति तच्चास्तीति ज्ञानमेव सत् यत् तदस्ति ज्ञानं अतः अंतज्ञानाभावान्न सार्वज्ञ्यभंगो यथा वंध्यासुताद्यदर्शनं न सार्वज्ञ्यं हंति तथा तवांतादर्शनमित्यर्थः। कथमनंतत्वमित्यपेक्षायामादौ देशतो गुणतश्चानंत्यं वर्णयंति—यदंतरांडनिचया ननु सावरणाः ख इव रजांसि वांति वयसेति। तत्र देशतोऽनंतत्वमाहुः—यदंतरांडनिचया ननु सावरणा इति। यदंतरा यस्य स्वरूपमध्ये नभसीव कस्मिंश्चित्परिच्छिन्नेंऽश इत्यर्थः। अंडनिचया ब्रह्मांडकदंबा ननु सावरणाः। नन्वित्याश्चर्ये। अहो पृथिव्यप्तेजोवाय्वाकाशाहंकारमहत्प्रकृतीनामुत्तरोत्तरदशगुणितावरणसहितांडसमूहा यस्य मध्ये संति क्व तस्यांतस्य वार्तेत्यभिप्रायः। तत्रापरिमितस्वरूपे ब्रह्मांडकदंबकोटीनामत्यल्पपरिमितत्वे दृष्टांतमाहुः—ख इव रजांसि वांतीति। आकाशे चंडवायूत्थितरजांसि वांति भ्रमंति तद्वित्। नहि सर्वत्राकाशे रजांसि वांति, किंतु कस्मिंश्चित्परिच्छिन्नेंऽशे, तथापि रजसामानंत्यवदंडनिचयानामानंत्यमिति भावः। स्वरूपे यावद्ब्रह्मांडानां नामरूपविभेदैर्विस्तारतो गंतुमशक्यत्वान्न बुद्धिगोचरत्वं ततस्त्वपरिमेयान्यंडानीति भावः। एतावता स्वरूपानंत्येऽप्यंडनिचयानंत्यात् गुणानामानंत्यं सूच्यते। एकस्मिन्नंडे ब्रह्मण एकस्मिन्नहनि वा कृतानामवताराणां प्रत्यवतारगुणानां च गणना यदा न संभवति क्व तदितरावतारगुणानां सुतरामितरांडकदंबकृतानामंतः? स्वरूपेणावतारैश्च गुणैश्च त्वमनंतः सामग्र्येण बुद्ध्यगोचर इत्यभिप्रायः। एतावता देशतः स्वरूपतो गुणत आनंत्यमुक्त्वा कालत आनंत्यमाहुः—वयसेति। वयसा कालेनापि न ययुरंतमित्यन्वयः। नन्वनंतब्रह्मांडपक्षे केषांचित्स्थितिकाले केषांचिल्लयो यदा तदा **'नासदासीन्नो सदासीत्तदानीं'**[1] इत्यादिश्रुतिविरुद्धत्वान्न घटत इति चेत्तत्राहुः—सहेति सहैव। द्युपतय एवेत्यत्र प्रयुक्तेनैवकारेण नियम्यते, यदंतरांडनिचया ननु सावरणाः ख इव रजांसि वांति सहैवेत्यन्वयः। योगनिद्रया निद्रिते निखिलांडकोटिद्रष्टरि लयस्तस्य योगनिद्रांते द्रष्टृत्वधर्मस्याविर्भावकाले सहैव खे रजांसीवांडनिचयाः सावरणा यदंतरा वांति, यद्ब्रांडानामाधारशक्त्याश्रितत्वाद्भ्रमणासंभवात् वांतीति पदम्, रजांसि वांतीति दृष्टांते रजसां वायुवेगेनोत्थितत्वात्तत्रैवान्वयः। तथा सति यदंतरांडनिचयाः सहैव भवंति तिष्ठंति लीयंत इति शेषः। एतावता यद्यपि गुणानामानंत्यं तथापि **'त्रीणि**[2] **पदा विचक्रमे विष्णुर्गोपा अदाभ्यः। अतो धर्माणि धारयन्। विष्णोः**

१ ऋ. सं. ८।७।१७। २ ऋ. सं. १।२।७।

कर्माणि पश्यत' इति विधिवाक्यैर्भो गोपा इति संबोधनेन गोपानामिंद्रियवतां मर्त्यानामल्पकालजीवितत्वेऽपि श्रवणस्य विहितत्वात्तव गुणलवशेषश्रवणेनापि कृतकृत्या भवंति, जलराशेरानंत्येऽपि कियन्मात्रजलपानात् तृट्श्रमपरिहार इति न्यायान्मनुजैस्त्वं केनापि रामकृष्णादिरूपेण श्रवणभृत इति पूर्वपद्यान्वयाद्भावः सूच्यते, न तु गुणानामंतो न च कार्त्स्न्येन गुणश्रवणक्षमः कोऽपि, तथापि यथाशक्ति भवतो गुणश्रवणकीर्तनादिना त्वत्प्रसादेनावरणभंगो भवतीति—त्वदत्रगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयानिति पूर्वपद्यानुसार्यर्थः । एवं महिमा तव भगवतो वर्णित इत्यभिप्रायः । एवं गुणावताराद्यानंत्येऽपि तल्लयशेषश्रवणेन त्वत्प्रसाद इत्युपपाद्य निर्गुणस्वरूपानंत्येऽपि भ्रमनिवृत्तौ सिंधौ कल्लोललोलत्वराहित्ये स्वतःसिद्धमेवाद्वितीयत्वं, न हि तत्र तरंगस्याद्वितीयत्वात्तदियत्ताज्ञानमपेक्ष्यते इति विवक्षया 'यतो[1] वाचो निवर्तंते' इति श्रुतेः तादृशेऽप्यनंते निर्गुणे गुणवृत्तीनां प्रवेशासंभवात्किमित्यानंत्येप्यैक्यमित्युपपाद्यते श्रुतीनां तत्र प्रवेशाभावादित्याशंक्य श्रुतीनां स्थूलं सूक्ष्मं चेति रूपद्वयं, तत्राद्येन भ्रमनिवृत्तिः, द्वितीयेन सत्त्वोपाधिरूपेण बिंबाकारायितेन प्रतिबिंबैक्येन सम्यक् साक्षात्कारश्च । तत आनंत्येऽपि निर्गुणत्वेऽपि श्रुतयो ब्रह्मणि चरंतीति 'यो[2] वै भूमा तत्सुखम्' इत्याद्याः श्रुतय आहुः । तत्रातन्निरसनमुखेनानंत्येऽप्यैक्यमुपपादयंति श्रुतयः—अतन्निरसनेन भवन्निधना इति । श्रुतयो वयं वेदाः अतन्निरसनेन यत्सत्यज्ञानानंतलक्षणं तन्न भवतीत्यतत्किंत्वसज्जडांतवदित्यतत्तस्य निरसनेनापवादेन तत्त्वसंख्यया प्रकृतिपुरुषविवेकद्वारा चिदचिद्विवेकेनेत्यर्थः । 'इंद्रियेभ्यः[3] परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ महतः[4] परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इत्यादिश्रुतिभिः चिज्जडस्योभयस्योपपाद्यमानत्वात् । अव्यक्तपर्यंतस्य वाच्यांशस्य निःशेषतयोपपादितत्वादव्यक्तात्पुरुषः पर इत्यनेन केवलस्याव्यक्तातीतस्योपपादितत्वात्पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिरित्यनेन ततः किमप्यत्यंतानिर्वाच्यं ब्रह्म यच्छ्रुतिभिरुपपाद्यं न भवति तदस्तीत्यदीर्घदर्शिनां मतस्य खंडितत्वान्निषेधशेषं यत्परबोधकत्वविषये वाचामगोचरं केवलं सत्यादिलक्षणं तस्य च प्रतिपादितत्वादतन्निरसनेन तस्य ज्ञानेन तदितरनिरसनेनेति व्याक्रियते तस्य ज्ञानाभावादतदेतदिति ज्ञानासंभवान्निर्गुणे श्रुतयश्चरंतीति सिद्धम् । तस्मात्तेनातन्निरसनेन

१ तै. २।४।१। २ छा. ७।२३। ३ काठ. १।३।१०। ४ का. १।३।११।

'सत्यं ज्ञानमनंतं ब्रह्म'[1] इत्यादि स्वरूपोपपादनेन तदितरस्य 'अस्थूलमनणु'[2], 'नेह नानास्ति[3] किंचन' इत्यादिश्रुतिभिरसज्जडांतवतोऽपवादेन भ्रमनिवृत्त्या प्रतिबिंबांशस्योपाधेर्लौकिकवैदिकशब्दसूक्ष्मरूपस्य बिंबाकारतया परिणतत्वाद्विंबै-क्यमित्याहुः—भवन्निधना इति । भवति निधनं यासां ता भवन्निधनाः । सत्त्वस्य शब्दरूपेण परिणामं प्राप्यमानस्य निधनं भवदाकारत्वं यदा तदा तु श्रुतीनामेव तत्स्वरूपाकारत्वमिति भावः । यद्यप्युभयशब्दमूलं तत्सत्त्वं तथापि स्वरूपाकारत्वं यदा तदा तु तस्य सत्त्वस्य वैदिकशब्दसंस्कृतस्य लौकिकशब्दनिवृत्तस्य सत्त्वैकमात्र-त्वाल्लौकिकशब्दानां ततः प्रागेव निधनत्वस्य प्राप्तत्वात्स्वरूपाकाराकारिते सत्त्वे श्रुतय एव भवन्निधनाः न तत्र लौकिकशब्दवार्ता । 'तं त्वौपनिषदं[4] पुरुषं पृच्छामि' इति श्रुतेः । 'नाऽवेदविन्मनुते[5] तं बृहंतं' इति श्रुतेर्लौकिकशब्दैस्तत्त्वा-नधिगमात्, ततो यद्यप्युभयशब्दमूलं सत्त्वं तथापि श्रुतय एव भवन्निधना इत्युक्तम् । एतावता सत्त्वस्य चैतन्याश्रयेण शब्दरूपेण परिणम्यमानत्वाद्यदा सत्त्वं निर्गुणचैतन्ये चरतीति सिद्धं तदा तु तदेव शब्दसूक्ष्मरूपमिति पूर्वत्र सिद्धं, तस्मा-च्छ्रुतयो निर्गुणे चरंत्यतस्तत्रैव सत्त्वे स्वरूपाकाराकारिते शब्दस्फुरणराहित्याल्लयश्चे-त्येतावता त्वनंतत्वेऽपि निर्गुणत्वेऽपि श्रुतयो ब्रह्मणि चरंत्येव तत एव तमनुभव-माहुरिति स्फुटीकृतम् । यच्च 'यतो[6] वाचो निवर्तंते अप्राप्य मनसा सह' इत्यादि तत्र तत्र वाचां निवर्तनत्वं तत्स्थूलरूपेण, न सूक्ष्मत्वेना-नुभवे श्रुतयो न चरंतीति वक्तुं शक्यते । 'यत्र[7] नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति श्रुतेः स भूमेति तच्छब्देन भूमत्वाभिधानेन तदितरदर्शनराहित्येऽपि भूम्नः सुखस्वरूपत्वात् 'यो[8] वै भूमा तत्सुखं' इति तत्र भूमसुखस्याभिधानात् यतो वाचो निवर्तंते तस्याप्यनुभवस्योपपादितत्वात्, ब्रह्मणि निःशब्दे तु न शब्दवृत्तिरूपाः श्रुतयश्चरंत्येतावदेव किंतु यत्र नान्यत्पश्यति नान्य-च्छृणोतीत्यनेन सत्त्वं स्वरूपेतरं किमपि न पश्यति न शृणोति न विजानाति तदेव श्रुतीनां सूक्ष्मरूपं तत एव खलु सत्त्वं तदेव स्थूलशब्दरूपतां प्राप्य यत्र नान्यत्प-श्यतीत्याद्युपपादयंति 'यन्मनसा[9] ध्यायति तद्वाचा वदति' इति श्रुतिसिद्ध-न्यायात्, तत एव भवन्निधना इति साक्षात्कारे सत्त्वरूपेण श्रुतीनामेव स्वरूपाकार-परिणाम इत्युक्तम् । न च वाच्यं मुक्तौ जीवोपाधिनाशे श्रुतीनां नाशो दृश्यते ततो नैवमिति । जीवोपाधेर्मायिकत्वेऽपि तन्नाशेऽपि मायाया इव तदितरजीवोपाधि-रूपेण विद्यमानत्वं तथेश्वरोपाधिसत्त्वरूपेण वेदा नित्या एव, शब्दरूपपरिणामशीलस्य

---

१ तै. २।१। २ बृ. ३।८।८। ३ बृ. ४।४।१९। ४ बृ. ३।९।२६। ५ तै. ब्रा. ३।१२। ६ तै. २।४।१। ७ बृ. ४।५।१५। ८ छा. ७।२४।१। ९ केन. ५।

सत्त्वस्य तु नाशस्ततोऽनवद्यम्। यत एवं तत एव 'ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः कथं चरती'ति परिक्षित्प्रश्नस्यैतत्प्रकरणसूत्रप्रायेण 'बुद्धींद्रियमनःप्राणान् जनानामसृजत्प्रभुः' इत्यादि यदुक्तमकल्पनाय स्वरूपसाक्षात्काराय बुद्धींद्रियमनः-प्राणांश्चासृजत्, यतः सत्त्वं बुद्धिसंज्ञितमिंद्रियमनःप्राणानां नैश्चल्ये स्वरूपाकारं परिणमते ततस्तदेव तस्मिन्नेव चैतन्ये यदि चरति तेन जीवितं मत्परादिस्थानं प्राप्य शब्दरूपेण परिणतं भवति, तस्मात्त्वया निर्गुणे गुणवृत्तयः कथं चरंतीति यत्पृष्टं तत्स्थूलशब्दविषये स्थूलशब्दरूपाः सगुणमुखादेव निःसरंति न निर्गुणे चरंति विरुद्धधर्मत्वाच्छब्दवृत्तिरूपत्वात्तत्सत्यं, किंतु सूक्ष्मेण सत्त्वरूपेणेश्वरचिच्छक्तिरूपेण श्रुतयो निर्गुणेऽपि चरंतीति सूत्रप्रायमुत्तरमुक्त्वा तदर्थमारब्धमिदं श्रुतिस्तुति-प्रकरणम्। एवमेव नारदप्रश्नव्याजेन भगवता नरसहितेन नारायणेन तत्र नारद-प्रश्नानुरूप एव सनकादिभिः पृष्टेन सनंदनेन योगबलेन सर्गादौ श्रुतिभिः स्तुतो भगवान्। तत्रायं संदेहो निराकृत इति श्रुतिस्तुतिमुख्यस्यैतत्परिहारपर्यंत-मुक्तमेतत्प्रकरणम्। तस्माच्छ्रुतयः सूक्ष्मरूपेण निर्गुणे चरंतीत्येव न्यायाम्नायसिद्धः प्राचीनसिद्धांतः। यच्चाहुरात्यंतिकं ब्रह्मणोऽनिर्वाच्यत्वं तत्तु मन्मुखे जिह्वा नास्तीति न्यायेन जिह्वया वर्णानुच्चरन् सा नास्तीतिवत् सत्यादिलक्षणैर्निर्गुण-मुपपाद्य स्ववाचा निर्गुणं वक्तुं शक्यं तदीश्वरस्य वेदगिरोपपादितं, कथमहो न शक्य-मिति सतां संमतं स्यादनिर्वाच्यं सत्सत्यं ज्ञानमनंतं न भवतीति वक्तुमशक्यत्वात्, किंतु परबोधकत्वविषये शाखाचंद्रन्यायेन गुरुणा तत्त्वस्य निषेधशेषस्योपादिश्यमान-त्वादाचार्यमुखं विना शब्दरूपाभिः श्रुतिभिरेवोपद्रष्टुमशक्यत्वादनिर्वाच्यमनिर्देश्यं तच्चात्र श्रुतय एवोपपादयंति। ननु यद्येवमनंते निर्गुणे श्रुतयः साक्षात्कारे समुद्रे तरंगवल्लीयंते अन्यदा सत्त्वरूपेण तस्मिन् चरंतीति चेत्तर्हि किमिति 'तद्विज्ञानार्थं[1] स गुरुमेवाभिगच्छेत्', 'नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ'[2] इति तत्त्वस्य गुर्वेकगम्यत्वमुपपाद्यते भवतीभिरेव किं नोपदिश्यते, तथा च 'नायमात्मा[3] प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यः' इत्यादीश्वरप्रसादैकगम्यत्वं च किमित्युपपाद्यत इत्याशंक्याहुः—श्रुत-यस्त्वयि हि फलंतीति। हि यस्मात्कारणात् श्रुतयस्त्वय्यनाद्यादिगुरौ नित्यमुक्ते फलंति सफला भवंति तस्मात्तव गुर्वीश्वरोभयरूपत्वात् 'तद्विज्ञानार्थं[4] स गुरु-मेवाभिगच्छेत्' इति, गुरूपसदनं च नायमात्मा प्रवचनेन लभ्य इत्यादीश्वर-प्रसादलभ्यत्वादीश्वरभजनं विदधतीत्यर्थः। अयमभिप्रायः—यच्च सत्यादिलक्षणैः स्वरूपं निर्गुणमुपपादयंति तच्च 'यत्र[5] नान्यत्पश्यति नान्यच्छृणोति नान्य-

१ मु. २।१२। २ का. १।२।८। ३ मुं. ३।२।३। ४ मु. २।१२। ५ छा. २४।१।

द्विजानाति स भूमा' इति केवलानुभवे सत्त्वरूपास्तदाकाराकारितया परिणता भवंति, तासां फलं तु जीवानां त्वयीश्वरे श्रवणादिना सुप्रसन्ने गुरुरूपेणाविर्भूते भवति, न हि लोकेऽपि मंददृष्टेर्बालचंद्रावलोकनं संभवति सूक्ष्मतमत्वात् न बालोऽमृतकरः स्वच्छः शिशिरस्तेजोरेखारूप इत्यादिशब्दैः पुस्तकलिखितैः परमुखात् श्रुतैर्वा बालेंदुर्दृग्गोचरो भवति किंतु दृष्टिप्रदो वैद्यश्च नवसुधांशुविद्यः कश्चनेत्युभयोर्योगेन तद्दर्शनं संभवतीति न्यायेन त्वदर्पितकर्मयोगे क्रियमाणे त्वमेव चित्तशुद्धिप्रदश्च नित्यमुक्तत्वाद्भगवत्पदवाच्यत्वान्नित्यज्ञानवैराग्यरूपोपाधित्वात् सर्गादावादावेव ब्रह्मणे वेदविद्याप्रदत्वात् तवैव संप्रदायादिगुरुत्वान्निखिलात्मत्वाद्विश्वरूपत्वाच्च यः कोऽपि वा गुरुस्त्वमेवेत्युभयस्य त्वय्येव संभावितत्वाज्जीवानां यदात्मसाक्षात्कारस्तदा तु श्रुतयः सफला भवंति परबोधकत्वासंभवाद्ब्रह्मानिर्वाच्यमनिर्देश्यमित्युपपादयामो न सर्वथा ब्रह्म निर्वाच्यं 'सत्यं ज्ञानमनंतं ब्रह्म'[1] इत्यादिश्रुतिभिरुपपद्यमानत्वादिति गूढाभिप्रायः ॥४१॥ (२८) ॥

यद्युनीतं देवास्तव तव गुणानामजमुखा-
स्त्वमप्यंताभावात्ख इव हि रजांस्यंडनिचयाः।
सहैवोत्पद्यंते त्वयि खलु फलंति श्रुतिगणा-
स्त्वदाकारा भूत्वा भवति निधनं यांति भगवन् ॥ १ ॥

इति श्रीमद्भागवते श्रुतिकल्पलतायामष्टाविंशतितमश्लोकव्याख्यानं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ इति चतुस्त्रिंशोऽध्यायः ॥

१ तै. २।१।

# पंचत्रिंशोऽध्यायः ।

एवं श्रुतिभिः स्तुतः सर्वेश्वरो हरिरिति सनंदनमुखाच्छ्रुत्वा ततः परं किमकुर्वन्नित्यपेक्षायां नारदंप्रति नारायणाख्यः श्रीभगवानुवाच—

**इत्येतद्ब्रह्मणः पुत्रा आश्रुत्याऽऽत्मानुशासनम् ।**
**सनंदनमथाऽऽनर्चुः सिद्धा ज्ञात्वाऽऽत्मनो गतिम् ॥ ४२ ॥ (२९) ॥**

ब्रह्मणः पुत्राः सनंदनेतरा इत्येतदात्मानुशासनमात्मोपदेशमाश्रुत्य अथोपदेशानंतरं सनंदनमानर्चुः पूजयामासुः । ननु किं तेषां ततः प्रागविद्याध्वंसो नासीद्यत आत्मानुशासनं श्रुत्वा तमानर्चुः इत्याशंक्याह—सिद्धा इति । ते तत्प्रसंगात्पूर्वमपि निवृत्ताविद्या इत्यर्थः । तत्र सनंदनस्य गुर्वंतरस्याश्रवणात् गुरुमुखं विना ब्रह्मविद्याया अघटनात् सर्वेषां तेषां मिथो गुरुशिष्यत्वात्, किंतु सर्गादौ श्रुतिभिः स्तुतो भगवानेव तेन योगबलेनोद्धृत्यात्मानुशासनं यत्रात्मनोऽनुशासनमुपदेशस्तं निरूपयामास न तु प्रथमोपदेशतया तैरश्रुतो ब्रह्मतत्त्वस्य उपदेशः कृत इत्यभिप्रायः । तर्हि किमत्र तच्छ्रुत्वा तमानर्चुरित्यपेक्षायामाहुः—ज्ञात्वात्मनो गतिमिति । आत्मनो मनसो गतिं ब्रह्मणि तदाकारेणावस्थितिमित्यर्थः । निर्गुणे गुणवृत्तयः श्रुतयः कथं चरंतीति प्रश्नस्योत्तरं श्रुतयः सूक्ष्मत्वेन मनोरूपेण ब्रह्मणि चरंतीति ज्ञात्वा इत्यभिप्रायः। वक्ष्यति शुकोऽप्येवम्—

**'इत्येतद्वर्णितं राजन्यन्नः प्रश्नः कृतस्त्वया ।**
**यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि मनश्चरेत् ॥' इति ।**

इममेवार्थं विवृणोति—इतीति ॥ ४२ ॥ ( २९ ) ॥

**इत्यशेषसमाम्नायपुराणोपनिषद्रसः ।**
**समुद्धृतः पूर्वजातैर्व्योमयानैर्महात्मभिः ॥ ४३ ॥ ( ३० ) ॥**

इति श्रुतिस्तुतिरूपं प्रकरणं अशेषाम्नायपुराणोपनिषदां रसः सारं बहुभिः शब्दविस्तरैरनेकयुक्तिचमत्कारैः समाम्नायादिषु समीचीनेषु आम्नायादिषु कर्मप्रशंसार्थवादादीतरकांडेषु यदुपपाद्यं वेद्यं तदत्र सूत्रप्रायैः श्लोकैर्मतांतरनिरासपूर्वकतया विशुद्धबुद्धिभिः स्फुटमधिगम्यत इत्यर्थः । स रसः सनंदनेन कुतो वा प्राप्त इत्यपेक्षायां न कुतश्चिदित्याह—समुद्धृत इति । सम्यगुद्धृत इत्यर्थः । यथा श्रुतिभिर्दुर्मतखंडनतया न्यायोपबृंहणेन वैदिकमतरीत्या सगुणनिर्गुणतया स्तुतो भगवान् स रसो

याथातथ्येन योगबलेनोद्धृत इत्यर्थः। तदुक्तं 'तुल्यवृत्ततपःशीलास्तुल्यस्वीयारिमध्यमाः। अपि चक्रुः प्रवचनमेके शुश्रूषवोऽपरे' इति। श्रुतादेस्तुल्यत्वादुर्वंतरमुखश्रवणपक्षे सर्वैः श्रवणं एकेन प्रवचनं न स्यात्, तस्मादेतत् श्रुतिस्तुतेरश्रुतत्वादेकं वक्तारं चक्रुरन्ये श्रोतारो बभूवुरतः सनंदनेन योगबलेनोद्धृत इति भावः। कथंभूतास्ते वक्तृश्रोतारो यैः समुद्धृत इत्यपेक्षायामाहुः—पूर्वजातैर्व्योमयानैर्महात्मभिरिति। तस्माच्छ्रुतिस्तुतिश्रवणात्प्रागेव सिद्धैः किंतु श्रुतयो गुणवृत्तयो निर्गुणे ब्रह्मणि कथं चरंतीति संदेहे जाते प्रवृत्तोऽयं प्रश्न इति ज्ञातव्यम्॥४३॥ (३१)॥

ननु सिद्धानामप्येतादृशसंदेहस्यासंभावितत्वात्कथं श्रद्धेयमिति चेत् —

**त्वं चैतद्ब्रह्मदायाद श्रद्धयाऽऽत्मानुशासनम्।**
**धारयंश्चर गां कामं कामानां भर्जनं नृणाम्॥४४॥(३१)॥**

त्वं च ब्रह्मणः पुत्रः सिद्ध एव तथापि तव यथा संदेहो जातस्तथा तेषामपीति भावः। ततः किमत आह—त्वं च ब्रह्मपुत्रस्तैर्यथा मनसि धृतं तथा त्वमपीति चकारेण तदात्मानुशासनं श्रद्धया धारयन् कामं यथेष्टं गां चर विहरस्व यथा त्वद्भ्रातृभिर्धृतमित्यभिप्रायः। ननु सिद्धस्य मम कश्चन संदेह उत्पन्नः स तव कृपया निरस्तः किमर्थं तस्यात्मानुशासनस्य धारणयेत्यपेक्षायामाह—कामानां भर्जनं नृणामिति। त्वत्तोऽन्येषां तेभ्योऽन्येषामिति परंपरया नृणां वासनारूपाणां कामानां लिंगदेहानां भर्जनं मुक्तिप्रदमित्यर्थः॥४४॥ (३१)॥

तदेवं भगवदादिष्टो नारदः परंपरया लोके प्रवर्तयितुं जगदाचार्याय श्रीवेदव्यासाय वदिष्यामीति संचिन्त्य तं प्रतिवक्तुं ततो गमनसमये एवं भगवंतं स्तौतीति यद्वृत्तं तद्राजानं प्रति श्रीशुक उवाच—

**एवं स ऋषिणाऽऽदिष्टं गृहीत्वा श्रद्धयात्मवान्।**
**पूर्णः श्रुतधरो राजन्नाह वीरव्रतो मुनिः॥ ४५ ॥(३२)॥**
**नमस्तस्मै भगवते कृष्णायामलकीर्तये।**
**यो धत्ते सर्वभूतानामभवायोशतीः कलाः॥ ४६ ॥(३३)॥**

तस्मै नमः। कस्मै? भगवते ऐश्वर्यादिसमग्रषड्गुणसंपन्नाय कृष्णाय सदानंदायेत्यर्थः। तदुक्तम्—'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' इति। भू सत्तायामिति धातोः। अमलकीर्तये

निर्मला जगदघहरा कीर्तिर्यस्य तस्मै। ननु धर्मसुतं मां त्वं कथं वा सर्वेश्वरत्वेन नमस्करोपीत्याशंक्य स एव त्वमवतीर्णोऽसीति भावेनाह—यस्त्वं सर्वभावानां सर्वे भावा विद्यंते येषां ते सर्वभावाः। सर्वान्देहान् धारयंति ते जीवा इत्यर्थः। तेषामभवाय भवनाशाय। नानायोनिभ्रमणनिवारणायेत्यर्थः। एवं सर्वजीवानां मोक्षाय यस्त्वं उशतीः कमनीयाः कलास्तनवस्ता धत्ते सुरनरमृगमिश्रजलचराकृतिभिरवतरसीति भावः॥ ४६॥

प्रस्तुतमाह—इतीति द्वाभ्याम्—

इत्याद्यमृषिमानम्य तच्छिष्यांश्च महात्मनः।
ततोऽगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे॥४७॥(३४)॥
सभाजितो भगवता कृतासनपरिग्रहः।
तस्मै तद्वर्णयामास नारायणमुखाच्छ्रुतम्॥४८॥(३५)॥

नारायणमुखात् श्रुतं मत्पित्रे द्वैपायनाय वर्णयामास तस्मादहं प्राप्तवानस्मीति पुनरुक्तितया प्रोक्तं द्रष्टव्यम्। तदुक्तं द्वितीयस्कंधे—'इदं भागवतं नाम पुराणं ब्रह्मसंमितम्। अधीतवान्द्वापरादौ पितुर्द्वैपायनादहम्' इति॥४७॥४८॥

प्रश्नोत्तरफलितार्थं वदन्नुपसंहरति—

इत्येतद्वर्णितं राजन्यन्नः प्रश्नः कृतस्त्वया।
यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि मनश्चरेत्॥४९॥(३६)॥

भो राजन्, इति श्रुतिस्तुतिरूपेणैतद्वर्णितम्। किं तत्?। यन्नः प्रश्नः कृतस्त्वया। कथं? यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि मनश्चरेदिति। ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि श्रुत्यर्थसंस्कृतं श्रुतीनां सूक्ष्मरूपरूपं मनो यथा चरेत्तथैतद्वर्णितमित्यर्थः। न च वाच्यं ब्रह्मणि मन एव यथा चरेत्तथैतद्वर्णितमिति। यन्नः प्रश्नः कृतस्त्वयेत्युक्तत्वात्। ब्रह्मणि मनः कथं चरतीति प्रश्ने सत्येवमर्थः स्यात्। तदभावे तदभावः॥ ४९॥

समग्रप्रकरणस्वरसं जीवेश्वरयोश्चाव्यक्तस्य च यान्यभिधानानि तद्विषयं भगवंतमेव ध्यायेदित्याह—

योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरो
यः सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरः शास्ति ताः।

यं संपद्य जहात्यजामनुशयी सुप्तः कुलायं यथा
तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम्॥५०॥(३७)॥

योऽस्योत्प्रेक्षक इति रहस्यम्। प्रपंचस्य यः उत्प्रेक्षकः उत्कर्षेण च प्रकर्षेण चेक्षकः साक्षी उत्कर्षेण सर्वसाक्षितया प्रकर्षेण जीवदृष्ट्या प्रपंचोऽस्ति शुक्तौ रजतवद्-धिष्ठानाज्ञानान्न वस्तुत एवंरूपेण जीववद्द्रष्टाद्युत्प्रेक्षक इत्यर्थः । न जीववत्सत्यत्वे-नोत्प्रेक्षकः । यद्वा जीवानां पूर्वकर्मानुरूपमात्राण्येव शरीराण्येवमेवंकरणीयानी-त्युत्प्रेक्षक आलोचकः। यद्वा जीवानामधिष्ठानाज्ञानशबलितदृष्ट्या मयि गुणे फणि-वज्जगत्करणीयमित्यस्य जगत उत्प्रेक्षक आलोचकः। अत एव वियदादीनामधिष्ठानमेव सृष्ट्यादिरूपेण वर्णयति—य आदिमध्यनिधन इति। अस्य जगत आदिरुत्पत्तिश्च मध्यं स्थितिश्च निधनं प्रलयश्च यः सर्वस्य जगतो घटादिवस्तूनां मृदिवेत्यर्थः। न हि मृत्तिकायां घटः कश्चन पदार्थोऽस्ति, यतस्तु वस्तुतो न पृथक् गणनीयः। आदौ मध्ये विनाशे च मृदेवेतिन्यायान्निखिलजगत्कारणप्रकृतिरपि परमकारणः स्वयमेवेत्याह—योऽव्यक्तजीवेश्वर इति। य एवाव्यक्तो यदा मृदितरो घटो नास्ति तदा घटाकारो-त्पादकः शक्तिविशेषः मृदि वर्तते घटादेर्मृदं विनोपलभ्यमानत्वं नास्तीति । यदा तु ब्रह्ममाययोरैक्यं तदानीं विद्याऽविद्याशक्तिभेदेन स एव जीवश्चेश्वरश्चेत्यर्थः । ननु जीवेश्वरयोरभेदेसति जीवस्य दुःखभोगेनेश्वरस्यापि दुःखभोगो दुर्वारः, उपाधिभेदेऽपि चिदैक्येन दुःखापरिहारात्पादे उत्पन्नं दुःखं तत्रस्थचैतन्यस्यैव न शिरसिस्थित-चैतन्यस्येति वक्तुमयुक्तत्वादथ च जीवेश्वरयोर्नियम्यनियामकत्वं च न स्यादित्या-शंक्याह—यः सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरः शास्ति ताः। यदिदं सृष्ट्वा पुरः चक्रे अनुप्रविश्य ता ऋषिणा शास्तीति पदान्वयः। य इदं पंचभूतरूपं जगत्सृष्ट्वा पुरः देहांश्चक्रे तासु अनुप्रविश्य प्रतिबिंबरूपेण क्रमेण प्रविश्य ताः पुरः ऋषिणा ज्ञाना-वताररूपेण शास्ति विद्योपाधित्वात्। अतः पुरः शास्तीत्युक्तम् । विद्योपाधेरविद्या-शास्तृत्वस्योचितत्वात्। तत्र जडस्य शास्यताऽनुप्रविश्य प्रतिबिंबैश्चेतयित्वा ताः पुर एव शास्ति। यतो द्वितीयस्याभावो यद्यपि तथापि योगमायाचातुर्येण मायामात्रं नान्यत् चिदाभासरूपं चैतन्यं प्रकटीकृत्य विहरतीत्यभिप्रायः । ननु यथाकथंचित् द्वैतं तु सिद्धं तदपरिहार्यं, एतच्च जीवानां नित्यत्वान्नित्यं यन्नित्यं तत्सत्यमित्याशंक्य बिंबनित्यत्वादेव प्रतिबिंबानां नित्यत्वं न स्वतो मुहुः सुषुप्त्यैक्यान्मुक्तस्य न पुनरा-वृत्तितयेति भावेन सुषुप्तिदृष्टांतेन मुक्तिप्रकारमाह—यं संपद्य जहात्यजामनुशयीति। यं बिंबं प्राप्य अजामविद्याविरचितोपाधिं द्वैतभ्रमैकरूपां जहाति त्यजति। उपाधि-त्यागे प्रतिबिंबं बिंबमेव भवतीत्यर्थः। कः? अनुशयी अनुशया आधिव्याधिवासना

विद्यंते यस्यासावनुशयी जीवः । नैतन्मात्रं किंतु मुहुः सुषुप्तावैक्यमिति वदन्नुपाधित्यागे दृष्टांतमाह—सुप्तः कुलायं यथा यं संपद्य जहात्यजामित्यनुषंगः । यं संपद्य प्राप्य सुप्तः कुलायं कौ भूमौ लीयत इति कुलायं नश्वरदेहं यथा जहाति । सुषुप्तौ हि देहस्मरणाभावाज्जीवन्मुक्तस्य देहपातपर्यंतं बुद्धेरप्रमत्तत्वेऽपि विदेहकैवल्यं मोक्षो यदा तदा जीवनं न जानातीत्यजो जीवोपाधेरभाव इत्यभिप्रायः । सुप्तौ बुद्धेस्तमोलीनत्वाद्बिंबप्रतिबिंबयोरैक्यात्कुलायस्य त्यागवज्जीवन्मुक्तस्य सत्त्वैकबुद्धेर्ब्रह्माकारतयावस्थितत्वात्प्रतिबिंबस्योभयत्र बिंबैक्यसामान्यात्सुषुप्तिदृष्टांतः । तथा च श्रुतिः—'खलु सौम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपत्स्याम'[1] इति । सुषुप्तौ सुखमात्रतयावस्थितस्य नोपाधिस्मरणलेशो नित्यानंदानुभूतिसद्रूपत्वात् । ननु सुषुप्तौ बिंबैक्येऽपि यदि पुनरावृत्तिर्दृश्यते तर्हि यस्य मुक्तिरित्युच्यते तस्यापि कुतो न पुनरावृत्तिः स्यादित्यपेक्षायां पुनरावृत्तिराहित्यकारणं तं भगवंतं मुक्तिप्रदमेवं ध्यायेदित्याह—तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिमिति । कैवल्येन केवलत्वेन निरस्ता योनिर्नाना त्रिगुणरूपोपाधिर्येन तम् । अयमभिप्रायः—सुषुप्तौ तमोलीनस्य सत्त्वस्य नहि कैवल्यानुभवः, कुतः ? पंकशबलितजलवदवस्थितत्वात् । तस्मिन्प्रतिबिंबितस्य चैतन्यस्य तदानीं तत्रादर्शनात् बिंबैक्यं । तावता न मोक्षः संभवति । कर्मफलबीजस्य बुद्ध्याख्यसत्त्वस्य बीजत्वभंगाभावात् । मुक्तस्य सत्त्वस्य केवलात्मचैतन्ये तदाकारेण परिणतस्य लयविक्षेपाभावात्तमोरजोरहितस्य वह्निमुखे पतितबीजस्य यथा नांकुरोऽस्तीत्येवं बीजभूतसत्त्वभंगे शरीरांतरोत्पत्तिप्रक्षीणत्वं भवति न पुनरावृत्तिरिति कैवल्यनिरस्तयोनिरित्युक्तं तत आह—हरिमजस्रं ध्यायेदित्थंरूपेण । एतावता तु सगुणं हरिं ध्यायेदित्युक्तं, यः कैवल्यनिरस्तयोनिस्तमित्युक्तत्वात् । तस्माद्यं संपद्य जहातीति निर्गुणं यतोऽधिष्ठानं प्राप्य विवर्तं जहाति तथाप्यधिष्ठानाविद्यानाशस्त्वधिष्ठानविद्ययैव यस्मात् । नहि शुक्त्या शुक्त्यज्ञानरूपस्य रजतस्य नाशः संभवति किंतु शुक्त्यज्ञानेन कृतस्य शुक्तिज्ञानेनैव तावता विद्ययेति सिद्धम्, तस्माच्चावस्तुत्वात्पारतंत्र्याद्विद्योपाधेः सगुणब्रह्मण एवाविद्यानिवर्तकत्वमिति सिद्धम् । यस्मात्पूर्वोक्तक्रमेण सगुणगुणश्रवणकीर्तनादिना तत्प्रसादैकगम्यमात्मतत्त्वं तस्मात्तं ध्यायेदिति भावेनाह—अभयमिति । नास्ति भयं बंधरूपं यस्येत्यभयस्तं नित्यमुक्तं सर्वेश्वरं सगुणं हरिं ध्यायेदित्यर्थः । तत्राजस्रशब्देन जीवन्मुक्तः सर्वदा सगुणभक्तिरेव कर्तव्येति सूत्रयंति—तं कैवल्ययोनिमिति विशेषणेनैव सकृत्साक्षात्कारेणैवाविद्याया निवृत्तत्वाज्जीवन्मुक्तस्य ध्यानचोदनाया असंभावितत्वात्सगुणमेव गुणश्रवणकीर्तनादिना अजस्रं ध्यायेत्

---

१ छां. ६।९।२

साक्षात्कारात्प्राक्, तदनंतरं च ध्यायेद्यथा वयमित्यभिप्रायः। तदुक्तं प्रथमस्कंधे— 'आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे। कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः' इति। नात्र हेतुः किंत्वित्थंभूतगुणो हरिरिति। ये मुमुक्षवो मोक्षमात्रमिच्छंति तद्विषयोऽयं विधिरित्यधिगंतव्यम्। तेषामपरोक्षसाक्षात्कारद्वारा संसारनिवृत्तयेऽश्रमेव हेतुस्ततः परमपि मुक्तेरप्यधिका भगवतो भक्तिस्ततोध्यायेदजस्रं हरिमित्युक्तं द्रष्टव्यम् ॥ ५० ॥

श्रुतिभिः संस्तुतो यद्वत्तथैव व्याससूनुना।
व्याकृतं तं हरिं वंदे येन तद्वामनात्मना ॥ १ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कंधे श्रुतिस्तुत्युपसंहारप्रकरणव्याख्यानं नाम पंचत्रिंशोऽध्यायः ॥ ३५ ॥

॥ इति पंचत्रिंशोऽध्यायः ॥

इति श्रीमद्वामनपंडितकृतश्रुतिकल्पलतानाम्नी वेदस्तुतेर्व्याख्या समाप्ता ॥

## अस्य लेखनसमयनिर्देशः—

शके १८१७ मन्मथनामसंवत्सरे आश्विन वद्य ३ रविवासरे समाप्तमिदं पुस्तकमिति॥

॥ श्रीकृष्णार्पणमस्तु ॥ शुभं भवतु ॥